श्रीशिवः शरणम् ।

# वेणीसंहारम्

नाम नाटकम् ।

कविप्रवरेण श्रीमता भट्टनारायणेन प्रणीतम् ।

संस्कृतचन्द्रिकायाः सूनृतवादिन्याश्च संपादकेन

राशिवडेकरोपाह्वेन श्रीअप्पाशर्मविद्यावाचस्पतिविद्यालङ्कारमहोपदेशकेन

विनिर्मितया बालबोधिन्याख्यया व्याख्यया समुल्लसितम् ।

पुण्यपत्तनवर्तिनि फर्ग्यूसन्विद्यामन्दिरेऽध्यापकपदमधितिष्ठता एम्. ए.

इत्युपाधिधारिणा के. एन्. द्रविडमहोदयेन विरचितया

इंग्रेजीटिप्पन्या च समुद्भासितम् ।




कोल्हापुरे श्रीवेङ्कटेश्वरश्रीजैनेन्द्रयन्त्रालययोः पुण्यपत्तने च

आर्यभूषणजगद्धितेच्छुयन्त्रालययोः संमुद्र्य प्रकाशितम् ।

शकाब्दाः १८३१-१८३२.

SHRI SHIVAS SHARANAM.

# VENISANHARA.

## A DRAMA

BY

SHI BHATTA NARAYANA

WITH

**A Sanskrit Commentary named Balabodhini**

BY

SHRI APPASHASTRI RASHIVADEKAR,
Vidyavachaspati, Vidyalankara, Mahopadeshaka,
Editor Sanskrit Chandrika and Sunritavadini,

AND WITH

## ENGLISH NOTES

BY

PROF. K. N. DRAVID, M. A.,
Fergusson College, Poona.

**Printed at**
Shri Venkateshwar and Shri Jainendra Press, Kolhapur, and Aryabhushan and Jagaddhitechhu Press at Poona.

1909-1910.

श्रीशिवः शरणम्।

# उपायनपत्रिका।

वाग्देवी नैकलीला कलयति ललितं यस्य लास्यं रसज्ञा-
पीठे, यः प्रेमपात्रं जयति भुवि परं सर्वविद्यावधूनाम्।
मूर्तः स्नेहो, नृदेहं श्रित इव विनयः, शीलमेवापि साक्षात्
धर्मो मानुष्यमाप्तस्तनुमदतनु वा पुण्यमग्र्यं य एकः॥

प्रेयान् सखाऽथ सहजः प्रणयी गुरुर्वा
स्वान्तं बहिश्चरमथोच्छ्वसितं मदीयम्।
बाभाति यः क्षितितले सुकृती द्विजन्मा
श्रीमान् समुज्ज्वलयशा जयचन्द्रशर्मा॥

बद्धो दृढं गुणगणैरपि येन काम-
मास्वादयाम्यविरतं प्रमदं महान्तम्।
काश्यां सदैव निवसन्नपि मामकीने
यः सन्ततं मनसि संतनुते विहारम्॥

निर्माय संस्कृतसमुन्नतिमात्रहेतो-
र्विद्वद्वरः सपदि संस्कृतचन्द्रिकां यः।
निर्माय्यमेव समुदारमना व्यतारी-
न्मत्यं गुणैकरसिको नवबान्धवाय॥

सिद्धान्तभूषणं प्राहुर्भट्टाचार्यं च यं बुधाः।
वङ्गभूकण्ठहारे यः प्रस्फुरत्तरलायते॥

सादरं सप्रणामं च सभक्त्युन्मेषमार्पिता।
प्रसूनश्रियमभ्येतु व्याख्येयं तत्पदद्वये॥

इति शिवम्।

विनीतवशंवदस्तदीयः प्रियबन्धुः

श्रीअप्पाशर्मा।

# वेणीसंहारे पात्राणि ।

## पुमांसः ।

**सूत्रधारः**—प्रधानो नटः ।

**पारिपार्श्विकः**—सूत्रधारेण संलापकारी नटः ।

**श्रीकृष्णः**

**भीमः**
**अर्जुनः**
**नकुलः**
**सहदेवः**
**युधिष्ठिरः** } प्रथिताः पाण्डवाः युधिष्ठिरस्तु नाटकेऽत्र नायकः

**जयन्धरः**-(मैत्रेयः) पाण्डवानां कञ्चुकी।

**विनयन्धरः**—दुर्योधनकञ्चुकी ।

**दुर्योधनः**-कौरवेषु प्रधानोऽत्र प्रतिनायक

**रुधिरप्रियः**—पाण्डवपक्षपाती राक्षसः।

**अश्वत्थामा**—द्रोणाचार्यपुत्रः ।

**अश्वसेनः**—द्रोणस्य सारथिः ।

**कृपः**—द्रोणस्य श्यालोऽश्वत्थाम्नो मातुलः।

**कर्णः**—कौरवपक्षीयो वीरः कुन्त्याः कानीनः पुत्रः।

**सुन्दरकः**—कौरवाणां संग्रामवार्ताहरः।

**सूतः**—दुःशासनसारथिः ।

**धृतराष्ट्रः**—दुर्योधनस्य पिता ।

**संजयः**—धृतराष्ट्रसारथिः ।

**बुधकः**—युधिष्ठिरस्य दासः।

**पाञ्चालकः**—पाण्डवानां संग्रामवार्ताहरः।

**राक्षसः** (चार्वाकः)—दुर्योधनस्य सखा युधिष्ठिरस्य प्रतारयिता

## स्त्रियः ।

**द्रौपदी**—पाण्डवभार्याऽत्र नायिका ।

**बुद्धिमतिका**—द्रौपद्या दासी ।

**भानुमती**—प्रतिनायिका दुर्योधनभार्या।

**सुवदना**—भानुमत्याः सखी ।

**तरलिका**—भानुमत्याश्चेटी ।

**दुःशला**—दुर्योधनस्य स्वसा ।

**जयद्रथमाता**

**वसागन्धा**—राक्षसी रुधिरप्रियभार्या।

**गान्धारी**—दुर्योधनमाता ।

**प्रतिहारी**—(दुर्योधनस्य)

**विहङ्गिका**—कौरवपक्षीया दासी।

श्रीशिवः शरणम् ।

# विज्ञप्तिः ।

---

विदितमेव कविप्रवरेण श्रीमता भट्टनारायणेन संग्रथितं वेणीसंहारं नाम नाटकं सर्वेषाम् । यत्किल वीररसभासुरेष्वद्वितीयं नाटकेष्विति समस्वरमेवाभिधीयते विद्वद्भिः । तदेतन्नाटकमागामिनि (१९१०) च तत्परस्मिंश्च (१९११) खिस्तीयाब्दे पी. ई. श्रेण्या अध्येयतया विनियुक्तं मोहमयीविभागीयेन विश्वविद्यापीठेन । तत एव च बालानामवबोधाय व्याख्यातुमिदं सरलसंस्कृतभाषया प्रावर्तिष्महि । आवश्यकत्वं चात्रैंग्रेजीभाषामय्याष्टिप्पन्याः समवगच्छन्तः प्रियसुहृद्भिर्विद्वत्तमैः पुण्यपत्तनीयफर्ग्यूसन्विद्यामान्दिरेऽध्यापकपदं विभूषयद्भिरेम्. ए. इत्युपाधिसमुद्भासितैः श्रीकृष्णरायद्रविडमहोदयैः सानुरागं च सोत्साहं च सादरं च विनिर्माय वितीर्णां सरलां च सरसां च हृदयहारिणीं च न्यवेशयाम टिप्पनीमप्यत्र ।

तत्र तावट्टीकाविनिर्माणे सुविशुद्धं मूलमेकान्तत एवावश्यकम् । नैवं पुनरेतदेवंविधमासादितमस्माभिः प्राचीनमिति निवेदयन्तो विषीदामः । संदृष्टा हि नानाविधेषु पुस्तकेषु नानाविधाः पाठाः । प्राचीनव्याख्याकृद्भिरपि श्रीजगद्धरप्रभृतिभिस्तूष्णीम्भाव एवात्रावलम्बितः कामम् । तत एव चादितः समवलोक्य सप्रयत्नमधिगतानि पुस्तकानि संशोधितं यथामतिमूलमस्माभिः । विशुद्ध एव च प्राचीनपुस्तकसंदृष्टो विनिवेशितः पाठः । क्वचित्पुनर्बहुपुस्तकसंवादीत्यनभिमतोऽप्यस्माकं विनिवेशितः । अतिमात्रं पुनर्विरला एवंविधाः पाठाः । यानि पुनः पाठान्तराणि तानि यथामति विचारितानि व्याख्यायां यथास्थानम् । समालोचितं च साधुत्वासाधुत्वादिकं कारणप्रदर्शनपुरःसरमेतेषाम् । तदे-

तच्छक्यमेव ततस्ततो व्याख्यांशादवबोद्धुं जिज्ञासुभिः । अश्लीलः समुत्कटत-मशृङ्गारवासितो वा सति पाठान्तरे नादृतः पाठोऽस्माभिः । यथा नान्द्या अपरः पाठः । स च यथा 'जयति सनाभिर्जगतां स्वनाभिरम्भोद्भवजगद्वीजः। दामोदरो निजोदरगह्वराविनिविष्टजगदण्डः ॥ अपि च । जयति स भगवान् कृष्णः शेते यः शेषभोगिशय्यायाम् । मध्ये पयःपयोधेरपर इवाम्भोनिधिः कृष्णः। अपि च । उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा, धृत्वा चा-न्येन वासो विगलितकबरीभारमंसे वहन्त्याः । भूयस्तत्कालकान्तिद्विगुणितसु-रतप्रीतिना शौरिणा वः शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥' इति । पद्यत्रयेऽत्र नैवार्हं तृतीयं पद्यमप्रगल्भप्रायाणामपरिसमाप्ताध्ययना-नां च बालानां नयनपथमवतारयितुम् । किं च । सोऽयं नाट्यविदां सामा-न्यतो नियमो यन्नान्द्यां मनाक् सूचनीयः परस्ताद्वर्णनीयो नाटकगतोऽर्थ इति। तस्य च यथा 'निषिद्धैरप्येभि' रित्यादिभिर्नान्दीपद्यैः सूचनं भवति नैवं 'जयति सनाभिर्जगता' मित्यादिभिः । अत एव च नादृतोऽसौ नान्दीपाठोऽस्माभिः । एकदेशु द्वित्रेषु वा स्थानेषु न समालोचितं पाठान्तरमिति क्षम्यतामेतद्दयया नि-यत एव समये निर्वर्तनीयस्य गुरुतरस्य कर्मणः स्वरूपमवगच्छद्भिर्विद्वद्भिः । शक्यं च तत्र पाठान्तराणामसामीचीन्यं निजबुद्धिवैभवेन विभावयितुं प्रज्ञैः । मूलसंशोधने च बहूनि समुपयोजितानि पुस्तकान्यस्माभिः । तत्रादिमं मेजर क्यांडी महोदयेन पुण्यपत्तने १७७८ तमे शकाब्दे शिलायन्त्रे संमुद्रितम् । अपरं श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यप्रणीतव्याख्यासनाथं तेनैव कलिकाता-यां मुद्रितम् । इतरन्निर्णयसागराधिपतिना मोहमय्यां प्रकाशितं श्रीमज्जगद्धरव्या-ख्यासमुल्लसितम्। अन्यद्ग्रोडबोल इत्युपाह्वैः श्रीनारायणरायैः पुण्यपत्तने मुद्रापितं जगद्धरव्याख्यया प्रोद्भासितम् । तदितरद्द्रविडमहोदयैः संमुद्रितं मूल-मात्रम् । तदपरं हस्तलिखितं कोल्हापुरनिवासिभिः श्रीबालकृष्णाचा-र्यबुपेरकरैः समर्पितम् । अन्यच्चान्ध्राक्षरमुद्रितम् । इतरच्च स्वीयं हस्त

लिखितामिति । पुस्तकान्येतान्यालोक्य यावद्बुद्धिबलोदयं संशोधितं मूलमस्माभिः । संशोध्य चैतद्विनिर्मिता व्याख्या ।

अधिगतं चात्र प्राचीनं व्याख्याद्वितयमस्माभिः । तत्रादिमा महामहोपाध्यायेन श्रीमता जगद्धरेण प्रणीता । अपरा तु श्रीमता तारानाथतर्कवाचस्पतिभट्टाचार्येण । उभावप्येतौ व्याख्यातारौ विद्वत्तमावभिवन्दनीयौ चास्माकमित्यत्र नास्ति नः संदेहलेशोऽपि । तथापि तु नांशतोऽपि व्यापारितमेताभ्यां व्याख्यानिर्माणे सावहितं चेत इत्यनन्यगत्यैव वक्तव्यं भवति । तत्र च श्रीमांस्तारानाथः केवलं जगद्धरव्याख्यामालम्ब्य तदुदितमेव प्रायेणाविकलमेव व्याख्यायामात्मीयायां विनिबबन्धेति विनैवायासं शक्यमेतव्द्याख्याद्वयमनुवाचयाद्भिर्विज्ञातुम् । तत एव च यत्र स्खलितं श्रीमता जगद्धरमहाभागेन तत्रायमपि स्खलितः । यथा 'झाङ्कारी शर्करालः ' इति ( प. १९ ) द्वितीयाङ्के, शर्कराल इति 'सिध्मादित्वाल्लच् ' इति जगद्धरः प्राह । सिद्धान्तकौमुद्या व्याख्याता श्रीमांस्तारानाथमहोदयोऽप्यत्र सिध्मादित्वाल्लच् इत्येवाह । सिध्मादिगणे पुनः शर्कराशब्दस्य पाठो नास्त्येव । यत्र च न किंचिद्विवृतं जगद्धरेणावश्यकं च विवरीतुं तत्रापि नांशतोऽपि प्रवर्तिता लेखनी तर्कवाचस्पतिना । यथा द्वितीयेऽङ्के ( २३ प. ) 'अध्यासितुं तव चिरं जघनस्थलस्य पर्याप्तमेव करभोरु ममोरुयुग्मम् । ' इत्यत्र कथं वा तुमुन्निति विचारणीयमपि नोभाभ्यामपि विचारितम् । क्वचित्पुनस्तर्कवाचस्पतिभट्टाचार्येण व्यापारितमेवात्मनश्चेतः । विरलानि तु स्थलान्येवंविधानि । सामान्यतस्तु विषमाणि विरलान्येव वा पदानि व्याख्यातानि जगद्धरे विश्वसता श्रीमता तर्कवाचस्पतिनेति भूतार्थ एवायमाख्यायतेऽस्माभिः । 'द्रौणायनि ' रित्यादौ चानेनाभिहितः फिञ् ( आयनि ) प्रत्ययो निर्मूलः । द्रौणायन इत्येव तु युक्तः पाठः । संदृश्यते चायमेवंविध एव कोशादिषु । श्रीमाञ्जगद्धर महोदयस्तु स्वीयवैदुष्ये सुनिर्भरमेव श्रद्दधानो विनापि प्रमाणं बहुषु स्थलेषु व्यलिखद्यत्किमपि । यथा 'अद्यैकं दिवसम्' (१।१२) इत्यत्र 'इदानीमद्ये' ति

कालापसूत्रमिति । न चैतत्सूत्रं कालापव्याकरणे संदृष्टम् । द्वितीयेऽङ्के (१० पृ.) 'मात्सर्यमपि मत्सर ' इत्यमर इति । एवं 'इयं परिसमाप्यते रणकथाद्य दोः– शालिने ' इत्यत्र दोःशब्दस्य भुजार्थकत्वे प्रमाणे प्रदर्शनीयेऽपि 'दोषा भुजा भुज' इत्यमर इति प्रमाणीकृतममरस्येति किमपि कोशवचनं जगद्धरमहाभागेन । एवं 'यो यः शस्त्रं बिभर्ति स्वभुजगुरुबलः पाण्डवीनां चमूना'मित्यत्र पाण्ड॰ वीनां पाण्डवसंबधिनीनामिति जगद्धरः । न चायमत्रार्थः संभवति । पाण्डव- पदादणोऽनुपपत्तेः । वृद्धं हि पाण्डवपदं ततश्च वृद्धाच्छ इति च्छेन भवितव्यम् । एवं च पाण्डवीयानामिति स्यात् । इति । दिङ्मात्रमेवैतत्प्रदर्शितमत्रास्माभिः । विशेषतस्तु निपुणमालोकमानैः शक्यानि स्खलितान्येवंविधान्यालक्षयितुं तत्र तत्र जगद्धरव्याख्यायाम् । एवं प्रथमाङ्के संयामितुमारब्ध इति बहुष्वेव पुस्तकेषु संदृष्टः पाठः । किन्तु नैतत्संपूर्वस्य यमे रूपं संभवत्यनिट्त्वात्तस्य । अत एव च कस्मिंश्चिदेव प्राचीनपुस्तके संदृष्टः संयन्तुमित्येवपाठः समादृतोऽस्माभिः। क्वचित्पुनः साहित्यदर्पणे च दशरूपके च काव्यालङ्कारसूत्रेषु च ध्वन्यालोके चान्यत्र च विद्यमानश्चारुतरः संगृहीतोऽस्माभिः पाठः । अलङ्कारादिलक्षणं तत्र तत्र कोश- वचनानां प्रमाणत्वेनोदाहरणं च नैव श्रीमता जगद्धरेण तर्कवाचस्पतिना वा सम्यगनुष्ठितम् । तदेवं प्रायशोऽनुपकारकमेव बालानां प्राचीनमिदं व्याख्याद्वि– तयमिति नैतत्परोक्षं प्रेक्षावताम् ।

अत एव बालबोधिनीति विरचिता सुविस्तृतेयं व्याख्याऽस्माभिः । यावच्छक्यं च विहितः प्रयास एतद्रचनायाम् । विवृतान्यस्यां प्रमाणप्रदर्शनपू- र्वकं तानि तानि पदानि । प्रदर्शितं सत्यामपेक्षायां व्याकरणम् । उल्लिखिताः प्रदर्श्य समन्वयमलङ्काराः । स्फुटीकृतः पदवाक्यगतो भावः। दिशा च प्रदर्शितानि व्यङ्ग्यानि । यावदपेक्षं चोपनिबद्धानि पुराणादिवचनानि यथास्थानम् । नाट्यवि- षयेऽपि सन्धिसन्ध्यङ्गरसादीनां लक्षणानि समन्वयपूर्वकं प्रादर्श्यन्त । तदेवं यथा स्यात्सर्वाङ्गीणसौष्ठवेयं व्याख्या तथा प्रयतितमस्माभिः । तथापि मानुष्यकसह-

जत्वात्स्यादेवात्र दोषाणामवस्थितिः क्वापि । विदुषां पुनः सुविशुद्धा दृष्टिः सलील-मेव शक्नुयादेतान्दूरीकर्तुमित्यस्ति नो द्रढीयान्विश्वासः । व्याख्यादिसमवेक्षणब-द्धादरैश्च नैतद्विस्मरणीयं यथावच्छक्यं सत्वरमेव विरचय्य प्रकाशितेयमिति । तत एव सावशेषाण्यपमुद्रणानि क्वापि क्वापीति । क्वचित्पुनर्हस्तदोषोऽपि संवृत्तः । यथा चारुसादृश्यमुपमेत्युपमालक्षणमिति वक्तव्ये रसगङ्गाधर इत्यधिकमेवान-वधानात्पतितम् । एकमात्रमेवैतदेवंविधं स्थलं व्याख्यायामेतस्याम् । शोधितं चैतच्छुद्धिपत्रेऽस्माभिः । अशुद्धयश्च प्रायेण प्रथम एवाङ्के बह्व्यः।अलब्धावसरा हि संशोधने वयमस्मिन्समय इति ।

इंग्रेजीटिप्पन्यपि यथा सुविशुद्धा च सरला च टिप्पन्यन्तरतो विशेष-मावहन्ती चाध्येतॄणामुपकारिणी च स्यात्तथा प्रयतितं प्रियसुहृद्भिरस्माकं श्रीकृ-ष्णरायद्रविडमहाभागैः । एतैर्हि सुष्ठु विवृतानि पदानि दुर्बोधानि । प्रदर्शितो विग्रहः समासानाम् । विशदीकृतः पदानां भावः । समुपनिबद्धोऽन्वयस्तत्तेषां पद्यानाम् । अनुवादश्चामीषामिंग्रेजीभाषया विहितः । अपरमपि तत्तदुपनिबद्धं यथास्थानं यद्यदपेक्षितं नाम स्यात् । एवं च सत्यपि महीयसि व्यवसायान्तरे व्ययीकृत्यानर्घं समयं यदेतद्विहितं प्रणयमयेन चेतसा साहाय्यममीभिरस्माकं तेन खलु चिरं कृतज्ञाः स्म एतेषु ।

यदपि पुस्तकमेतद्यथावसरं मुद्रयता व्यधीयत साहाय्यमस्माकं कोल्हा-पुरवार्तिनः श्रीवेङ्कटेश्वरयन्त्रालयस्य कार्याध्यक्षेण ततः किल प्रयच्छामः प्रण-यपुरःसरं धन्यवादानेतस्मै । न चापि टिप्पनीसंमुद्रणेन साहाय्यमादधानस्य पुण्यप-त्तनीयस्यार्यभूषणयन्त्रालयाध्यक्षस्य विस्मरिष्यामः ।

इत्थमयं विहितोऽपि तदेवानुविन्देत साफल्यं प्रयासोऽस्माकं यद्यतश्छ-त्राणां कोऽप्युपकारो नाम स्यात् । यदि चोपयुज्याध्ययने पुस्तकमेतदवगतावगन्त-

व्याः सफलयेयुः प्रयासमिमं छात्राः । वितनोतु फलेग्रहिमिममस्मदीयं व्यापारं सकलचराचरगुरुर्भगवान्सर्वमङ्गलजानिरित्याशास्यतेऽस्माभिरिति शिवम् ।

| | |
|---|---|
| **कोल्हापुरम्**<br>मार्गसुदि ९ स्याम् ।<br>१८३१ | गुणगृह्यवशंवदो व्याख्याता<br>**श्रीअप्पाशर्मा विद्यावाचस्पतिः**<br>विद्यालङ्कारो महोपदेशकश्च । |

---

श्रीशिवः शरणम् ।

# उपोद्घातः ।



इह खलु जगति सर्वेऽपि प्राणिन आनन्दाय स्पृहयन्ति वाञ्छन्ति च परित्यागमेव दुःखस्य । तत्र च मानुषाः सविशेषमेवानन्दमास्वादयितुं च व्यसनं च परिहर्तुं प्रयतन्ते । उद्भावितानि चात्मनो बुद्धिवैभवेन तानि तान्यानन्दसाधनान्येतैः । रसविदां पुनर्नास्त्येवमपरमानन्दनं मनसो यथा काव्यम् । एतद्धि समनुशील्यमानं तत्तद्रसनिरन्तरतया समाकृष्य विषयान्तरेभ्य आत्मैकप्रवणतां नयत्यन्तरङ्गमनुशीलयितुः । येन किल विस्मृतविषयान्तरकथः क्षणं समास्वादयतीव ब्रह्मानन्दनिर्विशेषमानन्दमनुशीलयिता । काव्यं च नाम रसात्मकं वाक्यमित्याहुः । त्रिविधं किलैतत्काव्यम् । पद्यमयं गद्यमयं मिश्रं चेति । पद्यमयं रघुवंशादि । गद्यमयं कादम्बर्यादि । मिश्रं च चम्पूभारतशाकुन्तलादीति । द्विविधं खलु मिश्रं काव्यम् । दृश्यं च श्रव्यं चेति । तत्र तावच्छ्रव्यं चम्पूसंज्ञम् । दृश्यं च रूपकाख्यमिति । यद्यपि दृश्यमपि श्रव्यं भवति तथापि दृश्यताया एव प्राधान्यात्तदिदं दृश्यमित्युच्यते । यद्यपि संजनयन्ति समास्वाद्यमानानि निरतिशयमानन्दं काव्यानि तथापि तेषु दृश्यान्येव सर्वोत्तराण्यानन्दजननानि । एतानि हि साक्षादेव तां तां घटनां प्रदर्शयन्ति परिप्लावयन्ति रसासारैरन्तरङ्गाणि द्रष्टृणाम् । कविनोपनिबद्धं चात्र लोकानां नानाविधं चरितमभिनीयमानं पात्रैर्बलादिव समाकृष्य विषयान्तरेभ्यो योजयत्यन्तरं प्रमोदेन । न खलु तादृशः कश्चिदपि मानुषो नामास्ति यस्य नावर्जयेन्मानसं दृश्यं काव्यमिति । स्थाने किलोक्तं कविकुलचूडामणिना श्रीमता कालिदासेन ‘ नाट्यं भिन्नरुचेर्ज-

नस्य बहुधाप्येकं समाराधनम्' इति । नाट्यं च रूपं च रूपकं च दृश्य-काव्यं चेत्यमी समानस्यैवार्थस्यावबोधकाः शब्दाः । तत्र तावन्नाट्यं नाम नटै रामयुधिष्ठिरादीनां नायकादीनामवस्थाया अनुकरणम् । अनुकरणं चैतदवस्थाया अभिनय इत्युच्यते । अभिनयश्चायं रूप्यते ( आलोक्यते ) इति रूपमित्यभि-धीयते । तत्र च नटेषु रामादीनामवस्थाऽऽरोप्यत इति तदेव रूपकमित्याख्या-यते । तदेव च दृश्यत्वात्कविकर्मत्वाच्च दृश्यकाव्यमपीति । तदेतद्दृश्यं काव्यं रूपकोपरूपकभेदाद्द्विविधम् । तत्र रूपकं दशधा । १ नाटकं २ प्रकरणं ३ भाणः ४ व्यायोगः ५ समवकारः ६ डिमः ७ ईहामृगः ८ अङ्कः ९ वीथी १० प्रहसनं चेति । नाटकं द्विविधं, नाटकं महानाटकं चेति । नाटकमभि-ज्ञानशाकुन्तलादि । महानाटकं च बालरामायणादि । प्रकरणं यथा मृच्छक-टिकम् । भाणः पञ्चायुधप्रपञ्चादिः । व्यायोगो धनञ्जयविजयादिः । समवकारः समुद्रमथनादिः । डिमस्तु त्रिपुरदाहाख्य इति भगवान् भरत उदाजहार । ईहामृगश्च कुसुमशेखरविजयादिः । अङ्कस्तु शर्मिष्ठाययातिप्रभृतिः । वीथी च मालविकादिः । प्रहसनं तु लटकमेलकादीति । उपरूपकाणि पुनरष्टादश । नाटिका सट्टकं गोष्ठी त्रोटकं नाट्यरासकं प्रस्थानमुल्लाप्यं काव्यं प्रेङ्खणं रासकं संलापकं श्रीगदितं शिल्पकं विलासिका दुर्मल्लिका प्रकरणी हल्लीशो भाणिका चेति। तत्र नाटिका रत्नावल्यादिः । सट्टकं कर्पूरमञ्जर्यादि । गोष्ठी रैव-तमदनिकादिः । त्रोटकं विक्रमोर्वश्यादि । नाट्यरासकं विलासवत्यादि । प्र-स्थानं शृङ्गारतिलकादि । उल्लाप्यं देवीमहादेवादि । काव्यं यादवोदयादि । प्रेङ्क्षणं वालिवधादि । रासकं मेनकाहितादि । संलापकं मायाकापालिकादि । श्रीगदितं सुभद्राहरणादि । शिल्पकं कनकावतीमाधवादि । दुर्मल्लिका बिन्दुम-त्यादिः । हल्लीशः केलिरैवतकादिः । भाणिका कामदत्तादिः । विलासिकाप्र-करणिकयोस्तूदाहरणं न दृष्टम् । अत्र च भूयसांशेन साहित्यदर्पणगतान्येवो-दाहरणान्युपन्यस्तान्यस्माभिः । भूयांसि पुनरेतेषु नोपलभ्यन्त इदानीम् ।

अभिनयात्मकस्यापि रूपकस्य रसभेदान्नायकभेदादितिवृत्तभेदाच्चैतावन्तो भेदाः संपद्यन्ते । तत्र रसा अष्टौ नव दश वा । शृङ्गारो वीरः करुणोऽद्भुतो हास्यो भयानको बीभत्सो रौद्रश्चेत्यष्टावेव नाट्ये रसा इत्येके । शान्तोऽप्यत्र नवम इत्यपरे । वत्सलाख्यः पुनर्दशमोऽपि रस इत्यन्ये । शान्तस्य च प्राधान्येन रूपकेषु प्रयोगो भर्तृहरिनिर्वेदादौ दृष्टः । रसस्तु तैस्तैर्भावैर्व्यक्ततामनुप्राप्तो हृदयानन्दजननक्षमो रत्यादिः । स च तत्तन्मतेनाष्टधा नवधा दशधा च विभिद्यते । रतिः उत्साहः शोको विस्मयो हासो भयं जुगुप्सा क्रोधश्चेत्येतेऽष्टौ रत्यादयः । शमो नवमः । वत्सलता पुनर्दशमी । तत्र रतिर्नामानुकूलेऽर्थे मनसः प्रह्वीभावः । उत्साहो नाम कार्योद्यमे स्थिरतरः संरम्भः । प्रीत्यास्पदीभूतस्य वस्तुनो नाशे चेतसो विक्लवीभावः शोकः । अलौकिकवस्तुसंदर्शनादिजन्यश्चेतसो विस्फारो विस्मयः।विकृतवाग्वेषादिदर्शनयोगाच्चेतसो विकासो हासः। क्रुद्धादिविलोकनात्संजातो मनसो वैक्लव्यकारी भावो भयम् । विषयगतानां दोषाणां साक्षात्कारेण जायमाना गर्हा जुगुप्सा । आत्मनः प्रतिकूलवर्तिनां विषये मनसस्तीक्ष्णत्वं क्रोधः । निरिच्छतयावस्थानेनात्मनो विश्रमजन्यं सुखं शमः । पुत्रादिगतः स्नेहो वत्सलतेति । एते च भावाः स्थिरतया स्थायिभावा इत्युच्यन्ते । एत एव च व्यक्ता आनन्दजननक्षमत्वमनुप्राप्ता रसाः । येषां च योगेन रत्यादयो व्यक्ततामापद्यन्ते तेऽमी भावास्त्रिविधाः । विभावा अनुभावाः संचारिणश्चेति । तत्र य आत्मनो योगेन परगतं रत्यादिं भावं विशेषेण भावयन्ति अर्थादुद्बुद्धतां गमयन्ति ते विभावाः । द्विविधाश्चैते, आलम्बनविभावा उद्दीपनविभावाश्चेति । तत्र यमालम्ब्य प्रवृत्तानां रत्यादीनामुद्बोधो भवति त आलम्बनविभावाः । यथा शृङ्गारे नायकगता रतिर्नायिकामालम्ब्योद्बुद्धा भवतीति नायिकाऽऽलम्बनम् । नायकोऽपि वा नायिकागताया रतेरालम्बनम् । उद्दीपनविभावास्तु उद्बुद्धप्रायं रसं प्रोद्दीपयन्तो देशकालादयः । यथा शृङ्गारे वसन्तादयः कालाः । आलम्बनस्य चेष्टा अप्युद्दीपनविभावा एव । एवं विभावै-

रुद्बुद्धो रत्यादिर्येन बहिः प्रकाश्यते सोऽनुभावः । एष च रत्यादिजन्यकार्य-रूपः स्वेदस्तम्भरोमाञ्चादिः । ये च कदाचित्प्रादुर्भूताः कदाचित्पुनस्तिरो-भूताः स्थायिना सह चरन्ति तेऽमी सहचारिण इत्याख्यायन्ते । एत एव च विशेषादाभिमुख्येन चरन्तीति व्यभिचारिण इत्युच्यन्ते । यथा निर्वेदः । एतेषां च भेदा दशरूपकादिषु द्रष्टव्याः । एतेषां च रसानां भेदाद्रूपकाणि भिद्यन्ते ।

नायकस्तु यत्फलमुद्दिश्य कार्यमारभ्यते तस्य फलस्य स्वामी । अयमेव चाधिकारीति नेतेति च प्रोच्यते । यथा युधिष्ठिरः । यश्च प्रतिकूल एतस्य सोऽयं प्रतिनायक इत्युच्यते । यथा दुर्योधनः । नायकश्च धीरोदात्तो धीरो-द्धतो धीरललितो धीरप्रशान्तश्चेति चतुर्विधो भवति । तत्र अनात्मश्लाघी क्षमाशीलोऽतिगम्भीरो हर्षशोकादिभिरनभिभूतस्वभावो विनयच्छन्नगर्वोऽच-ञ्चलो दृढप्रतिज्ञश्च धीरोदात्तः । स च युधिष्ठिरादिः । मायापरः प्रचण्डश्चप-लोऽहङ्कारदर्पभूयिष्ठ आत्मश्लाघी च धीरोद्धतः । यथा भीमादिः । निश्चिन्तः सन्ततं मृदुः कलानिष्ठश्च धीरललितः । स च वत्सराजादिः । सामान्यगुणभू-यिष्ठो द्विजादिर्धीरप्रशान्तः । यथा माधवादिः । शृङ्गारे पुनरेष दक्षिणो धृष्टोऽ-नुकूलः शठश्चेति प्रत्येकं चतुर्विधो भवति । नामान्यत्र च सामान्यतो लक्षणा-न्येतेषाम् । एवं षोडशविधा अप्येत उत्तमो मध्यमोऽधमश्चेति प्रत्येकं त्रिविधाः। तदेवमष्टचत्वारिंशन्नायकभेदाः । एतेषामपि भेदो रूपकाणां भेदे प्रयोजकः । नायिकाभेदास्त्वन्यत्र द्रष्टव्याः ।

अपरं पुना रूपकाणां भेदे प्रयोजकमितिवृत्तं भवति । एतदेव च व-स्त्वित्याख्यायते नाट्ये । एतदेव च शरीरं नाट्यस्य । एतच्च द्विविधम् । आधि-कारिकं प्रासङ्गिकं चेति । तत्राधिकारिकमधिकारिणः सम्बन्धि । अधिकारी च फलेऽधिकारवान् । यत्किलेतिवृत्तेनानेन फलं निष्पद्यते तत्र यस्य स्वाम्यं

सोऽयमधिकारी । अयमेव च नायकः । ततश्च नायकसम्बन्धीतिवृत्तमाधिकारिकम् । यत्पुनः प्रसङ्गवशादन्यस्यापीतिवृत्तं नायकेतिवृत्तोपकारकं भवति तदेतत्प्रासङ्गिकम् । यथा रामायणे सुग्रीवचरितम् । प्रासङ्गिकं च द्विविधं दूरमनुवर्तमानमेकदेशानुवर्ति च । दूरमनुवर्तमानं यथा वेणीसंहारे भीमचरितम् । एकदेशानुवर्ति तु रामायणे श्रावणवृत्तान्तादि । तत्राद्यस्य पताकेत्यभिधानं द्वितीयस्य तु प्रकरीति । तदेवमाधिकारिकं पताका प्रकरी चेति त्रिविधमितिवृत्तम् । एतदपि प्रत्येकं त्रिविधं प्रख्यातमुत्पाद्यं मिश्रं चेति । प्रख्यातं च पुराणेतिहासादिषु प्रथितम् । उत्पाद्यं च स्वबुध्या कविना कल्पितम् । एतद्द्वितयं च मिश्रितं मिश्रम् । एवं च नव प्रकारा एत इतिवृत्तस्य । वृत्तमितिवृत्तं वस्तु चरितं चेत्यमी पर्यायाः । तत्र प्रख्यातं वृत्तं नाटके, उत्पाद्यं प्रकरणे, मिश्रं चेहामृगादौ भवति । अत्र चेतिवृत्ते यदुद्दिश्य नायकस्यारम्भो यच्च नायकेनापेक्ष्यते तत्कार्यमित्याख्यायते । यथा रामायणे रावणवधः । एतस्य च कार्यस्य पञ्चावस्था भवन्ति । आदितो हि कार्यमारभ्यते, तदनु चास्य सिद्ध्यै प्रयत्नः क्रियते, ततः परं चास्य सिद्धिप्राप्तेराशा संभवति, ततः परं च नियतमेतत्सिध्यति, तत उत्तरं चास्मात्फलमधिगम्यत इति । एता एवावस्थाः क्रमेणारम्भो यत्नः प्राप्त्याशा नियताप्तिः फलागमश्चेति व्यपदिश्यन्ते । तत्र मुख्यस्य फलस्य सिद्धय औत्सुक्यमारम्भः । तस्य प्राप्त्यर्थं त्वरायुक्तो व्यापारो यत्नः । उपायसम्बन्धिन्या चापायसंबन्धिन्या च शङ्कया प्राप्तेः संभवप्रतीतिः प्राप्त्याशा । अपायस्याभावान्निश्चिता प्राप्तिर्नियताप्तिः । समग्रस्य च फलस्य योगः फलागमः । इति । पञ्चानां चासामवस्थानां योगादितिवृत्तस्य पञ्च विभागाः संपद्यन्ते । एते च विभागाः सन्धय इत्याख्यायन्ते । ते च मुखं, प्रतिमुखं, गर्भोऽवमर्शः, उपसंहृतिश्चेति । उपसंहृतिसन्धिरेव निर्वहणसंधिरित्यभिधीयते । अत्र प्रयोजनसिद्धिहेतवः पञ्चोपकुर्वन्ति । ते च बीजं बिन्दुः पताका प्रकरी कार्यं चेति । एत एव चार्थप्रकृतय इति व्यपदिश्यन्ते । तत्र

पताका प्रकरी कार्यं चेति त्रितयं निर्दिष्टमेव प्रागस्माभिः । बीजं तु फलोत्पत्तेः प्रधानो हेतुरल्पमात्र उद्दिष्टो बहुधाप्रसर्पणशीलः । यथा वेणीसंहारे युधिष्ठिरस्योत्साहः । एष च द्रौपद्याः केशानां संयमने हेतुर्भीमसेनस्य क्रोधेन समेधितो बहुधा प्रसृत इति । अवान्तरस्य कार्यस्य परिसमाप्ततया विच्छिन्नवद्भासमानस्येतिवृत्तस्य विच्छेदाभावसंपादको बिन्दुः । यथा वेणीसंहारे 'सहदेव ! गच्छ त्वं गुरुमनुवर्तस्व । अहमप्यायुधागारं प्रविश्यायुधसहायो भवामी' ति भीमोक्तौ 'आर्य ! नेदमायुधागारं पाञ्चाल्याश्चतुःशालकमिदम्' इति सहदेवप्रतिवचने आमन्त्रयितव्यैव मया पाञ्चालीति भीमेनोक्तम् । अत्रावान्तरस्यायुधग्रहणान्तस्य कार्यस्य परिसमाप्ततया विच्छिन्नवद्भासमानमितिवृत्तं पुनरविच्छिन्नतां नीयते । सोऽयं बिन्दुः । सन्धिषु तावत् बीजानामुत्पत्तिरनेकप्रयोजनस्य रसस्य च हेतुर्मुखसन्धिः । यच्च बीजस्य किंचिल्लक्ष्यं किंचिदलक्ष्यं च प्रकाशनं सोऽयं प्रतिमुखाख्यः सन्धिः । प्रतिमुखसन्धौ मनागिवोद्भिन्नस्य बीजस्य सविशेषोद्भेदपूर्वकः सविघ्नो लाभः पुनर्विच्छेदः पुनः प्राप्तिः पुनश्च विच्छेद इत्येवं यत्र तस्यैव वारं वारमन्वेषणं सोऽयमनिर्धारितैकान्तफलप्राप्त्याशारूपो गर्भसन्धिः । अत्र च प्राप्तेः संभवोऽवश्यं भवति । क्रोधेन व्यसनेन विलोभनेन वा एकान्ततः फलप्राप्त्याशाविनिश्चयरूपो गर्भसन्धावुद्भिन्नस्य बीजार्थस्यावमर्शः ( पर्यालोचनं ) अवमर्शसन्धिरित्यभिधीयते । यत्र च बीजेन संबद्धा मुखसन्ध्यादिगता विप्रकीर्णास्ते तेऽर्था यथायथमेकार्थतां नीयन्ते सोऽयं निर्वहणाख्यश्चरमः सन्धिः । नानाविधानि चैषां सन्धीनामङ्गानि। विस्तरभिया तु नैतान्यत्र निर्दिश्यन्ते । एवं च पञ्चधा विभिन्नमपीदमितिवृत्तं नैव साकल्येनाभिनयद्वारा सामाजिकानां चक्षुषोर्गोचरीक्रियते । सरस एव तु कथांशोऽत्रत्रोऽभिनीयते । नीरसश्चादर्शनीयश्च केवलं सूच्यते । तथा हि विरचनीयं रूपकं यथा नास्य प्रयोगदर्शनतो रसिकानां मनांस्युद्वेगमापद्येरन् । यथा च न स्याद्रसास्वादेऽन्तराय एतेषामित्येष नियम एव संस्कृतरूपकप्रणयनस्य । तत्र

क्वचिदङ्कस्यादित एकेन द्वाभ्यां वा मध्यमेन मध्यमाभ्यां मध्यमनीचाभ्या वा पात्राभ्यां वृत्तो वर्तिष्यमाणश्च कथांशः सूच्यते सोयं विष्कम्भक इत्याख्यायते । एष एव चानुदात्तैर्वचनैर्नीचेन वा नीचाभ्यां वा पात्राभ्यां प्रयोजितः प्रवेशकः । एष पुनरङ्कद्वयस्य मध्ये भवति । तेन प्रथमाङ्के नायं विनिवेशनीयः । अङ्कस्यावसाने सूचितस्य भाविनोऽङ्कस्याविभक्तस्यैवावतरणमङ्कावतारः । एकस्मिन्नेवाङ्के सर्वेषामप्यङ्कानामर्थस्य सूचनमङ्कमुखम् । जवनिकान्तरितैः पात्रैरर्थस्य सूचनं चूलिका । एषा च विष्कम्भादिवदादितोऽस्योपनिबध्यते । इति वृत्तेऽपि यद्रसस्य वा नायकस्य वाऽनुचितं तत्सर्वथा परित्याज्यमन्यथा वा प्रकल्पनीयमित्यसौ नाट्यविदां समयः । यथोदात्तराघवे रामकृतो वालिवधो नोपात्तः । सुग्रीवचरिते चान्यथोपवर्णितः । रसमात्रप्रधानानि हि काव्यानि भवन्ति नैव पुनः पुरावृत्तप्रधानानि । एष एव च काव्येतिहासयोर्भेदः ।

सामान्यतः किलाविज्ञातार्थो द्रष्टा युगपत्प्रविष्टेषु पात्रेषु तत्सम्बन्धमजानन् विघ्नितरसास्वाद उद्विजते । यावद्धि किमेतत्पात्रं कश्चास्य संबन्ध इत्यसौ विचारयति तावदस्य रसास्वादः प्रतिहन्यते । तत एव च संस्कृतरूपके नासूचितस्य पात्रस्य प्रवेशो भवति । नाटकस्याप्यादित एतदर्थमेव प्रयुज्यते प्रस्तावना । वैदेशिकेषु पुनर्नाटकेषु नैष प्रचारः संदृश्यते । तत एव च विनैव प्रस्तावनां प्रविशन्त्यविज्ञातसम्बन्धानि पात्राणि व्याकुलयन्ति द्रष्टृणां हृदयम् । भूयांसश्चापरेऽपि व्रीडादिकरा अर्था भारतीयानां संस्कृतरूपकेषु न प्रयुज्यन्ते । एवमेतदेवंविधेनेतिवृत्तेन रसैर्नायकादिभिश्च समुद्भासितमभिनेयं यद्दृश्यं काव्यं तदेतद्रूपकमित्याख्यायते ।

न किल मनोविनोदमात्रमेव संस्कृतनाटकरचनायाः प्रयोजनम् । किन्तु विभिन्नमप्यस्मादुदात्ततरम् । तदेतन्नाट्यशास्त्रगतेन ब्रह्मणो वचनेनैव शक्यमवबोद्धुं जिज्ञासुभिः । तत एव च तदेवात्रोपह्रियतेऽस्माभिः । यथा—"त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् । नानाभावोपसंपन्नं नानावस्थान्तरात्मकम् ।

लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् ॥ उत्तमाधममध्यानां नराणां कर्मसंश्रयम् ॥ हितोपदेशजननं धृतिक्रीडासुखादिकृत् ॥ दुःखार्तानां समर्थानां शोकार्तानां तपस्विनाम् । विश्रान्तिजननं काले नाट्यमेतन्मया कृतम् ॥ धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् । लोकोपदेशजननं नाट्यमेतद्भविष्यति ॥ न तच्छ्रुतं न तच्छिल्पं न सा विद्या न सा कला । नासौ योगो न तत्कर्म नाटके यन्न दृश्यते ॥ योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः । सोऽङ्गाद्यभिनयोपेतो नाट्यमित्यभिधीयते " इति । अतः खलु शक्येत प्राचीनानां रूपकाणां माहात्म्यमत्रबोद्धुं रासिकैः ।

नाट्यविद्या चेयमतीव प्राचीना भारते वर्षे । भूयिष्ठं च प्रयतितं रूपकाभिनयस्य सौष्ठवमापादयितुं भारतवर्षीयैः । अभिनयविधिश्च भारतीयानां नाट्यशास्त्रे समवेक्ष्यमाणो विस्मयस्तिमितान्येव वितनुयाज्जिज्ञासूनां हृदयानि । असंख्येया ह्यत्र समुपवर्णिता अभिनयोपयुक्ताः प्रकारा हस्तपादादीनाम् । पात्राणां वेषादिविषयेऽपि नांशतोऽप्यासीदसंस्कृतत्वं प्राचां भारतीयानाम् । एतच्च सम्यगेवावबोधयति नाट्यशास्त्रीयो वर्णिकापरिग्रहविचारः । नाट्यशालादिव्यवस्था हृदयहारिदृश्य(सीन्)निर्माणचातुरी च प्राचां नाट्यशास्त्रतः प्रतीयमाना नूनं निर्वासयेदेव गर्वमर्वाचीनानामित्यस्ति नो विश्वासः । एवं च सेयं नाट्यविद्या परमामत्र समुन्नतिमुपारूढा पुरा भारते वर्षे । यैश्च काम्यते सम्यगेतस्याः समुन्नतं स्वरूपमवगन्तुं, सकृदपि तावन्निपुणमालोक्यतामेभिर्भरतप्रणीतं नाट्यशास्त्रमामूलान्तमिति प्रार्थ्यतेऽस्माभिः । यतश्चासीत्पुरा संस्कृतादिभाषामयानां नाटकानामभिनयस्ततः प्रतीयत आसीदेव संस्कृतादिभाषाणां पुरा प्रचार इति । याः किल पुरा ।

## रूपकेषु भाषाः

प्रयुज्यन्ते स्म ता एताः—संस्कृतं, शौरसेनी, महाराष्ट्री, मागधी, अर्धमागधी, आवन्तिका, दाक्षिणात्या, शाकारी, बाल्हीका, द्राविडी, आभीरी,

चाण्डाली, शाबरी, पैशाची, इति । एतासु च शौरसेन्यायाः प्राकृतभेदाः । एतासां च लक्षणानि भाषार्णवे द्रष्टव्यानीत्याह श्रीविश्वनाथकविराजः । संप्रति पुनर्नायं भाषार्णव उपलभ्यते । प्राकृतव्याकरणे तु कासांचिदेव भाषाणां लक्षणानि संदृश्यन्ते । षडेव तु प्राकृतभाषाया भेदा इति बहवः । एतेषां च मते षडेव नाटये प्रयोज्या भाषाः । तदुक्तं प्राकृतशब्दप्रदीपिकायां नृसिंहेण—षड्विधा सा प्राकृती च शौरसेनी च मागधी । पैशाची चूलिकापैशाच्यपभ्रंश इति क्रमात् । इति । एतासां च लक्षणादिकं षड्भाषाचान्द्रिकादिषु द्रष्टव्यम् ।

## प्राकृतं च नाम

प्रकृतिभूतायाः संस्कृतभाषायाः सकाशात्संभूतो भाषाविशेषः । सैव भाषाणां तासां प्रकृतिर्यस्या एव विकारा एता भाषाः । यथा मृण्मयं चित्रं मृदो विकृतिः प्रकृतिश्चास्य मृत् तथैवेदम् । संस्कृतभाषैव वक्तृप्रभृतीनां दोषादपभ्रष्टा प्राकृतत्वमापन्ना । तदाहुः '**प्रकृतेः संस्कृतायास्तु विकृतिः प्राकृती मता ।**' इति । अत एव च प्राकृतव्याकरणानामन्ततः 'शेषं संस्कृतात्' इत्यादिकमुपलभ्यते । संस्कृतं पुनर्नैव कस्या अपि भाषाया विकृतिः । अत एव च नैतद्भाषान्तरतः प्रादुर्भूतमिति शक्यते प्रकल्पयितुम् । एतेन प्राकृतमेव प्रकृतिस्तदेव च पाणिन्यादिव्याकरणैः कृतसंस्कारं संस्कृतमित्यभिधीयत इति वदन्तो नमिसाधुप्रभृतयः परास्ताः । किंच व्याकरणैः संस्कृतानां संस्कृतत्वे प्राकृतभाषाया अपि वाल्मीकिकात्यायनादिव्याकरणैः संस्कृततया संस्कृतत्वापत्तिर्दुर्निवारैवेति साधूक्तं नृसिंहेण प्रकृतेः संस्कृतायास्त्वित्यादि । वैदिकभाषायाः प्राकृतत्वं, तस्या एव च पाणिन्यादिभिः संस्कृतायाः संस्कृतत्वमित्यपि केचित् । तन्न । प्रातिशाख्यानुसारेण वैदिकभाषाया अपि संस्कृतत्वावगमात् । पाणिन्यादिभिरपि न हि वैदिकीं भाषां प्रकृतीकृत्य तद्विकारतया साधितं संस्कृतस्वरूपं किमपि । अपि तु तत्र तत्र रूपद्वयमभिधाय तस्य लौकिकत्वं छान्दसत्वं चेति व्यवस्थामात्रमेव प्रदर्शितमिति । अत एव च नास्ति वैदिकभाषायाः प्राकृतत्वमिति बोध्यम् ।

तदेवं निरूपितं सामान्यतो रूपकाणां स्वरूपमस्माभिः । आदितस्ता-वद्ब्रह्मण आदेशान्मुनिना भरतेन माहेन्द्रध्वजमहोत्सवे देवकृतं दैत्यपराजयमधिकृत्य विरचितं रूपकमभिनीतं भारते वर्षे । ततः परस्तादयं प्रवृत्तो रूपकाभिनयप्रचार इति नाट्यशास्त्रम् । एतेषु च रूपकेषु नाटकमेव प्रधानमिति तस्यैवादितो नि-र्देश उपलभ्यते सर्वत्रापि ।

## नाटकस्वरूपं तु

साहित्यदर्पणे प्रोक्तम् । 'नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम् । विलासर्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥ सुखदुःखसमुद्भूति नानारसानिरन्तरम् । पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ॥ प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् । दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥ एक एव भवेद-ङ्गी (प्रधानः) शृङ्गारो वीर एव वा । अङ्गमन्ये रसाः सर्वे कार्यं निर्वहणेऽद्भुतम् । चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः । गोपुच्छाग्रसमानं तु बन्धनं तस्य कीर्तितम् ॥' इति । ख्यातं रामायणमहाभारतादिषु प्रसिद्धं वृत्तं यस्य तथा-भूतम् । नानाविभूतिभिर्युक्तं महासहायम् । सुखस्य दुःखस्य चोद्भूतेर्हेतुः । राज-र्षयो युधिष्ठिराद्याः । दिव्याः देवाः । दिव्यादिव्या देवा अपि आत्मानं मानुषं मन्वानाः श्रीरामचन्द्रादयः । अङ्गमप्रधानम् । निर्वहणे पूर्वोक्ते निर्वहणसन्धौ । बन्धनं रचना । गोपुच्छाग्रसमानं यथा गोः पुच्छे केचित्केशा ह्रस्वाः केचिच्च दीर्घा भवन्त्येवं नाटके नायकोद्दिष्टानां कार्याणां ह्रस्वत्वं विस्तृतत्वं च प्रदर्शनी-यमिति भावः ।

## अङ्कलक्षणं च

प्रोक्तं दर्पणकारेण 'प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः । भवेदगूढश-ब्दार्थः क्षुद्रचूर्णकसंयुतः ॥ विच्छिन्नावान्तरैकार्थः किंचित्संलग्नबिन्दुकः । युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च ॥ नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।

आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ॥ नानेकदिननिर्वर्त्यकथया संप्रयोजितः । आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥ दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः । विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा ॥ दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरं च यत् । शयनाधरपानादिनगराद्युपरोधनम् ॥ स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः । देवीपरिजनादीनाममात्यवणिजामपि प्रत्यक्षचित्रचरितैर्युक्तो भावरसोज्ज्वलैः । अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ।' इति । क्षुद्रचूर्णकसंयुतः क्षुद्रैरल्पैः चूर्णकैः 'अकठोराक्षरं स्वल्पसमासं चूर्णकं विदुः ।' इत्युक्तलक्षणैर्गद्यैर्युक्तः । बिन्दुस्तूक्तपूर्वः । इति । नाटकमेव चैतत्कविप्रवरेण श्रीमता भट्टनारायणेन संग्रथितं

## वेणीसंहारम् ।

एतच्च महाभारतगतमितिवृत्तमालम्ब्य विरचितं कविना । अत्र च पाण्डवानामज्ञातवासपरिसमाप्त्यनन्तरो युधिष्ठिरराज्याभिषेकान्तः कथांश उपवर्णितः । षट्सु चाङ्केषु संग्रथितः कथांशोऽयम् । तत्र तावत्

**प्रथमेऽङ्के** परिसमाप्ताज्ञातवासस्य श्रीमतो युधिष्ठिरस्य सन्ध्यर्थं दुर्योधनसकाशे श्रीकृष्णस्य प्रेरणं तस्य च सन्धिप्रत्याख्यानं तत एव च भारतीयसंग्रामोपक्रम इत्युपवर्णितम् । अत्र च क्रुद्धस्य सहदेवानुगतस्य भीमसेनस्य प्रवेशः, सन्धेर्भीमस्यानभिमतत्वं द्रौपद्या उपगमस्तदवमानश्रवणेन च भीमस्य क्रोधोपचयः, दुर्योधनेन संधेः प्रत्याख्यानाच्च युधिष्ठिरस्य संग्रामनिश्चय इत्येतेऽर्था प्रदर्शिताः ।

**द्वितीयेऽङ्के**—कञ्चुकिवचनद्वारा भीष्मस्य शरशय्यायां शयनमभिमन्योश्च वधो वर्णितः । दुर्योधनभार्यया च भानुमत्या स्वप्ने नकुलेन सर्पशतवधसंदर्शनं भर्तृविजयप्रत्याशया च व्रतानुष्ठानं दुर्योधनस्य च तत्रानादरः

समयेऽस्मिन् भानुमतीसमागमलालसा अकाण्डे प्रादुर्भूतेन च प्रचण्डतमेन पवनेन भीतायास्तस्या व्रतभङ्गो दुर्योधनस्य पुरस्ताज्जयद्रथस्य मात्रा भार्यया चार्जुनेन प्रतिज्ञातस्य जयद्रथवधस्य निवेदनम् । तस्यां च प्रतिज्ञायां दुर्योधनस्यावज्ञा । संग्रामाय प्रयाणं चेत्येतेर्था विनिबद्धाः ।

**तृतीयेऽङ्के**—राक्षसराक्षसीसंलापद्वाराऽनेकेषां वीराणां वधो विनिवेदितः । सूचितश्च वधो द्रोणस्य । द्रोणाधिष्ठितानां बलानां पलायनेन विस्मितस्याश्वत्थाम्नः प्रवेशो द्रोणस्य सारथिनाऽस्मै द्रोणवधनिवेदनं, कृपाचार्योपगमनं, पाण्डवनिर्मूलनेऽश्वत्थाम्न उत्साहः, कृपेण तदर्थं सैनापत्येभिषेचनायास्य दुर्योधनसकाशे नयनं, कुटिलस्य कर्णस्य मन्त्रणया दुर्योधनेन द्रोणचरितस्यान्यथा ग्रहणं, अश्वत्थाम्नः सैनापत्येऽभिषेचनस्य प्रत्याख्यानं, कर्णाश्वत्थाम्नोः कलहः, दुःशासनमासन्नमवेक्ष्य तद्रुधिरं पिपासतो भीमस्याह्वानं, तत्परिरक्षणाय कर्णदुर्योधनादीनां प्रयाणं चेत्येतेऽर्थाः संग्रथिताः । अङ्कोऽयमश्वत्थामाङ्क इत्यभिधीयते प्राचीनैर्विद्वद्भिः ।

**चतुर्थे चाङ्के**—प्रहारमूर्छितस्य रथस्थस्य दुर्योधनस्य सारथिनाऽपवाहनं, लब्धसंज्ञे दुःशासनपरित्राणार्थं समराय त्वरमाणे चास्मिन् भीमकृतदुःशासनवधनिवेदनं, संग्रामतः प्राप्तस्य सुन्दरकस्य संदर्शनं, तेन च संग्रामवार्तानिवेदनं, तत्र च भीमसेनकर्णयोः संग्रामः कर्णपुत्रस्य वृषसेनस्य संग्रामेऽर्जुनेन हननं, भग्नरथस्य च कर्णस्य रथान्तरारोहणपूर्वकं युद्धाय प्रयाणं, प्रयाणावसरे च दुर्योधनाय संदेशप्रेरणं, गान्धारीधृतराष्ट्रयोश्च दुर्योधनस्य मातापित्रोस्तदवलोकनार्थमागमनसूचनमित्येतेऽर्था विनिवेशिताः । अयं चाङ्कः सुन्दरकाङ्कः सुन्दराङ्क इति चाभिधीयते साहित्यदर्पणादिषु ।

**पञ्चमेऽङ्के**—दुर्योधनस्य मातापितृदर्शनं, इदानीमपि तावत्संधीयतां युधिष्ठिरेणेति ताभ्यांकृतस्योपदेशस्य दुर्योधनेनानादरणं, कर्णवधश्रवणं, ततश्च क्रुद्धस्य

दुर्योधनस्यार्जुनवधविनिश्चयः, क्रियतामिदानीं सेनापतिः शल्योऽश्वत्थामा वेति धृतराष्ट्रेणोक्तस्य दुर्योधनेनानङ्गीकरणं, तत्रैव भीमार्जुनयोरागमः, दुर्योधनेन साकं चानयोर्व्याहारः, युधिष्ठिरादेशश्रवणोत्तरं चानयोर्निष्क्रमणं, क्रुद्धस्याश्वत्थाम्नो दुर्योधनसमीप उपसर्पणं, तस्य च संग्रामे प्रवर्तितुमिच्छतः कर्णपक्षपातिना दुर्योधनेन प्रत्याख्यानं, धृष्टराष्ट्रेणाश्वत्थाम्नः संदेशप्रेरणं चेत्येतेऽर्थाः प्रतिपादिताः ।

**षष्ठे चाङ्के**—द्रौपद्या समं प्रविष्टस्य राज्ञो युधिष्ठिरस्य पुरस्तात्पाञ्चालकेन नाम दूतेन दुर्योधनवृत्तोपवर्णनं, तत्र च सलिले मग्नस्य दुर्योधनस्य श्रीकृष्णभीमार्जुनैरन्वेषणं, आरण्यकपुरुषवचनाद्विज्ञाय दुर्योधनपदपङ्क्तिचिह्नानि सरसि सलिलान्तःस्थितत्वे दुर्योधनस्य विनिश्चिते भीमसेनेन सरःसलिलस्यालोडनं, दुर्योधनस्य च बहिर्विनिर्गतस्य भीमेन समं युद्धं चेत्येतेषु विनिवेदितेषु पाञ्चालकेनार्थेषु तृषाक्रान्तत्वमभिनयतश्चार्वाकस्य नाम दुर्योधनसुहृदो राक्षसस्य मुनिवेषप्रच्छन्नस्यागमनं, तेन च दुर्योधनेन हतो भीमसेनः किरीटी च दुर्योधनेन समं गदया योद्धुं प्रवृत्त इति निवेदनं, ततश्च भग्नमनोरथतया निष्फलजीवितत्वमात्मनः संभावयतोर्द्रौपदीयुधिष्ठिरयोश्चिताप्रवेशनिश्चयः, ज्वलितायां चितायां प्रेततया संभाविताय भीमाय सलिलाञ्जलिं प्रदाय चितां प्रवेष्टुमुद्युक्ते युधिष्ठिरे रिपुरुधिरविलिप्ताङ्गतया दुरन्वेयस्य भीमस्य प्रवेशः, तत्र च युधिष्ठिरस्य दुर्योधनोऽयमिति संभावना, अन्ततश्च भीम इति विनिश्चयः, भीमेन द्रौपदीवेण्या दुःशासनरुधिरलिप्ताभ्यां पाणिभ्यां संयमनं तदनु श्रीकृष्णार्जुनयोरुपगमनं, उपसंहारश्चेत्येतेऽर्थाः समुपवर्णिताः ।

इतिवृत्तं चैतत्पञ्चभिः सन्धिभिर्विच्छिन्नम् । तत्र प्रथमेऽङ्के बीजभूतस्य युधिष्ठिरोत्साहस्योत्पत्तिरिति मुखसन्धिः । द्वितीये चाङ्के भीष्मादिवधेन किंचिल्लक्ष्यस्य कर्णादीनां चावधादलक्ष्यस्य बीजस्योद्भेद इति प्रतिमुखसन्धिः । तृतीये चतुर्थस्य च कियत्यंशे द्रोणदुःशासनादिवधसूचनेन पाण्डवानां जयप्राप्तेः

संभवात्सुन्दरकवचनन्तोऽवमतेन च वृषसेनार्जुनभीमकर्णादियुद्धेन पुनः पुनर्बीजान्वेषणाच्च गर्भसन्धिः । ततः पञ्चमाङ्के भीमार्जुनयोर्दुर्योधनोपगमनमारभ्य षष्ठेऽङ्के रुधिराक्तभीमसेनागमनपर्यन्तोऽवमर्शसन्धिः । ततः परं च निर्वहणसन्धिरिति । एषां च सन्धीनामङ्गानि तल्लक्षणानि तेषां समन्वयश्चेत्येतदावश्यकमपि नात्र शक्यते विस्तरभीरुभिर्विधातुमस्माभिः ।

**अत्र च नायको** युधिष्ठिरः । स च नात्मश्लाघी, क्षमाशीलः, अतिगम्भीरो, महासत्त्वोऽचञ्चलवृत्तिर्निगूढमानो दृढव्रतश्चेति धीरोदात्तः । नायिका तु द्रौपदी । सा च स्वीया प्रगल्भा च । प्रतिनायकस्तु दुर्योधनः । भीमः पुनरत्र दूरानुबन्धिनः प्रासङ्गिकस्येतिवृत्तस्य नायक इति पताकानायकः पीठमर्दो वाऽवबोद्धव्यः । तदाहुः 'पताका—( प्रासङ्गिकेतिवृत्तविशेष—) नायकस्त्वन्यः पीठमर्दो विचक्षणः । तस्यैवा—( नायकस्यैवा—) नुचरो भक्तः किंचिदूनश्च तद्—( नायक—) गुणैः ॥' इति ।

**अत्र च वीरो रसः प्रधानः** । तस्य च दुर्योधनादय आलम्बनानि । दुर्योधनादिचेष्टाश्चोद्दीपनानि । विजयानुकुलव्यापारादयोऽनुभावाः । धैर्यादयश्च व्यभिचारिणः । एभिश्च व्यक्ततां गतो युधिष्ठिरस्योत्साहो वीररसत्वं भजते।युद्धविषयकश्चायं युधिष्ठिरस्योत्साह इति **युद्धवीर एवायं रसः** । अङ्गभूताः पुनरत्रापरेऽपि रसा विद्यन्ते। यथा द्वितीयेऽङ्के **शृङ्गारः** । स च भानुमतीमालम्ब्य प्रवृत्तस्तस्या एव च लीलाभिरुद्दीपितः । न चात्र प्रतिनायकनिष्ठो रतिरूपः स्थायी भाव इति नायं रसः किन्तु रसाभास एवेति वक्तव्यम् । स हि रसाभासो यो नायकस्य प्रणयिनीमालम्ब्य प्रतिनायके रतेरुद्भेदः । अत्र पुनः प्रतिनायकस्यापि दुर्योधनस्यात्मवल्लभामालम्ब्य रतेरुद्बोध इति नैष रसाभास इति । **करुणः** पुनस्तृतीयेऽङ्के द्रोणवधे । तत्र हि प्रेतं द्रोणमालम्ब्य, प्रवृत्तस्तत्परिभववृत्तान्तादिभिरुद्दीपितोऽश्वत्थामगतः शोकः करुणात्मना परिणमतीति ।

षष्ठेऽङ्के चार्वाकवधाद्भीमसेन मरणं निश्चितवतां युधिष्ठिरादीनामकस्मादेव तद्दर्शनादद्भुतो रसः । चतुर्थेऽङ्के भीमदर्शनाद्दुर्योधनसूतस्य भीत्युद्गमाद्भयानकः द्वितीयेऽप्यङ्के वात्यावेगातिशयेन भानुमत्यां भीतेः संजननात्स एव । तृतीयेऽङ्के रुधिरप्रियवसागन्धयोः प्रसङ्गे **बीभत्सः** । तत्रैव चाश्वत्थाम्नः संरम्भे **रौद्र** इति । अत्र च द्वितीयेऽङ्के रसस्याकाण्डे प्रथनमित्यालङ्कारिका मन्यन्ते । संप्रवृत्ते हि भुवनभीषणे संग्रामे संशयास्पदीभूते च विजये नैतत्स्वाभाविकं यद्दुर्योधनसदृशः सांग्रामिकः पुरुषो विहाय संग्रामोचितं व्यापारं भार्यया साकं विहरन्नेव यापयेत्कालमिति । न ह्यसौ समयो विहारस्येति । अत एव चैतदकाण्डे प्रथनं रसस्येति । एष पुनरत्र कवेरुद्देशो यदात्मनः पराक्रमे प्रकाममेव श्रद्दधानः सावज्ञमेव च पाण्डवसदृशान्वीरानवेक्षमाणो निश्चिन्तस्तत एव च समय एतस्मिन्नपि भार्यया समं विहरन्विनष्टो दुर्योधन इति प्रकाशनीयमिति । अत एव च प्रथितोऽत्र रसोऽयं कविना ।

यानि चात्र कविनोपनिबद्धानि पात्राणि तेषु भीमसेनो द्रौपदी दुर्योधनो भानुमत्यश्वत्थामा कर्णो धृतराष्ट्रो गान्धारी चार्वाकश्चेत्येतान्येव विशेषतो निर्वर्तकानि कार्यस्य । सहदेवार्जुनप्रभृतीनि च स्तोकमेव कार्यं निर्वर्तयन्तीति । एतेषु च शत्रुकृतानामपराधानामेकान्तत एवासहिष्णुः प्रभावशाली निर्भीकोऽविगणितरिपुर्दृढप्रतिज्ञो **भीमः** । एतच्च 'चञ्चद्भुजभ्रमितचण्डगदाभिघात' इत्यतः, "युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः, अद्यैकं दिवसं ममासि न गुरुरि'त्यादिभिश्चैतदीयैर्वचनैः प्रतीयते । **द्रौपद्यपि** शत्रुकृतेनावमानेनान्तःप्रज्वलन्ती भीमसेनादीनामुत्साहस्याभिवर्धनाय प्रयतमाना संग्रामकुतूहलिनी च प्रगल्भा योषित् । एतदपि प्रथमाङ्कगतैरेतस्या 'नाथ न लज्जन्त एते ' 'नाथ अश्रुतपूर्वमेतद्वचनं तत्पुनरपि तावद्भण । ' इत्यादिभिर्वचनैः स्फुटीभवति । **दुर्योधनस्तु** मानी कर्तव्याकर्तव्यविचारशून्यः शूरो निर्भीकः स्वीयप्रभाव एकान्ततः श्रद्दधानः शत्रूणां निर्बलत्वं मन्वानो निश्चिन्तः समयाद्यनभिज्ञ आग्रहग्रहिलः स्वत

न्त्रमतिशून्य उपायानभिज्ञः संदेहशीलश्च । संदेहशीलत्वं कर्तव्यादिविचारशून्यत्वं चास्य द्वितीयेऽङ्के भानुमतीस्वप्नवृत्तान्तश्रवणप्रसङ्गे च प्रवृत्तेऽपि संग्रामसंमर्दे भानुमतीसमागमाभिलाषतश्च विज्ञायते। आत्मप्रभावश्रद्धा च प्रतिज्ञातेऽप्यर्जुनेन-जयद्रथवधेऽस्य मनसोऽव्याकुलत्वमवबोधयति। समुपस्थितेऽपि विषमतमे समयेऽश्वात्थाम्नः सैनापत्येऽभिषेचनस्यानङ्गीकारश्च समयानभिज्ञतामस्य द्योतयति। इदमेव चोपायानभिज्ञत्वमपि । संपन्नायामपि महीयस्यां हानावाशरीरपातं पाण्डवेषु-वैरानुबन्ध आग्रहग्रहिलतामस्य विस्पष्टयति । द्रोणपराक्रमाभिज्ञस्याप्येतस्य कर्ण-वचनानुवर्तित्वं स्वतन्त्रमतिशून्यतामवगमयति । 'कृष्टा केशेषु भार्या तव तव च पशोरि'त्यादीनि चास्य वचनानि निर्भीकतां गमयन्ति। शौर्यं पुनरस्य स्पष्टम्। **भानुमती** तु पतिव्रताऽऽस्तिक्यवती समयज्ञा चतुरा चेति द्वितीयाङ्कतः स्पष्टम्। **अश्वत्थामा** तु गरीयान्वीरः शत्रुनिर्मूलनक्षमः कौरवपक्षपाती गुरुजनानुरागी प्रज्ञश्चात्यन्तममर्षशीलश्च। तत्र तावत्कृपादीनां' किं न संभाव्यते भारद्वाजतुल्यविक्रमे दिव्यास्त्रग्रामकोविदे भवति' इत्यादिभ्यो वचनेभ्यः शत्रुनिर्मूलनक्षमत्वमस्य स्फुटी भवति। कौरवपक्षपातिता तु स्पष्टा । द्रोणापवादासहिष्णुता चास्य गुरुजनानुराग-मवबोधयति। अत्यन्तामर्षशीलता च 'इयं सा जातिः परित्यक्ते' त्यादिभिर्वचनैः स्पष्टीभवति । कर्णकृतावमानासहिष्णुता च तेजस्वितां कर्णस्य शिरसि वामपादविन्यासश्च शौर्यमस्याभिव्यञ्जयति। सत्यसन्धोऽप्ययं सति प्रसङ्गे प्रतिज्ञाया अवज्ञातेति 'भीमाद्दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम् । ' इत्यतोऽस्य वचनतः स्पष्टम् । कृतज्ञोऽप्यसाववमानासहिष्णुः । अत एव च कर्णपक्षपातिनं दुर्योधनं परितत्याज पञ्चमेऽङ्के। **कर्णस्तु** कुटिलमतिः स्वसामर्थ्येऽतिमात्रमेव श्रद्धानः कर्णेजपः परावमानशीलः क्रोधनः शूरश्च । कर्णेजपत्वं कुटिलमतित्वं चास्य तत एवस्फुटीभवति यतोऽनेन द्रोणचरितमन्यथा ग्राहितो दुर्योधनः। शौर्यं पुनरर्जुनेन साकं संग्रामे स्पष्टम्। स्वसामर्थ्यश्रद्धा च 'धृतायुधो-यावदहं तावदन्यैः किमायुधैः? । यद्वा न सिद्धमस्त्रेण मम तत्केन सिध्यति? ॥'

इत्यादिवचनतो विशदीभवति । परावमानशीलता च विनैव प्रयोजनमश्वत्थाम्नोऽवज्ञानात्स्पष्टा । क्रोधनता च तद्वचनकुपितस्य संग्रामसंरम्भात् । **गान्धारीधृतराष्ट्रश्चे**त्येतौ कर्तव्यज्ञानशालिनौ समयस्वरूपस्यावगन्तारौ विवेकशीलावपि दुर्योधनस्यातिमात्रमेव वशंवदौ तदीयच्छन्दानुवर्तिनौ चेति तुरीयाङ्कतःस्पष्टम्। **चार्वाकः** पुनर्मायावी राक्षस इति स्फुट एव स्वजात्युचितः स्वभाव एतस्य । **सहदेवस्तु** विनीतो गुरुजनश्रद्धालुः प्रशान्तः शूरश्च । तदेतत्प्रथमाङ्कगतैरस्य वचनैः स्फुटीभवति । **अर्जुनस्तु** शूरश्च विनीतश्च । तदेतदपि तुरीयाङ्कगतैर्वचनैरस्य विशदीभवति । इति । एतेषां च पात्राणां तैस्तैराचरितैः समुत्पादितरसपरिपोषमतिमात्रमेव हृदयङ्गमं नाटकमेतत् । अत्र च यद्यपि बहव एव प्रसङ्गाः समाकर्षन्ति मानसं रसिकानां तथापि द्वितीयेऽङ्के भानुमतीस्वप्नवृत्तान्तस्तृतीयेऽश्वत्थाम्नः कर्णेन कलहः पञ्चमे भीमार्जुनकृतं धृतराष्ट्रदर्शनं षष्ठे चार्वाककृतं युधिष्ठिरवञ्चनं भीमोपगमश्चेत्येते विषयाः सविशेषमेव धूनयन्ति मूर्धानं मदयन्ति चान्तरङ्गं सहृदयानाम् । **नाटकमेत**त्प्रबलानपि रिपूनवज्ञाय कुटिलमतिमतमनुवर्तमानानां मन्दानां का वा गतिर्भवति, कथं चाप्रियं वचनं सौहार्दात्परिभ्रंशयति, कालगतिवशाच्च प्रबला अपि कीदृशीं विपदमुपयान्ति, उपागताश्च विपदं भगवति श्रद्दधानाः कालेनैव पुनः कथमुन्नतिमारोप्यन्ते, कथं च 'प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते' इत्येतद्विस्पष्टमेव प्रदर्शयति कौरवपाण्डववृत्तेन । अतश्च 'कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' इत्येष एवार्थः स्फुटीभवति । **नाटकेऽ**त्र नास्ति हृदयग्राहिणी भाषेति केचिदर्वाचीना मन्यन्ते । यद्यपि च नासौ कविकुलचक्रवर्तिनः कालिदासस्य कविकुलसार्वभौमस्य भवभूतेर्वा भाषायास्तुलामारोढुं शक्नोति तथापि तु हृदयहारिण्येवासौ । प्राचीनानां पुनः प्रियतमं नाटकमेतत् । अत एव च भूयोभिरुदाहृतानि प्रबन्धकृद्भिः पद्यान्यदसीयानि । विशेषतश्च दशरूपके च साहित्यदर्पणे च भूयांस्युदाहरणतयोपनिबद्धानि पद्या-

न्यत्रत्यानि। **क्वचित्क्वचित्पुनरत्र** समालक्ष्यते कालिदासाद्युपवर्णितानामर्थानां **छाया** । यथा 'भवतु सखीवचनादेव व्यक्तिर्भविष्यति' इति द्वितीयेऽङ्के दुर्योधनवचनम् । ईदृशमेव चैतच्छाकुन्तले शकुन्तलाविषये वचनं दुष्यन्तस्य । एवमन्यान्यपि स्थलानि स्वबुध्या समुन्नेयानि धीमद्भिः । विस्तरभयात्पुनर्नात्रोदाहर्तुं शक्यन्ते । **वेणीसंहार**मिति सत्यामपि संज्ञायां **वेणीत्यपि** नाटकमेतत्साहित्यदर्पणादिषु व्यवह्रियते । यथा दर्पणे षष्ठे परिच्छेदे 'बीजोपगमनं सन्धि'रिति निर्वहणाङ्गस्य सन्धेर्व्याख्यायां 'यथा वेण्यां भीमः, भवति ! यज्ञवेदिसंभवे !' इत्यादि। अत्र च यद्यपि कौरवविजये भीमसेनस्यैव विशेषतो विक्रमः संलक्ष्यते युधिष्ठिरस्त्वन्ततः षष्ठेऽङ्के प्रादुर्भूतस्तथापि विजयजन्यस्य राज्याभिषेकादेः फलस्य स्वामी युधिष्ठिर एवेति स एव नायक इति बोध्यम् । तदेवमुपहृतं नाटकस्यास्य स्वरूपमस्माभिः । अथेदानीं प्रणेतर्यस्य लेखनीं व्यापारयितुमिच्छामः ।

## वेणीसंहारस्य प्रणेता।

कविप्रवरः **श्रीमान्भट्टनारायणस्तु** कं वा जनपदमात्मनो जन्मना मण्डयामासेति नैतच्छक्यते वेणीसंहारतः सम्यक् प्रकल्पयितुम्। तत्र हि नास्त्येव तत्प्रकल्पने प्रमाणं किमपीति । केचित्तु नाटकेऽस्मिन्नेतेन मृगराजलक्ष्मण इत्यात्मा विशेषित इति मन्यन्ते । यदि चैतदित्थमेव स्यात्तदा सोऽयं न दाक्षिणात्य इति स्फुटमेव । मृगराजलक्ष्मा हि सिंहाचिह्नः सिंहोपनामेत्यर्थः। सिंहोपनामानश्च भट्टा दाक्षिणात्येषु नोपलभ्यन्त इति । डाक्टरबुइलसन्महोदयस्तु मृगराजलक्ष्मत्वं भट्टत्वं चेत्येतद्द्वितयं परस्परविरुद्धमेवेत्याह । तस्यायमाशयः । भट्टाः किल ब्राह्मणा भवन्ति सिंहोपनामानस्तु नैव ब्राह्मणा इति । तदेतदौत्तराहादिब्राह्मणपरिचयशून्यतामूलकमेव मतमेतस्य । सन्ति हि सिंहोपनामानो भूयांसो ब्राह्मणाः। यथा नानाविधोपाधिमण्डितो दरभङ्गाधिराजः श्रीरमेश्वरसिंहमहाभागः। तत एव च नैष विरोध इति द्रष्टव्यम् । केचितु वङ्गीयटागोरवंशीयः श्रीमान्

भट्टनारायण इत्याहुः । तत्र पुनः प्रमाणं नाधिगतमद्ययावदस्माभिः । यथा तथा वा भवतु, सोऽयं न दाक्षिणात्य इत्यविवादमिदम् । **एष किल पञ्चरात्रागमानुयायीति केचित्** । पञ्च रात्राणि ज्ञानानि यत्र तत्पञ्चरात्रम् । ग्रन्थविशेषो मतविशेषो वा । तदुक्तं नारदपञ्चरात्रे ' रात्रं च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम् । तेनेदं पञ्चरात्रं च प्रवदन्ति मनीषिणः । अतः परं च ' ज्ञानं परमतत्वं चेत्यादिना स्वात्मनश्च निरन्तरमित्यनेन पाञ्चरात्राभिमतानि पञ्च ज्ञानान्यभिधाय तेषामिष्टानिष्टत्वमप्युक्तम् । यथा—प्रथमं सात्विकं ज्ञानं, द्वितीयं तु तदेव च । नैर्गुण्यं च, तृतीयं च ज्ञानं च सर्वतः परम् । चतुर्थं च राजसिकं भक्तस्तन्नाभिवाञ्छति । पञ्चमं तामसं ज्ञानं विद्वाँस्तन्नाभिवाञ्छति । ज्ञानं पञ्चविधं प्रोक्तं पञ्चरात्रं विदुर्बुधाः ।' इति । पञ्चरात्रं सप्तविधमिति नारदपञ्चरात्रे ' ब्राह्मं शैवं च कौमारं वासिष्ठं कापिलं परम् । गौतमीयं नारदीयमित्थं पञ्चविधं स्मृतम् ॥' इति । ब्रह्मवैवर्ते तु ' वासिष्ठं नारदीयं च कापिलं गौतमीयकम् । परं सनत्कुमारीयं पञ्चरात्रं च पञ्चकम् ॥' इत्युक्तम् । पाञ्चरात्राश्च पञ्चरात्रागमानुसारिणः षड्विधवैष्णवेष्वन्यतमाः । **भट्टनारायणस्य पुनः पाञ्चरात्रत्वे न किञ्चिदपि प्रमाणं पश्यामः** । यत्पुनर्वेणीसंहारे प्रथमेङ्के ' आत्मारामा विहितरतयः ( १–२३ ) ' इत्यत्र भगवतः श्रीकृष्णस्य परमात्मत्वमुपवर्णितं भीममुखेन, यदपि च षष्ठाङ्कावसाने युधिष्ठिरवचने ' त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृतो भाषसे (६–४९)' इत्यत्र, यदपि च भरतवचने ( ६-४६ ) ' भवतु भगवन् भक्तिर्द्वैतं विना पुरुषोत्तमे ' इत्युपवर्णितं तत्रादिमं द्वितय पाण्डवानां भगवति श्रीकृष्णे विद्यमानस्य भावस्य प्रदर्शनायैव । उपवर्णितश्च भगवतः श्रीकृष्णस्य परमात्मभावो महाभारतादिष्वपि । विश्वरूपप्रदर्शनं च भगवद्गीतागतं विदितमेव प्रायः सर्वेषाम् । लीलामानुषविग्रहोऽपि श्रीकृष्णो न मानुषस्वरूपेण किन्तु दिव्यस्वस्वरूपेणैवोपवर्ण्यते कविभिः । आलङ्कारिका अपि दिव्यो नायकः श्रीकृष्ण इत्याहुः । यथा साहित्यदर्पणे षष्ठे परिच्छेदे

'दिव्योऽथ दिव्यादिव्यो वे' त्यस्य पदस्य व्याख्यायां 'दिव्याः श्रीकृष्णादयः' इति श्रीविश्वनाथः । 'भवतु भगवन् भक्तिर्द्वैतं विना पुरुषोत्तमे' इति पद्ये पुरुषोत्तमेऽर्थाद्विष्णौ भक्तिः प्रार्थ्यते किन्त्वसौ द्वैतसंपर्कशून्यैव । ततश्च सगुणोपासनायां भगवतो विष्णोरेव भक्तिं प्रार्थयमानोऽप्ययं द्वैतमनीहमानः **श्रीभट्टनारायणः परमार्थतोऽद्वैतवाद्येवेति** स्पष्टम् ।

## कदा पुनर्भट्टनारायणः समुत्पन्नः

इतीदानीं विचार्यते । प्रत्यक्षतस्तावदत्र प्रमाणं किमपि नोपलभ्यतेऽस्माभिः । केवलं तु केंब्रीजविश्वविद्यापीठपण्डितेन श्रीमता म्याक्डोनेल्डमहोदयेन प्रकाशितं कस्यापि ताम्रशासनस्यास्तित्वं यत्र प्रतिग्रहीतृत्वेन श्रीमान् भट्टनारायणः समुल्लिखितः । एतदपि नाद्यापि नो नयनसरणिमारूढम् । आरूढेऽपि चैतस्मिन्सोऽयमेवास्य प्रतिग्रहीता भट्टनारायणो यः किल प्रणेता वेणीसंहारस्येत्यत्र प्रमाणं किमप्यावश्यकमेव । तदपि चेल्लभ्येत तदा स्याद्विनिर्णीतः समयो भट्टनारायणस्येति । न पुनरधिगतमेतदस्माभिरद्यापि । तदत्रानुमानमेवैकं प्रमाणीकृत्य प्रवर्तनीयमित्येतदेव समापतितम् । **अनुमानतश्च काव्यालङ्कारसूत्रप्रणेतुः श्रीमतो वामनात्प्राचीनो भट्टनारायण इति स्फुटीभवति** । वामनो हि नैकेषु स्थलेषूदाजहार काव्यालङ्कारसूत्रवृत्तौ वचनानि वेणीसंहारगतानीति । यथा सहोक्त्युदाहरणे 'अस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ।' इति । एतच्च वेण्यां पञ्चमेऽङ्के षट्त्रिंशं पद्यम् । यथा वा पञ्चमाधिकरणे द्वितीयाध्याये 'वेत्स्यसीति पदभङ्गा' दितिसूत्रव्याख्यायां 'पतितं वेत्स्यपि क्षितौ' इति । यथा च तत्रैव 'संयमयितुमारब्धः ।' इति एवमन्यत्रापि द्रष्टव्यम् । भूयांसः किल वामनाः प्रादुरभूवन् भारते वर्षे । तत्र भट्टबाणोपाधिर्वामनः, काव्यालङ्कारसूत्राणां प्रणेता वामनः, पाणिनीयसूत्राणां काशिकाख्यवृत्तेर्विरचयिता वामनश्चेति त्रय एव संस्कृतपण्डितेषु प्रथिताः । तत्र

तावद्भट्टबाणोपाधिर्वामनो वामनभट्टबाण इत्यात्मानमुल्लिखति । एष एव च पार्वतीपरिणयादीनां प्रणेतेति पार्वतीपरिणयस्योपोद्घाते प्रियसुहृदोऽस्माकमभिनवभट्टबाणशब्दतर्कालङ्कारविद्याभूषणभट्टाचार्याः श्रीकृष्णमाचार्याः सप्रमाणं समसाधयन् । काव्यालङ्कारसूत्राणां ग्रथयिता तु वामनो नात्मानं भट्टबाणतयोल्लिखतीति नायं सः । काशिकावृत्तेर्विनिर्माता तु वामनः काव्यालङ्कारसूत्राणां विरचयितुर्वामनाद्भिद्यते नो वेति गरीयान् संदेहः । काव्यालङ्कारसूत्राणां हि निर्माता वामनः परमो वैयाकरणः । तदेतत्काव्यालङ्कारसूत्राणां प्रायोगिकाख्यस्याधिकरणस्य द्वितीयाध्यायतः सुस्पष्टमवगम्यते । एतेन हि प्रख्यापितमात्मनः परमवैयाकरणत्वं पाणिनीयत्वं च । उपहृतानि ह्यत्र व्याख्यायां पाणिनेरेव सूत्राण्येतेन । अत्र च पञ्चमाधिकरणस्य द्वितीयेऽध्याये 'रुद्राविल्येकशेषोऽन्वेष्यः' इति प्रथमं सूत्रम् । अत्र च रुद्रश्च रुद्राणी च रुद्राविल्येकशेषो न भवतीत्यभिधाय तत्तुल्यत्वादेव 'इन्द्रौ भवौ शर्वौ' वित्यादयोऽपि प्रयोगाः प्रत्युक्ता इत्यभिहितम् । अत्र प्रत्युक्त एव चेन्द्राविल्येकशेषः काशिकायां प्रथमाध्यायद्वितीयपादगतसप्तषष्टसूत्रव्याख्याने 'एवकारः किमर्थः । इन्द्रश्चेन्द्राणी चेन्द्रेन्द्राण्यौ ।' इत्यत्र प्रदर्शितः प्रत्युक्ततया । अन्यत्र पुनर्व्याकरणग्रन्थे पुमान्स्त्रियेत्यत्र नैतत्प्रत्युदाहरणम् । किं च काव्यालङ्कारसूत्रेषु प्रथमाधिकरणे द्वितीयाध्याये 'अरोचकिनः सतृणाभ्यवहारिणश्च कवयः ।' इत्यादिमं सूत्रम् । नात्र सतृणाभ्यवहारिशब्दो निरुक्तः केवलं तु गौणार्थ इत्युक्तम् । एष पुनः शब्दः काशिकायामेव व्याख्यात उदाहरणप्रसङ्गेन । अव्ययं विभक्तीत्यत्राव्ययीभावविधायके सूत्रे व्याख्यायामुक्तमेतेन 'साकल्यमशेषता । सतृणमभ्यवहरति । न किंचिदभ्यवहार्यं परित्यजतीत्ययमर्थोऽधिकार्थवचनेन प्रतिपाद्यते ।' इति । यद्यपि सतृणमत्तीति साकल्य उदाहृतं दीक्षितचरणैस्तदन्यैश्च तथाप्यभ्यवहारसंबद्धस्य सतृणशब्दस्य प्रयोगो नान्यत्र संदृष्टः । ततश्च प्रतीयत आत्मन एकान्ततः परिचितः सतृणाभ्यवहारशब्दः काशिकायां व्याख्यातः समुपनिबद्धः काव्यालङ्कारसूत्रेष्वेतेन । तत्र

चास्यान्यत्र स्वयं व्याख्याततया मुख्यमर्थमप्रकाश्य लाक्षणिक एवार्थः प्रकाशित इति । अतश्च **काव्यालङ्कारसूत्राणां प्रणेतैव वामनः काशिकायाः प्रणेतेति सुस्पष्टमनुमीयते**। यदि च नात्र प्रतिबन्धकं किमपि तदा ख्रिस्तीयानां सप्तमशताब्द्यां प्रादुर्भूतः काव्यालङ्कारसूत्राणां निर्माता वामन इत्यवधार्येत। इट्सिंगाख्यो हि चीनपथिकः, काशिकायाः प्रणेता ख्रिस्तीयानां ६६० तमे वत्सरे निधनमनुप्राप्त इत्याचख्यौ । ततश्च ततः प्राचीनतया भट्टनारायणः ख्रिस्तीयानां षष्ठ्यामेव शताब्द्यां ततः प्राग्वा प्रादुर्भूत इति स्फुटीभवति ।

अपरे तु काशिकाकर्तुर्विभिन्न एव काव्यालङ्कारसूत्राणां विरचयिता वामन इत्याहुः । एष च श्रीमतः काश्मीराधिपतेर्जयापीडस्य मन्त्रीति 'मनोरथः शङ्खदत्तश्चटकः सन्धिमाँस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥' इत्यतो राजतरङ्गिणीपद्यात्प्रतीयत इति वदन्ति । जयापीडश्च ख्रिस्तीयानां ७७९ तमं वत्सरमारभ्य ८१३ तमं वर्षं यावत्पृथिवीमनुशशासेति पुरा वृत्तविदः । तत एव च ख्रिस्तीयानामष्टम्याः शताब्द्या उत्तरार्धे नवम्याश्च प्रथममादे वामनावस्थितिरित्यनुमिमते । अतोऽपि च ख्रिस्तीयानां सप्तम्यां शताब्द्यां ततः प्रागेव वा भट्टनारायणप्रादुर्भाव इति स्फुटीभवति । किन्तु योऽयं जयापीडभूपतेर्मन्त्री स एव काव्यालङ्कारसूत्राणां प्रणेता वामन इत्यत्र नांशतोऽपि प्रमाणमुपलभ्यते । तत एव च नात्र मते शक्यते विश्वासितुमस्माभिः ।

अपरे पुनरनुमानत एव साधयन्ति वामनसमयम् । तथाहि । समासोक्तावाक्षेपे चालङ्कारे व्यङ्ग्यापेक्षया वाच्यस्यैवार्थस्य प्राधान्यमिति प्रतिपादयितुकामो ध्वन्यालोककृत् 'उपमानाक्षेपश्चाक्षेपः' इतिसूत्रे 'उपमानस्याक्षेपतः प्रतिपत्ति (राक्षेपः) रित्यपि सूत्रार्थ' इति वामनोक्तेस्तन्मतेनाक्षेपस्य भामहमतेन च समासोक्तेरुदाहरणभूतमेकमेव पद्यमुदाजहार । तच्च श्रीमताऽभिनवगुप्तेन ध्वन्यालोकस्य लोचनाख्यायां व्याख्यायां 'वामनाभिप्रायेणायमाक्षेपो

भामहाभिप्रायेण तु समासोक्तिरित्यमुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोरिदमेकमेवोदाहरणं व्यतरद्ग्रन्थकृत् । ' इति स्पष्टीकृतम् । ततश्च ध्वन्यालोककर्तुः श्रीमदानन्दवर्धनाचार्यात्प्राचीनः काव्यालङ्कारसूत्राणां प्रणेता वामन इति स्फुटीभवति । श्रीमानानन्दवर्धनाचार्यश्च ख्रिस्तीयानां नवम्याः शताब्द्या उत्तरार्धे श्रीमत्यवन्तिवर्मणि भूपतौ काश्मीराननुशासति प्रादुरभूदिति राजतरङ्गिणीतो विज्ञायते । ततश्च तस्यावसरे प्रमाणीक्रियमाणमतः काव्यालङ्कारसूत्राणां प्रणेता ततः प्राचीनतम इति निर्विशङ्कमेवेदम् । अतश्च प्रतीयते ख्रिस्तीयानामष्टम्यां शताब्द्यां ततः प्रागेव वा वामनोत्पत्तिरिति । तेन चोदाहृतानि वेणीसंहारपद्यानि । अशुद्धतयाऽऽपाततः प्रतीयमानाश्च केचिद्वेणीसंहारगतवचनप्रयोगाः प्रदर्श्य व्यवस्थितिं साधुतयोपपादिताः । ततश्च प्रचुरप्रचारं च विद्वद्भिः प्रमाणीक्रियमाणं च वामनावसरे वेणीसंहारमिति प्रतीयते । अन्यथा हि प्रयोगाणामेषां शुद्धिमनुपपाद्य दोषप्रकरण एव न्यासमकरिष्यद्वामन इति । अत एव च वामनतः सुतरां प्राचीनो वेणीसंहारप्रणेता भट्टनारायण इति ख्रिस्तीयानां सप्तम्यां शताब्द्यां ततः प्रागेव वा संजातः सोऽयमिति प्रतीयते । अष्टम्यास्तु शताब्द्या नायमर्वाचीनः कथंचिदपि ।

यत्पुनः श्रीमतो भट्टनारायणस्य समयं निर्णयद्भिः काव्यप्रकाशादिदशरूपकान्तानां प्रबन्धानां कालनिर्णयेन व्याप्तानि भूयांसि पत्राणि तदेतदाडम्बरमात्रम् । यो हि सुतरां प्राचीनस्तस्यैव प्रबन्धतो विनिर्णेतुं शक्ये कविसमयेऽर्वाचीनतमानां प्रबन्धेषु गतानां वचनानामुपनिबन्धनस्य नितान्तमेवानुपयुक्तत्वादिति ।

## पाश्चात्येषु पुनः पण्डितेषु

(१) श्रीमान् **ग्रील** ( Grill ) **महोदयः** ख्रिस्तीयानां १८७१ तमेऽब्दे संमुद्रितस्य वेणीसंहारस्योपोद्घाते **श्रीमान् भट्टनारायणः ख्रिस्तीयानां षष्ठ्यां शताब्द्यां** प्रादुरभूदित्याह । (२) श्रीमान् **बुइलूसन्महो-**

**पारिपार्श्वकः**—भाव ! कुत एतत् । (की)

**सूत्रधारः**—( पृष्ठतो विलोक्य । ) अये, कथमयं वासुदेवगमनात्कुरुसंधानममृष्यमाणः पृथुललाटतटघटितविकटभ्रुकुटिना दृष्टिपातेनापिबन्निव नः सर्वान्सहदेवेनानुगम्यमानः क्रुद्धो भीमसेन इत एवाभिवर्तते । तन्न युक्तमस्य पुरतः स्थातुम् । (कु)

( इति निष्क्रान्तौ । ) (कू)

---

मयि शत्रुनिर्मूलनक्षमे भीमे जीवति सति स्वस्थाः सुखिता भवन्तु इति प्रश्ने काकुः । यावदहं जीवामि तावत्कथमेषामस्मासु प्रगाढमपराध्यतां स्वास्थ्यं भवत्वित्यर्थः । वाक्यगतहेतुकं काव्यलिङ्गमलङ्कारः । चरणत्रयेण स्वास्थ्याभावहेतोः प्रतिपादनात् । अत्र च लाक्षागृहदाहादेरितिवृत्तस्य काव्यार्थभूतस्योत्पत्तेरभिधानादुपक्षेपाख्यं नाटकीयमुखसन्धेरङ्गमुक्तं भवति । तदाहुः 'काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृत' इति । दुर्योधनेन किल निर्माय लाक्षामयं सदनं तत्र प्रवेशिताः सरलमतयः पाण्डवाः । तत्र च निवसत्स्वेतेषु समर्पितोऽग्निः । छद्मना विषमिश्रमन्नं खादितो भीमः । द्यूते च प्रवेश्य युधिष्ठिरमपहृता पाण्डवानां लक्ष्मीरित्यादिकं भारते द्रष्टव्यम् । वसन्ततिलकाख्यं वृत्तम् ।

(कि) आकर्णयतः शृणुतः ।

(की) एतत् लाक्षागृहेत्यादिवचनं कुतः कस्मात्पुरुषाद्विनिर्गतमिति शेषः । क एवमाहेति भावः ।

(कु) पृष्ठतो नेपथ्यतो वचनस्यास्य प्रवृत्तत्वात्पृष्ठवर्तिनि प्रदेशे विलोक्य दृष्ट्वा । अये इति संभ्रमेऽव्ययम् । ' अये क्रोधविषादयोः । संभ्रमे' इति हैमः । कथमित्यपि तत्रैवार्थे 'कथं प्रश्ने प्रकारार्थे संभ्रमे' इति हैमः । अव्ययद्वयप्रयोगश्च रोषारुणदृशो भीमसेनस्यावेक्षणात्संभ्रमातिशयं द्योतयति । वासुदेवस्य श्रीकृष्णस्य गमनात् हेतुभूतात् कुरूणां संधानं सन्धिममृष्यमाणोऽसहमानः । स्वरितञित इति मृषेस्तङ् । पृथुनि विशाले ललाटतटे घटिता रचिता विकटा कराला भ्रुकुटिर्भ्रूर्यत्र तथाभूतेन दृष्टिपातेन विलोकनकर्मणा नः सर्वानापिबन्निव सहदेवेनैतत्संज्ञकेन भ्रात्राऽनुगम्यमानः क्रुद्धः क्रोधं प्राप्तो भीमसेन इतोऽत्रास्मदधिष्ठिते प्रदेश एव अभिवर्तत आगच्छति । तत् तस्मात् अस्य अस्मद्वचनतः क्रुद्धस्य पुरतः पुरः । निरङ्कुशाः कवयः । स्थातुं न युक्तं न योग्यम् । अर्हार्थस्योपपदत्वात् 'शकधृषे' त्यादिना तुमुन् ।

(कू) इति उक्त्वेति शेषः । निष्क्रान्तौ गतौ । सूत्रधारपारिपार्श्वकाविति शेषः ।

## प्रस्तावना। (कृ)

( ततः प्रविशति सहदेवेनानुगम्यमानः क्रुद्धो भीमसेनः । )

**भीमसेनः**—आः दुरात्मन्वृथामङ्गलपाठक शैलूषापसद । ('लाक्षागृहानल-' (१।८) इत्यादि पुनः पठति। ) (कॄ)

**सहदेवः**—( सानुनयम्। ) आर्य, मर्षय मर्षय । अनुमतमेव नो भरतपुत्रस्यास्यवचनम् । पश्य । ( 'निर्वाणवैरदहनाः' (१।७) इति पठित्वान्यथाभिनयति। (के)

**भीमसेनः**—( सोपालम्भम्। ) न खलु न खल्वमङ्गलानि चिन्तयितुमर्हन्ति भवन्तः कौरवाणाम् । संधेयास्ते भ्रातरो युष्माकम् । (कै)

---

(कृ) प्रस्तावना । 'नटीविदूषको वापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ॥' इत्युक्तलक्षणा । अत्र चास्याः कथोद्धातो नाम भेदः । अत्र हि सूत्रधारीयवाक्यस्यार्थं धार्तराष्ट्राः स्वस्था भवन्त्वित्येवंविधमादाय प्रविष्टो भीमसेन इति । तदाहुः 'सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा । भवेत्पात्रप्रवेशश्चेत्कथोद्धातः स उच्यते ॥' इति श्रीविश्वनाथादयः ।

(कॄ) पुनः पठति क्रोधावेगवशात्पुनः पाठः ।

(के) सानुनयम् । अनुनयेन सान्त्वनेन सहितं यथा तथा । आर्य ज्येष्ठभातः 'आर्येति पूर्वजो भ्राता' इति भरत-। मर्षय सहस्व । संभ्रमाद्द्विर्वचनम्। भीमसेनस्य क्रोधादनिष्टमाशङ्कमानस्य संभ्रमः। भरतपुत्रस्य नटस्य 'शैलूषो भरतः सर्वकेशी भरतपुत्रक' इति नटपर्यायेषु हेमः । सूत्रधारस्य । अनुमतं संमतम् । अनुमतत्वं समर्थयति पश्येति । मदीयं करिष्यमाणमभिनयं विलोक्य विचारयेत्यर्थः । अन्यथा अमङ्गलार्थकत्वेन अभिनयति श्लोकार्थमनुकरोति । तथाच म्रियन्तां क्षतगात्रा भूमौ पतितरक्ताश्च कौरवा इत्येव भरतपुत्रवचनस्यार्थ इति भावः ।

(कै) सोपालम्भम् उपालम्भेन निन्दापूर्वतिरस्कारेण सहितं यथा तथा । असंमतस्यापि वचनस्य संमततया प्रदर्शनमुपालम्भे हेतुः । भवन्तो मद्भिन्नाः पाण्डवाः कौरवाणामस्मच्छत्रूणामिति भावः । अमङ्गलानि अभद्राणि मरणादीनि । न खल्वित्यव्ययद्वयस्य द्विर्वचनमत्यन्तनिषेधाववोधाय तत एव च नात्र प्रकृतक्रियाया अर्हणालक्षणाया दार्ढ्यावगमः । अत्यन्तं नार्हन्तीत्यर्थः । चिन्तयितुम् चिन्तयितुमपि किंपुनः कर्तुमिति ध्वन्यते । कुत इत्याह ते लाक्षागृहदाहादिना प्रसिद्धाः कौरवा संधेयाः सन्धातुं योग्या इत्युपालम्भः ।

**सहदेवः**—(सरोषम्।) आर्य! (**को**)

धृतराष्ट्रस्य तनयान्कृतवैरान्पदे पदे ।
राजा न चेन्निषेद्धा स्यात्कः क्षमेत तवानुजः ॥ ९ ॥

**भीमसेनः**—एवमिदम्। अत एवाहमद्यप्रभृति भिन्नो भवद्भ्यः। पश्य। (**कौ**)

प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि–
र्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम् ।
जरासंधस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा संधिं भीमो विघटयति यूयं घटयत ॥ १० ॥

---

(**को**) सरोषं भीमसेनवचनेन शत्रूणामपराधस्मरणाद्रोषः ।

(९) धृतराष्ट्रस्येति । पदे पदे स्थाने स्थाने कृतवैरान् प्रकटितद्वेषान् धृतराष्ट्रस्य तनयान् पुत्रान्। एतेन संबन्धस्य विप्रकृष्टत्वं द्योत्यते । चेद्यदि राजा युधिष्ठिरः। राजपदं चानुल्लङ्घनीयाज्ञत्वमिवासंमतत्वमपि द्योतयति। निषेद्धा निषेधकर्ता न स्यान्न भवेत्तदेति शेषः। कः तव अमर्षणस्य शूरस्य च भीमसेनस्यानुज इति शौर्यातिशयविशिष्टत्वं द्योत्यते । क्षमेत शत्रूणामपराधं सहेत? न कोऽपीत्यर्थः। अत्र राजा न चेन्निषेद्धा स्यादितिवाक्यस्यानुप्रवेशेऽपि न दोषः। क्षमायां हेतोरवश्यमभिधेयत्वेन सापेक्षत्वात् । निरपेक्षत्वे हि गर्भितत्वं दोषाय प्रकल्पते। एवंविधेषु पुनः स्थलेषु तद् गुण एव। तदाहुः 'गर्भितत्वं गुणः क्वापी'ति । एवं च राज्ञ आज्ञाया अनुल्लङ्घनीयत्वादेव तूष्णींभूताः स्मो न तु स्वेच्छयेति भावः। पथ्यावक्त्रं वृत्तम्। युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितमिति लक्षणात्।

(**कौ**) इदं भवदुक्तं राजाज्ञाया अनुल्लङ्घनीयत्वम्। एवं यथोक्तमेव । युधिष्ठिराज्ञामपेक्ष्यैव भवन्तस्तूष्णींभूता इति नैतन्मिथ्येति भावः। अत एव भवतां युधिष्ठिराज्ञापेक्षित्वादेव । अहं भवद्भ्यो मदितरेभ्यः पाण्डवेभ्यः भिन्नः। भिन्नत्वमुपपादयति पश्येति ।

(१०) प्रवृद्धमिति । खल्विति वाक्यालङ्कारे। शिशोर्बाल्यावस्थायां विद्यमानस्यैव मम यत् कुरुभिः लक्षणया कुरुवंशोद्भवैः कौरवैर्दुर्योधनादिभिः सहेतिशेषः । सहशब्दस्यार्थत्वेऽपि तृतीया। यद्वैरं विरोधः प्रवृद्धं तत्र वैरप्रवृद्धौ आर्यो ज्यायान् से भ्राता युधिष्ठिरः न हेतुः भवति । किरीटी प्रशस्तकिरीटशाली अर्जुनः 'राधावेधी किरीट्यैन्द्रि' रित्यर्जुनपर्यायेषु हैमः । न हेतुः । युवां नकुलसहदेवावपि न हेतू भवत इति विपरिणामेन संबंधः। किंतु अहमेवैको हेतुरित्युचितमेवात्रार्थे युष्माकमौदासीन्यमहं तु तत्र हेतुत्वाद्भिन्न इति न मर्ष-

**सहदेवः**–( सानुनयम्। ) आर्य, एवमतिसंभृतक्रोधेषु युष्मासु कदाचित्खिद्यते गुरुः ।(कं)

**भीमसेनः**—किं नाम, कदाचित्खिद्यते गुरुः ? गुरुः खेदमपि जानाति? पश्य । (कः)

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।

---

यामि वैरिणामपराधानिति भावः । अत एवातः परं भीमः शत्रुनिर्मूलनक्षमो मत्स्वरूपः पुरुषः क्रुधा कोपेन सन्धिं कौरवैः समं युष्माभिः क्रियमाणं । विरूढं जरया नाम राक्षस्या संधेः संयोजितत्वात्प्रशान्तव्रणं संश्लिष्टमिति यावत् । जरासन्धस्य एतन्नामकस्य राज्ञः उरः स्थलमित्युरसः प्राधान्यान्निर्देशः । उरःप्रभृति सकलं शरीरमित्यर्थः । पुनरपि एकदा ह्येतज्जननावसरे विघटितमेवासीत् पुनर्जरया संहितं तच्च भीमसेनेन नियुध्यमानेन विश्लेषितम् । विघटयति विश्लेषयति यूयं युधिष्ठिराद्याः घटयत योजयत । द्रक्ष्यामः को वाऽत्मनः कर्मणि समर्थ इतीति भावः । युष्मद्विभिन्नत्वाच्च युक्त एवायं विभिन्नः पन्था इति भावः । पुरा किल जरासन्धो नाम कोपि क्षत्रिय आसीत् । एष च जननावसरे मातुरुदराच्छकलद्वयात्मना विनिर्गतः । एकैकं च शकलं शरीरार्धस्वरूपमासीत् । तच्च शकलद्वयं जरया नाम राक्षस्या गृहीत्वा संयोजितम् । ततश्च तयोरेकं शरीरं बभूव । एतदेव चास्य जरासन्ध इत्याख्यायां निदानम् । जरया ह्यसौ संहित इति । अन्ततः पुनरनेन साकं नियुध्यमानो भीमसेनः सन्धिं विघटय्य प्राणानस्यापजहारेति भारतीयसभापर्वगता कथाऽत्रानुसन्धेया । उपमालङ्कारः ।

(कं) सानुनयं ससान्त्वनम् । यष्मासु त्वयीत्यर्थः गौरवे बहुवचनम् । एवमनेन प्रकारेण अतिसंभृतोऽतिशयेन धृतः क्रोधो यैस्तथा भूतेषु सत्सु कदाचिदिति संभावनायाम् । गुरुर्ज्येष्ठो भ्राता । गुरुपदं चास्य खेदोत्पादनं न युक्तमिति द्योतयति । खिद्यते खेदं प्राप्स्यति । खेदश्च मानसस्तापविशेषः । वर्तमानसामीप्ये वर्तमानद्वेति लट् ।

(कः) नामेति विस्मये । 'नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च' ति मेदिनी । किमिति प्रश्ने । ब्रवीषीति शेषः । वचनमनुवदति कदाचिदिति । इतीति शेषः । यद्वा किंनामेति किमितीत्यर्थे । कदाचित्खिद्यते गुरुरिति । जानाति परिचिनोति । प्रश्ने काकुः । न परिचिनोतीति भावः । खेदस्य विषयाविषयौ नास्य विदिताविति भावः । एतदेव समर्थयति । पश्येति ।

विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ ११ ॥

तत्सहदेव! निवर्तस्व । एवं चातिचिरप्रवृद्धामर्षोद्दीपितस्य भीमस्य वचनाद्विज्ञापय राजानम् । (ख)

---

(११) तथाभूतामिति । नृपसदसि नृपाणां नरपालनधर्माणां राज्ञां सदसि सभायाम् । एतेन द्रौपद्या अरक्षणममीषामधर्म इति द्योत्यते । आत्मनश्चैवंविधानां पुरस्तूष्णीम्भावो लज्जाकर इतिच व्यज्यते । पाञ्चालतनयां पाञ्चालानां राज्ञो द्रुपदस्य तनयां पुत्रीम् । एतेनाभिजात्यं तेन च परेषामपराधस्यासत्यत्वं द्योत्यते । तथा भूतां तादृशीमवस्थां गतां शत्रुभिर्बलात्कृष्यमाणपरिधानीयां क्रन्दन्तीं चेत्यर्थः । दृष्ट्वा चक्षुषा साक्षात्कृत्य । न पुनः कर्णाकर्णिकया श्रुत्वा । एतेनात्यन्तं मर्षणानर्हत्वं द्योत्यते । दुर्बलोपि हि परैः समाकृष्यमाणामात्मनो भार्यां न विषहेत किं पुनर्बलवन्तो वयं कुलीनामात्मनः सहधर्मिणीं नृपाणां सभायां तादृशीमवस्थामनुप्राप्यमानामिति भावः । अपीति शेषः । एवं दृष्ट्वापि अस्माभिः कर्तृभूतैरिति शेषः । वल्कलधरैः वल्कलानां तरुत्वचां धरैर्धारकैः सद्भिः वने अरण्ये व्याधैर्मृगवधाजीविभिः सार्धं सह सुचिरं सुदीर्घकालं उषितम् वासः कृतः । वसतेर्भावे क्तः । किं च । विराटस्य नाम राज्ञ आवासे गृहे । 'ओकोनिवास आवास' इति गृहपर्यायेषु हैमः । अनुचिता अस्मादृशानां वीराणामयोग्या य आरम्भा उद्यमास्तैः कृत्वा निभृतं गुप्तं यथा तथा स्थितम् । तिष्ठतेर्भावे क्तः । एवंविधेन वीरजनानुचितेनाचारितेन खिन्ने मनस्तापं प्रपन्ने मयि मद्विषय एव गुरुः युधिष्ठिरः खेदं मनस्तापं भजति सेवते । अद्यापि इदानीमपि । परां काष्ठां गतवत्यपराधराशाविति भावः । कुरुषु कौरवविषये खेदं न भजति । अत एव च नायं खेदं परिचिनोतीति भावः । अत्र भीमस्य खेदे चरणत्रयगतस्यार्थस्य हेतुत्वाद्वाक्यगतहेतुकं काव्यलिङ्गमलङ्कारः । खेदहेतोरभावेऽपि खेदोत्पत्तेरुक्तत्वाद्विभावना । 'विभावना विनाहेतुं कार्योत्पत्तिर्यदुच्यत' इति लक्षणात् ।अद्यापि कुरुषु खेदं न भजतीति हेतौ सत्यपि खेदानुत्पत्तेरभिधानाद्विशेषोक्तिः। 'सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति' लक्षणात् । पूर्वत्र च चरणत्रये दृष्ट्वापि उषितं स्थितं चेति वस्तुना सत्यप्यपराधे न कुपितं न चापि प्रतिकृतमिति हेतौ सत्यपि कार्यानुत्पत्तिलक्षणा विशेषोक्तिर्ध्वन्यते । शिखरिणी वृत्तम् । रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी ' ।तिलक्षणात् ।

(ख) तदिति । तत् यतो गुरुर्मय्येव खेदं भजते न कुरुषु तस्मात् । निवर्तस्व प्रतिगच्छ । च किं च । अतिचिरं सुदीर्घकालं प्रवृद्धेनामर्षेण क्रोधेनोद्दीपितस्य संतापाति-

**सहदेवः**—आर्य! किमिति ? (**खा**)

**भीमसेनः**—

युष्मच्छासनलङ्घनांहसि मया मग्नेन नाम स्थितं
　　प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।
क्रोधोल्लासितशोणितारुणगदस्योच्छिदन्तः कौरवा-
　　नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥ १२ ॥

(इत्युद्धतं परिक्रामति ।) (**खि**)

---

शयमनुप्राप्तस्य भीमस्य मम वचनाद्राजानं युधिष्ठिरं विज्ञापय प्रार्थयस्व । निवेदयेति यावत् अत्र ममेति वक्तव्ये भीमस्येतिवचनं अमर्षातिशयमभिव्यञ्जयति ।

(**खा**)　किमिति । विज्ञापनस्य कीदृशं स्वरूपमित्यर्थः ।

(१२)　युष्मदिति । मया युष्माकं यच्छासनमाज्ञा तस्या उल्लङ्घनमतिक्रमणमेवांहः पापं तत्र मग्नेन स्थितम् । तिष्ठतेर्भावे क्तः । भवदाज्ञाव्यतिक्रमरूपं पापं सर्वथा समाचरितमित्यर्थः । भाविनोऽप्यर्थस्य निश्चितत्वाद्भूतवन्निर्देशः । नामेत्यभ्युपगमे स्वीक्रियत एवायमर्थो मयेति भावः । एवमुत्तरत्रापि । 'नाम कोपेऽभ्युपगम' इति मेदिनी । किं च स्थितिमतां मर्यादावतां भवदीयामाज्ञामनतिक्रामतामित्यर्थः । 'स्थितिः स्थाने च सीम्नि चे' ति हैमः । इदमेव गर्हणाबीजम् । अनुजानामपि कनीयसां भ्रातॄणामपि ।एतेन गर्हणस्यानौचित्यं ध्वन्यते । मध्ये । विगर्हणा निन्दा 'ज्यायसो भ्रातुराज्ञाया अतिक्रमकार्येष' इत्येवंरूपा प्राप्ता निश्चितमेव प्राप्स्यत इत्यर्थः । नाम एतदप्यभ्युपगम्यत एवेति भावः । कुत एतदित्याह । अद्यास्मिन्दिवसे क्रोधेनोल्लासिता उद्यता शोणितेन रक्तेनारुणा गदा येन तस्य । कौरवान् कुरुराजपुत्रान्दुर्योधनादीन् उच्छिन्दतः समूलं नाशयतः नाशयिष्यत इत्यर्थः । वर्तमानसामीप्ये लट् तस्य शता च । मम । एकं दिवसमर्थाद्वर्तमानं दिवसम् । कालाध्वनोरत्यन्तसंयोग इति द्वितीया । गुरुः ज्यायान् भ्राता नियन्तेतियावत्।नासि।अहमपि तव विधेयः वचनग्राही आज्ञाकर इत्यर्थः । न नास्मि । अत एव च पापं च विगर्हणां चाङ्गीकरोमीति भावः । 'विधेयो वचनग्राही' त्यमरः । अत्र पूर्वार्धे उत्तरार्धगतार्थस्य हेतुत्वात्काव्यलिङ्गमलङ्कारः । प्रथमपादे रूपकं चेत्यनयोः संकरः । शार्दूलविक्रीडितं वृत्तम् ।

(**खि**)　उद्धतमविनयोचितं यथा तथा परिक्रामति चरति । क्रमु पादविक्षेप इत्यतो लट् ।

**सहदेवः**—( तमेवानुगच्छन्नात्मगतम् । ) अये कथमार्यः पाञ्चाल्याश्चतुः-शालकं प्रति प्रस्थितः । भवतु तावदहमत्रैव तिष्ठामि । (इति स्थितः । ) (खी)

**भीमसेनः**—( प्रतिनिवृत्यावलोक्य च । ) सहदेव ! गच्छ त्वं गुरुमनुवर्तस्व । अहमप्यायुधागारं प्रविश्यायुधसहायो भवामि । (खु)

**सहदेवः**—आर्य नेदमायुधागारम् । पाञ्चाल्याश्चतुःशालकमिदम् ।

**भीमसेनः**—किं नाम ? नेदमायुधागारम् ? पाञ्चाल्याश्चतुःशालकमिदम् ? ( विचिन्त्य सहर्षम् । ) आमन्त्रयितव्यैव मया पाञ्चाली । ( सप्रणयं सहदेवं हस्ते गृहीत्वा । ) वत्स, आगम्यताम् । यदार्यः कुरुभिः संधानमिच्छन्नस्मान्पीडयति तद्भवानपि पश्यतु । (खू)

---

(खी) आत्मगतम् । आत्मनि मनसि गतं यथास्यादेवं वदति । यत्किल न सर्वेषां श्राव्यं भवति तस्य वचनं आत्मगतं स्वगतमिति वा प्रयुज्यते । यदाहुः 'अश्राव्यं किल यद्वस्तु तदिहात्मगतं मत' मिति । पात्रस्य मनसि गतमपि वचनं सामाजिकानामवगमा-यात्मगतमिति नाटकादिषु प्रयुज्यते । अये कथमित्यव्ययसमुदायो विस्मये । आर्यो ज्या-यान् भ्राता भीमः । पाञ्चाल्याः पाञ्चालस्य द्रुपदस्य पुत्र्या द्रौपद्याः चतुःशालकं चतसृणां शालानां समाहारं । आबन्तो वेति वा क्लीबत्वम् । स्वार्थे कः। अन्योन्याभिमुखं शालाचतु-ष्टयं चौसोपीति महाराष्ट्रभाषायां ख्यातं संजवनापरपर्यायम् । 'संजवनं त्विदम् । चतुःशा-लम्' इत्यमरः । तत्प्रति प्रस्थितः प्रयातः । तावद्यावदसौ प्रतिनिवर्तते तावदित्यर्थः । अत्र चतुश्शालबहिः प्रदेशे । एकान्तवर्तिनोर्दम्पत्योः सकाशेऽवस्थानस्यायोग्यत्वादिति भावः ।

(खु) अवलोक्य सहदेवमिति शेषः गुरुं युधिष्ठिरं अनुवर्तस्व अनुसर । अह-मपीति भिन्नस्त्वत्तो मदीयः पन्था इति द्योत्यते । आयुधागारं आयुधानां प्रहरणानामगारं गृहम् 'विद्यादगारमागारमि' ति द्विरूपः । 'भवनागारमन्दिरमि' त्यमरः । शस्त्रशाला-मित्यर्थः । आयुधसहाय आयुधानि सहायाः सहचराणि यस्य तथाविधः । गृहीतायुध इत्यर्थः ।

(खू) किंनामेत्यव्ययं समुच्चित्य साश्चर्यप्रश्नार्थकम् । आयुधागारत्वेन संभावि-तस्य पाञ्चालीचतुःशालत्वावगमादाश्चर्यम् । विचिन्त्य किं वातः प्रतिनिवर्तनीयमुताहो अत्र प्रवेष्टव्यमिति विचार्य । सहर्षं पाञ्चाल्याः साक्षात्करणस्यासन्नत्वाद्धर्षः । आमन्त्रयितव्यैव आप्रष्टव्यैव । कस्मैचित्कार्याय गच्छता यत्स्निग्धादिभ्यो गच्छामीत्यादि निवेद्यते सोऽय-

( उभौ प्रवेशं नाटयतः । )

**सहदेवः**—(ससंभ्रमम् ।) आर्य, इदमासनमास्तीर्णम् । अत्रोपविश्यार्यः पालयतु कृष्णागमनम् । (खे)

**भीमसेनः**—वत्स, कृष्णागमनमित्यनेनोपोद्घातेन स्मृतम् । अथ भगवान्कृष्णः केन प्रकारेण संधिं कर्तुं सुयोधनं प्रति प्रहितः । (खै)

**सहदेवः**—आर्य, पञ्चभिर्ग्रामैः ।

---

माप्रश्नः । अत्रार्थ एव चामन्त्रणशब्दः प्रयुज्यते । यथा शाकुन्तले 'चक्रवाकवधूः ! आमन्त्रयस्व सहचरमि' ति । एतावता चायुधागारप्रवेशरूपमारब्धं कार्यमपहाय पाञ्चाल्याश्चतुःशालप्रवेशादिरूपस्य कार्यान्तरस्यानुष्ठानात्परिवर्तकाख्यं सात्वतीवृत्तेरङ्गमुक्तं भवति । यदाहुः 'प्रारब्धादन्यकार्याणां करणं परिवर्तकः ।' इति । आर्यो युधिष्ठिरः । संधानं सन्धिम् । पश्यतु विचारयतु ॥

(खे) ससंभ्रमं सत्वरम् । ज्यायसो भ्रातुरासनोपहरणार्थं त्वरा । आस्तीर्णं प्रसारितम् । स्तृञ् आच्छादन इत्यतो निष्ठायां क्तः । तस्य च रदाभ्यामिति नस्तस्य च रषाभ्यामिति णः । उपविश्य आसित्वा आर्यः भवान् कृष्णागमनं कृष्णाया द्रौपद्या आगमनम् । कृष्णा तु नील्यां द्रौपद्यामिति हैमः । पालयतु प्रतिपालयतु प्रतीक्षतामित्यर्थः । उपसर्गाणां द्योतकत्वेन विनाप्येतान्धातूनां सोपसर्गवदर्थप्रतीतिः । यथा यागात्स्वर्गो भवतीत्यादौ । एवमेवात्रापीत्यवबोध्यम् ।

(खै) वत्सेत्यनुजस्य ज्येष्ठकृतं संबोधनम् । यदुक्तं दर्पणे 'वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः । शिष्योऽनुजश्च वक्तव्यः' इति । कृष्णागमनमित्यनेन उपोद्घातेन वचनोपक्रमेण तत्सदृशेन वचनेनेत्यर्थः । 'उदाहार उपोद्घात उपन्यासश्च वाङ्मुख' मिति हैमः । स्मृतम् । कृष्णागमनशब्दतः कृष्णाया आगमनमिव कृष्णस्यागमनमित्यस्याप्यर्थस्य श्लेषमर्यादया प्रतीयमानत्वाच्छब्दसादृश्यात्स्मरणम् । श्रीकृष्णस्यागमनमिति शेषः । अथेति प्रश्ने 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । भगवान् भगानि ऐश्वर्यादीनि षट् सन्त्यस्य सः । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥ इति वचनात् । प्रहितः प्रेषितः । अत्र केन प्रकारेणेत्यत्र केन पणेनेत्यपि पठन्ति । तत्र पणेन धनेन करणभूतेनेत्यर्थः । 'पणो माने वराटानां मूल्ये कार्षापणे धने' इति धरणिः । अयमेव च पाठोयुक्त इति प्रतिभाति । उत्तरत्व प्रकारस्यानभिधानात्करणभूतस्य ग्रामपञ्चकलक्षणस्य द्रव्यविशेषस्यैवोक्तेश्चेति ।

**भीमसेनः**—(कर्णौ पिधाय।) अहह, देवस्याजातशत्रोरप्ययमीदृशस्तेजोपकर्ष इति यत्सत्यं कम्पितमिव मे हृदयम् । (परिवृत्य स्थित्वा।) तद्वत्स ! न त्वया कथितं न च मया भीमेन श्रुतम् । (खो)

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताक्षैस्तदानेन नूनं तदपि हारितम् ॥ १३ ॥

(नेपथ्ये) (खौ)

---

(खो) कर्णाविति । पिधाय आच्छाद्य हस्ताभ्यामिति शेषः । अपिपूर्वकाद्धातेः क्त्वो ल्यप् । भागुरिमतेनापेरकारलोपः । तदाहुः ' वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । ' इति । अनर्हः किलायमर्थ आकर्णयितुमिति द्योतनाय कर्णयोः पिधानम् । अहहेति खेदे । ' अहहेत्यद्भुते खेद ' इत्यमरः । देवस्य राज्ञः । ' राजा भट्टारको देव ' इत्यमरः । अजातशत्रोः न जातः शत्रुर्द्वेष्यो यस्य तस्य युधिष्ठिरस्य । ' अजातशत्रुः शल्यारिर्धर्मपुत्रो युधिष्ठिरः । ' इति हैमः । ईदृशः पञ्चभिर्ग्रामैः सन्धिकरणात्मकः । तेजोपकर्षः प्रभावह्रासः तेजस्त्विड्रेतसोर्बले । नवनीते प्रभावेऽग्नौ ' इतिहैमः। अस्तीति शेषः । 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ती' तिवामनवचनात् । भवन्तीपरो लट्परः । यत्सत्यं नूनम् । परिवृत्येति अतः परमेतद्विषयकस्य संलापस्य श्रवणानभिलाषात्परिवृत्तिः । तत्तस्मात् यस्मान्नैतदाकर्णनोचितं तस्मात् । भीमेनेति तेजस्वितातिशयो द्योत्यते ।

(१३) यदिति । अस्य भूपते राज्ञो युधिष्ठिरस्य तत्प्रसिद्धं यदूर्जितं प्रबलं अत्युग्रमतिशयेन भयंकरं क्षात्रं क्षत्रियसम्बन्धि तेजः प्रभावः । आसीदिति शेषः । अनेन युधिष्ठिरेण कर्त्रा तदा द्यूतावसरेऽक्षैः पाशैः । दिवः कर्मचेति करणसंज्ञायां कर्तृकरणयोरितितृतीया । दीव्यता क्रीडता तदपि तेजः । अपिः समुच्चये यथाराज्यादिकं तथेदमपीत्यर्थः । नूनं निश्चितं हारितम् । हरतेर्ण्यन्तात् क्तः।परहस्ते समर्पितमित्यर्थः। वाच्या क्रियोत्प्रेक्षा । 'संभावनमथोत्प्रेक्षा प्रकृतस्य परात्मने' त्युत्प्रेक्षालक्षणं दर्पणे । अत्र च ह्रासक्रियाया हारितत्वेन संभावनात्क्रियोत्प्रेक्षा । अस्याश्चात्र वाचको नूनंशब्दः । तदाह दण्डी 'मन्येशङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रेक्षाव्यञ्जकाः शब्दा ' इति । द्यूते तजोपहारणस्य संबन्धाभावेऽपि संबन्धाभिधानादतिशयोक्तिश्चेत्यनयोः संकरः । उक्तपूर्वलक्षणं पथ्यावक्त्रं वृत्तम् ।

(खौ) नेपथ्य इति नेपथ्यं पात्राणां भूमिकापरिग्रहस्थानमित्यवोचाम । तत्र उच्यत इति शेषः ।

समस्ससदु समस्ससदु भट्टिणी । (समाश्वसितु समाश्वसितु भट्टिनी ।) (खं)

**सहदेवः**—(नेपथ्याभिमुखमवलोक्यात्मगतम् ।) अये कथं याज्ञसेनी मुहु-रुपचीयमानवाष्पपटलस्थगितनयना आर्यसमीपमुपसर्पति ? तत्कष्टतरमापति-तम् । (खः)

यद्वैद्युतमिव ज्योतिरार्ये क्रुद्धेऽद्य संभृतम् ।
तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति ॥ १४ ॥

---

(खं) नेपथ्योक्तिमनुवदति समस्ससदु इति । प्राकृतेयं भाषा । वक्तुः स्त्रीत्वाच्च प्रयुक्तेयम् । तदाहुः—पुरुषाणामनीचानां संस्कृतं स्यात्कृतात्मनाम् । शौरसेनी प्रयोक्तव्या तादृशीनां च योषिताम् । चेटीनामप्यनीचानामपि स्याच्छौरसेनिका । इत्यादि। तदेतत्साहि-त्यदर्पणे द्रष्टव्यम् । भाषाणां च लक्षणानि षड्भाषाचन्द्रिकायां द्रष्टव्यानि । **भट्टिनी** राज्ञी । यद्यपि ' देवीकृताभिषेकायामितरासु तु भट्टिनी ' त्यमरेणाकृताभिषेकायामेव नृपभार्यायां भट्टिनीशब्दोऽनुशिष्टस्तथापि नृपाङ्गनासामान्य एवायं प्रयुज्यते नाट्ये । तदाह भरतः 'राज-पत्न्यस्तु संभाष्याः **सर्वाः** परिजनेनतु । **भट्टिनी** स्वामिनी देवी इत्येवं नाटके बुधैः ॥ ' इति (१७८५) समाश्वसितु सुखिता भवतु दुःखं परित्यजत्विति यावत् 'आश्वासः स्यात्तु निर्वृतौ' इति हैमः । श्वसे रुदादित्वात् रुदादिभ्यः सार्वधातुक इतीट् । प्रार्थनायां लोट् ।

(खः) अये कथमिति विस्मये । याज्ञसेनी यज्ञसेनस्य द्रुपदस्यापत्यं स्त्री द्रौपदी । 'वेदिजा याज्ञसेनी चे'तिद्रौपदीपर्यायेषु हैमः । मुहुः पुनः पुनरुपचीयमानेनाभिवर्धमानेन बाष्पस्य अश्रुणः पटलेन संचयेन स्थगिते आवृते नयने यस्यास्तथाभूता । अश्रूणि बाष्प-रोदननयनजलान्ता ' इति हलायुधः । 'पटलं तिलके नेत्ररोगे च्छदिषि संचय' इति हैमः। आर्यसमीपं भीमसन्निधौ । उपसर्पति उपगच्छति । तत्तस्मात् । कष्टतरमतिशयेन कष्टम् । आत्यन्तिककष्टहेतुरित्यर्थः । हेतुहेतुमतोरभेदोपचारात् । आपतितं प्राप्तम् ।

(१४) यदिति । क्रुद्धे कुपिते आर्ये ज्येष्ठे भ्रातरि भीमसेने यद्वैद्युतं विद्युत्संबन्धीव ज्योतिस्तेजः संभृतं स्थितं संपूर्वकाद्बिभर्तेः कर्मकर्तरि निष्ठायां क्तः । तत् तेजः कर्मभूतं प्रावृट् वर्षा इव इयं कृष्णा द्रौपदी कर्त्री नूनं निश्चितं संवर्धयिष्यति। 'पाञ्चाली द्रौपदी कृष्णे' ति हैमः। अत्र भीमकोपवैद्युततेजसोः प्रावृट्कृष्णयोश्च साम्यस्य वाच्यत्वं भीमस्य मेघसाम्यं अश्रूणां च वृष्टिसाम्यं गम्यमित्येकदेशविवर्तिन्युपमा । यदुक्तं दर्पणे 'एकदेशविवर्तिन्युपमा-वाच्यत्वगम्यते । भवेतां यत्र साम्यस्य' इति । किं चात्र वर्ण्यमानस्यार्थस्य कालस्वरूपेण निर्देशाद्दिष्टं नाम लक्षणम् । तदप्युक्तं तत्रैव 'देशकालस्वरूपेण वर्णना दिष्टमुच्यते' इति । पथ्यावक्त्रं नामोक्तपूर्वलक्षणं वृत्तम् ।

( ततः प्रविशति यथानिर्दिष्टा द्रौपदी चेटी च । ) (ग)

( द्रौपदी सास्रं निश्वसिति । ) (गा)

**चेटी**—समस्ससदु समस्ससदु भट्टिणी । अवणइस्सदि दे मण्णुं णिच्चाणुबद्धकुरुवेरो कुमालो भीमसेणो ( समाश्वसितु समाश्वसितु भट्टिनी । अपनेष्यति ते मन्युं नित्यानुबद्धकुरुवैरः कुमारो भीमसेनः ।) (गि)

**द्रौपदी**—हञ्जे बुद्धिमदिए! होदि एदं जइ महाराओ पडिऊलो ण भवे । ( हञ्जे बुद्धिमतिके ! भवत्येतद्यदि महाराजः प्रतिकूलो न भवेत् । ) (गी)

**चेटी**—( विलोक्य ) एसो कुमालो चिट्ठदि ता णं उवसप्पदु भट्टिणी ( एष कुमारस्तिष्ठति । तदेनमुपसर्पतु भट्टिनी )

**द्रौपदीः**—हञ्जे एव्वं करेह्म ( हञ्जे एवं कुर्वः )

( इति परिक्रामतः । )

**द्रौपदी**—हञ्जे, कहेहि णाहस्स मह आगमणं । ( हञ्जे ! कथय नाथस्य ममागमनम् । )

---

(ग) ततः सहदेववचनानन्तरम् । यथा निर्दिष्टा सहदेवेन मुहुरुपचयमानेत्यादिना तथेति शेषः । द्रौपदी प्रविशति चेटी दासी च प्रविशति ।

(गा) सास्रं अस्रैरश्रुभिः सहितं यथा तथा निःश्वसिति । अश्रूणि मुञ्चन्ती निःश्वसितीत्यर्थः । दुःखस्य दुःसहत्वान्निःश्वासः ।

(गि) भट्टिनीति व्याख्यातं प्राक् । ते तव मन्युं शोकं 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः नित्यं संततं अनुबद्धं अनुवृत्तं कुरुवैरं कौरवद्वेषो यस्मिन् सः निरन्तरमेव कौरवान् द्विषन्नित्यर्थः । कुमारो राज्ञः कनीयान्भ्राता । कुमारशब्दस्य राजपुत्रवाचित्वेऽपि कनीयसो भ्रातुः पुत्रतुल्यतया तद्वाचकत्वमपीतिबोध्यम् । 'वाच्यः पुत्र इवानुज' इतिभरतः । भीमसेनः । अपनेष्यति दूरीकरिष्यति ।

(गी) हञ्जे इति चेट्याः संबोधनेऽव्ययम् । 'प्रेष्या हञ्जेति वक्तव्या ' इति भरतः । बुद्धिमतिकेति चेटयाः संज्ञा । एतद्भवदुक्तं मम शोकापनयनं भवति अचिरादेव भविष्यतात्यर्थः । वर्तमानसामीप्ये लट् । महाराजा युधिष्ठिरः । अतः परं 'तन्नाथमित्यादिः पाठो जगद्धरेणादृतोऽपि प्राचीनपुस्तकेष्वदृष्टः पूर्व प्रबन्धविरोधी चेत्युपेक्षितः । पूर्वं हि पाञ्चाल्याश्चतुःशालं प्रविष्टो भीमसेन इत्युक्तम् । अत्र पुनरात्मन एव वासभवने स्थित इत्यभिधीयते ।

समस्ससदु समस्ससदु भट्टिणी । (समाश्वसितु समाश्वसितु भट्टिनी ।) (खं)

**सहदेवः**—(नेपथ्याभिमुखमवलोक्यात्मगतम् ।) अये कथं याज्ञसेनी मुहुरुपचीयमानबाष्पपटलस्थगितनयना आर्यसमीपमुपसर्पति ? तत्कष्टतरमापतितम् । (खः)

यद्वैद्युतमिव ज्योतिरार्ये क्रुद्धेऽद्य संभृतम् ।
तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति ॥ १४ ॥

---

(खं) नेपथ्योक्तिमनुवदति समस्ससदु इति । प्राकृतेयं भाषा । वक्तुः स्त्रीत्वाच्च प्रयुक्तेयम् । तदाहुः—पुरुषाणामनीचानां संस्कृतं स्यात्कृतात्मनाम् । शौरसेनी प्रयोक्तव्या तादृशीनां च योषिताम् । चेटीनामप्यनीचानामपि स्याच्छौरसेनिका । इत्यादि। तदेतत्साहित्यदर्पणे द्रष्टव्यम् । भाषाणां च लक्षणानि षड्भाषाचन्द्रिकायां द्रष्टव्यानि । **भट्टिनी** राज्ञी । यद्यपि 'देवीकृताभिषेकायामितरासु तु भट्टिनी' त्यमरेणाकृताभिषेकायामेव नृपभार्यायां भट्टिनीशब्दोऽनुशिष्टस्तथापि नृपाङ्गनासामान्य एवायं प्रयुज्यते नाट्ये । तदाह भरतः 'राजपत्न्यस्तु संभाष्याः **सर्वाः** परिजनेनतु । **भट्टिनी** स्वामिनी देवी इत्येवं नाटके बुधैः ॥' इति (१७८५) समाश्वसितु सुखिता भवतु दुःखं परित्यजत्विति यावत् 'आश्वासः स्यात्तु निर्वृतौ' इति हैमः । श्वसे रुदादित्वात् रुदादिभ्यः सार्वधातुक इतीट् । प्रार्थनायां लोट् ।

(खः) अये कथमिति विस्मये । याज्ञसेनी यज्ञसेनस्य द्रुपदस्यापत्यं स्त्री द्रौपदी । 'वेदिजा याज्ञसेनी च'तिद्रौपदीपर्यायेषु हैमः । मुहुः पुनः पुनरुपचीयमानेनाभिवर्धमानेन बाष्पस्य अश्रुणः पटलेन संचयेन स्थगिते आवृते नयने यस्यास्तथाभूता । अश्रूणि वाष्परोदननयनजलान्ता' इति हलायुधः । 'पटलं तिलके नेत्ररोगे च्छदिषि संचय' इति हैमः। आर्यसमीपं भीमसन्निधौ । उपसर्पति उपगच्छति । तत्तस्मात् । कष्टतरमतिशयेन कष्टम् । आत्यन्तिककष्टहेतुरित्यर्थः । हेतुहेतुमतोरभेदोपचारात् । आपतितं प्राप्तम् ।

(१४) यदिति । क्रुद्धे कुपिते आर्ये ज्येष्ठ भ्रातरि भीमसेने यद्वैद्युतं विद्युत्संबन्धीव ज्योतिस्तेजः संभृतं स्थितं संपूर्वकाद्बिभर्तेः कर्मकर्तरि निष्ठायां क्तः । तत् तेजः कर्मभूतं प्रावृट् वर्षा इव इयं कृष्णा द्रौपदी कर्त्री नूनं निश्चितं संवर्धयिष्यति। 'पाञ्चाली द्रौपदी कृष्णे' ति हैमः। अत्र भीमकोपवैद्युततेजसोः प्रावृट्कृष्णयोश्च साम्यस्य वाच्यत्वं भीमस्य मेघसाम्यं अश्रूणां च वृष्टिसाम्यं गम्यमित्येकदेशविवर्तिन्युपमा । यदुक्तं दर्पणे 'एकदेशविवर्तिन्युपमा-वाच्यत्वगम्यते । भवेतां यत्र साम्यस्य' इति । किं चात्र वर्ण्यमानस्यार्थस्य कालस्वरूपेण निर्देशाद्दिष्टं नाम लक्षणम् । तदप्युक्तं तत्रैव 'देशकालस्वरूपेण वर्णना दिष्टमुच्यते' इति । पथ्यावक्त्रं नामोक्तपूर्वलक्षणं वृत्तम् ।

( ततः प्रविशति यथानिर्दिष्टा द्रौपदी चेटी च । ) (ग)

( द्रौपदी सास्रं निश्वसिति । ) ( गा )

**चेटी**—समस्ससदु समस्ससदु भट्टिणी । अवणइस्सदि दे मण्णुं णिच्चाणुबद्धकुरुवेरो कुमालो भीमसेणो ( समाश्वसितु समाश्वसितु भट्टिनी । अपनेष्यति ते मन्युं नित्यानुबद्धकुरुवैरः कुमारो भीमसेनः ।) ( गि )

**द्रौपदी**—हञ्जे बुद्धिमदिए! होदि एदं जइ महाराओ पडिऊलो ण भवे । ( हञ्जे बुद्धिमतिके ! भवत्येतद्यदि महाराजः प्रतिकूलो न भवेत् । ) ( गी )

**चेटी**—(विलोक्य) एसो कुमालो चिट्ठदि ता णं उवसप्पदु भट्टिणी ( एष कुमारस्तिष्ठति । तदेनमुपसर्पतु भट्टिनी )

**द्रौपदीः**—हञ्जे एव्वं करेह्म ( हञ्जे एवं कुर्वः )

( इति परिक्रामतः । )

**द्रौपदी**—हञ्जे, कहेहि णाहस्स मह आगमणं । ( हञ्जे ! कथय नाथस्य ममागमनम् । )

---

(ग) ततः सहदेववचनानन्तरम् । यथा निर्दिष्टा सहदेवेन मुहुरुपचीयमानेत्यादिना तथेति शेषः । द्रौपदी प्रविशति चेटी दासी च प्रविशति ।

(गा) सास्रं अस्रैरश्रुभिः सहितं यथा तथा निःश्वसिति । अश्रूणि मुञ्चन्ती निःश्वसितीत्यर्थः। । दुःखस्य दुःसहत्वान्निःश्वासः ।

(गि) भट्टिनीति व्याख्यातं प्राक्। ते तव मन्युं शोकं 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः नित्यं संततं अनुबद्धं अनुवृत्तं कुरुवैरं कौरवद्वेषो यस्मिन् सः निरन्तरमेव कौरवान् द्विषन्नित्यर्थः । कुमारो राज्ञः कनीयान्भ्राता । कुमारशब्दस्य राजपुत्रवाचित्वेऽपि कनीयसो भ्रातुः पुत्रतुल्यतया तद्वाचकत्वमपीतिबोध्यम् । 'वाच्यः पुत्र इवानुज' इतिभरतः। भीमसेनः । अपनेष्यति दूरीकरिष्यति ।

(गी) हञ्जे इति चेट्याः संबोधनेऽव्ययम् । 'प्रेष्या हञ्जेति वक्तव्या' इति भरतः । बुद्धिमतिकेति चेटयाः संज्ञा । एतद्भवदुक्तं मम शोकापनयनं भवति अचिरादेव भविष्यतात्यर्थः । वर्तमानसामीप्ये लट् । महाराजा युधिष्ठिरः । अतः परं 'तन्नाथमित्यादिः पाठो जगद्धरेणादृतोऽपि प्राचीनपुस्तकेष्वदृष्टः पूर्व प्रबन्धविरोधी चेत्युपेक्षितः । पूर्वं हि पाञ्चाल्याश्चतुःशालं प्रविष्टो भीमसेन इत्युक्तम् । अत्र पुनरात्मन एव वासभवने स्थित इत्यभिधीयते।

**चेटी**—जं देवी आणवेदि । ( यद्देव्याज्ञापयति )

( इति परिक्रामति )

( भीमसेनोऽश्रृण्वन् 'यत्तदूर्जितम्' ( १।१३ ) इति पुनः पठति । ) (गु)

**चेटी**—( परिवृत्य ) भट्टिणि! पिअं दे णिवेदेमि । परिकुविदो विअ कुमालो लक्खीअदि । ( भट्टिनि! प्रियं ते निवेदयामि । परिकुपित इव कुमारो लक्ष्यते ।) (गू)

**द्रौपदी**—हञ्जे ! जइ एव्वं ता अवहीरणा वि एसा मं आसासअदि । ता एअन्ते उवविट्ठा भविअ सुणोमि दाव णाहस्स ववसिदं । ( हञ्जे ! यद्येवं तदवधीरणाप्येषा मामाश्वासयति । तदेकान्त उपविष्टा भूत्वा शृणोमि तावन्नाथस्य व्यवसितम् (गे)

( उभे तथा कुरुतः । ) (गै)

**भीमसेनः**—( सक्रोधं सहदेवमधिकृत्य । ) किं नाम पञ्चभिर्ग्रामैः संधिः? (गो)

मथ्नामि कौरवशतं समरे न कोपा-

दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।

संचूर्णयामि गदया न सुयोधनोरू

संधिं करोतु भवतां नृपतिः पणेन ॥ १५ ॥

---

**(गु)** अश्रृण्वन्निति । कोपाक्षिप्तत्वाच्चेतसः श्रवणाभावः । परिकुपितः क्रुद्ध इव ।

**(गू)** निवेदयामि कथयामि । प्रियमेवाह परिकुपित इत्यादि । लक्ष्यते दृश्यते ।

**(गे)** एवं यथा वदसि तथेत्यर्थः । अस्तीति शेषः । तत् तर्हीत्यर्थः । एषा उपस्थिताया अपि ममासंभावनारूपा अवधीरणा अवज्ञाऽपि मां आश्वासयति सुखयति । तावत्साकल्येन । 'यावत्तावच्च साकल्य' इति कोशात् । नाथस्य पत्युर्भीमस्य । व्यवसितं व्यवसायं कार्यनिश्चयमिति यावत् तद्विषयकाणि वचनानीत्यर्थः ।

**(गै)** तथा कुरुतः एकान्त उपविशत इत्यर्थः ।

**(गो)** सहदेवमधिकृत्येति नावश्यकम् । तेनैवसह संलापस्य प्रस्तुतत्वात् द्रौपद्याश्चागमनस्य भीमेनाज्ञातत्वादिति । पाठः पुनरयमनेकपुस्तकसंवादीत्येव समादृतः । **अधिकृत्य** उद्दिश्य । किं नामेत्यव्ययसमुदायो विस्मये । पञ्चभिर्ग्रामैः करणभूतैः सन्धिरिति प्रश्ने काकुः ।

**द्रौपदी**—( सहर्षं जनान्तिकम् ) णाह, अस्सुदपुव्वं क्खु दे एदिसं वअणं । ता पुणो वि दाव भणाहि । ( नाथ ! अश्रुतपूर्वं खलु ते ईदृशं वचनम् । तत्पुनरपि तावद्भण ।) **( गौ )**

( भीमसेनोऽश्रृण्वन्नेव 'मथ्नामि कौरवशतं' ( १।१५ ) इति पुनः पठति । )

**सहदेवः**—आर्य! किं महाराजस्य संदेशोऽयमार्येणाव्युत्पन्न इव गृहीतः? **( गं )**

**भीमसेनः**—का पुनरत्र व्युत्पत्तिः **( गः )**

**सहदेवः**—आर्य! एवं गुरुणा संदिष्टम् । **( घ )**

---

(१५) **मथ्नामीति** । अहं समरे संग्रामे कोपात् क्रोधमापद्य । ल्यब्लोपे पञ्चमी । कौरवाणां शतं न मथ्नामि न विमर्दयिष्यामि । वर्तमानसामीप्ये भविष्यति लट् । एवमुत्तरत्रापि । दुःशासनस्य उरस्तः वक्षःस्थलात् । तद्विदार्येत्यर्थः । पञ्चम्यास्तसिः ।रुधिरं रक्तम् । तदीयमित्यर्थात् । न पिबामि न पास्यामि । गदया करणभूतया सुयोधनस्य दुर्योधनस्य ऊरू सक्थिनी न संचूर्णयामि न चूर्णीकरिष्यामि । तत एव । भवतां न तु ममेति भावः । नृपतिः राजा युधिष्ठिरः पणेन ताम्रिकेण करणभूतेन । ताम्रिकं च तोलकोन्मिता ताम्रमुद्रा । एकताम्रिकतुल्यैः पञ्चभिर्ग्रामैरित्यर्थः । सार्धं करोतु । विपरीतलक्षणयाऽवश्यमचिरादेवाहमेतत्करोमि तत एव चायुक्तोऽयमस्य सन्धिव्यापार इति गम्यते । नात्र प्रश्ने काकुः । प्रयोजनाभावात् । वसन्ततिलकावृत्तम् ।

**(गौ)** सहर्षमिति भीमस्य कौरवक्षयप्रतिज्ञानाद्धर्षः । जनान्तिकमिति जनस्याभीष्टस्य मानुषस्यान्तिकं समीपे । यथाऽन्यस्य कर्णगोचरो न स्यात्तथाऽभीष्टस्य जनस्य समीपे क्रियमाणं वचनं जनान्तिकमित्युच्यते । एतल्लक्षणं तूक्तं दर्पणे 'त्रिपताककरेणान्यानपवार्यान्तरा कथाम् । अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ।' इति । यः कश्चिदर्थो यस्माद्गोपनीयस्तस्यान्तरत उर्ध्वसर्वाङ्गुलिकं नामितानामिकं च त्रिपताकलक्षणं करं कृत्वाऽन्येन सह यन्मन्त्र्यते तज्जनान्तिकमिति तद्व्याख्या । अत्र पुनर्जनान्तिकमित्ययुक्तः पाठः । अन्योन्यामन्त्रणाभावात । बहुपुस्तकसंवादीत्यत एव केवलमसावुपनिबद्धः । ईदृशं मथ्नामीत्यादिसदृशं ते वचनं अश्रुतपूर्वं पूर्वं न श्रुतम् । सुप्सुपेति समासः । अपूर्वोत्साहद्योतकत्वादेतस्येति भावः । तत्पुनरपि तावत्साकल्येन भण वद ।

**(गं)** महाराजस्य युधिष्ठिरस्य । कर्तरिषष्ठी । संदेशो वाचिकं निरोप इति महाराष्ट्रभाषया ख्यातम् । आर्येण भवता अव्युत्पन्न इव असमञ्जस इवेति यावत् ।गृहीतः ज्ञातः ।

**(गः)** अत्र संदेशे व्युत्पत्तिः समञ्जसता ।

**भीमसेनः**—कस्य ? **(घा)**

**सहदेवः**—सुयोधनस्य ।

**भीमसेनः**—किमिति ?

**सहदेवः**—

इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम् ।
प्रयच्छ चतुरो ग्रामान्कंचिदेकं च पञ्चमम् ॥ १६ ॥

**भीमसेनः**—ततः किम् ? **(घि)**

**सहदेवः**—तदेवमनया प्रतिनामग्रामार्थनया पञ्चमस्य चाकीर्तनाद्विषभोजनजतुगृहदाहद्यूतसभाद्यपकारस्थानोद्घाटनमेवेदं मन्ये । **(घी)**

---

(घ) गुरुणा युधिष्ठिरेण । संदिष्टम् संदेशः प्रहितः ।

(घा) कस्येति शेषे षष्ठी । कस्मै प्रहित इत्यर्थः

(१६) इन्द्रप्रस्थमिति । इन्द्रप्रस्थादीनि च चत्वारि ग्रामविशेषनामानि । चतुरः चतुःसंख्याकान् । प्रयच्छ देहि । कंचिदनिर्धारितम् । पथ्यावक्त्रं वृत्तम् ।

(घि) ततः संदेशात् किं किंफलमित्यर्थः ।

(घी) तत् तस्मात् एवमनेन प्रकारेण कृतयाऽनया प्रतिनाम नाम्ना नाम्ना । वीप्सायामव्ययीभावः । तस्य तस्य ग्रामस्य नामग्रहणपूर्वकमित्यर्थः । ग्रामप्रार्थनया ग्रामाणां याचनया । पञ्चमस्य ग्रामस्याकीर्तनात् अवचनात् । विषभोजनं जतुमयस्य गृह दाहो द्यूतसभा येषां ते आदयो येषु तेषामपकाराणां शत्रुकृतानां अपकारस्थानानां उद्घाटनं विवरणमेव इदं संदेशरूपमिति मन्ये । तत्र इन्द्रप्रस्थनामसंकीर्तनेन हस्तिनापुरनिर्वासनरूपोऽपकारो द्योत्यते । आदितो हि प्राप्ताः पाण्डवाः कौरवैर्निर्वासिता इन्द्रप्रस्थं नाम नगरं निर्माय न्यवात्सुरिति । वृकप्रस्थमित्यनेन च दुर्योधनेन विषं पायितो भीमसेन इत्यस्यापकारस्योद्घाटनम् । तत्रैव हि दुर्योधनेन विषं प्रयुज्य निःसंज्ञतां नीत्वा गङ्गायां क्षिप्तो भीमसेनः पातालं गतो दशकुम्भमितं पीयूषं प्राश्य तज्जारितवान्प्राप्तवांश्च वृकोदर इति संज्ञाम् । जयन्तश्च द्यूतसभास्थानभूतो ग्रामः । तस्य च नाम्ना राज्यापहारकलत्रधर्षणवनवासादेशाद्यपकारोद्घाटनम् । वारणावतं च जतुगृहदाहस्थानम् । तत्रैव हि पूर्वं लाक्षागृहं प्रविष्टेषु पाण्डवेषु दुर्योधनादेशात्पुरोचनेनाग्निः प्रादायीति । एतेन जतुगृहदाहोद्घाटनम् ।

**भीमसेनः**—(साटोपम्) वत्स! एवं कृते किं भवति ? (घु)

**सहदेवः**—आर्य! एवं कृते लोके तावत्स्वगोत्रक्षयाशङ्कि हृदयमाविष्कृतं भवति, कुरुराजस्यासंधेयता च प्रतिपादिता भवति । (घू)

**भीमसेनः**—मूढ! सर्वमप्येतदनर्थकम् । कुरुराजस्य तावदसंधेयता तदैव प्रतिपादिता यदैवास्माभिरितो वनं गच्छद्भिः सर्वैरेव कुरुकुलस्य निधनं प्रतिज्ञातम् । प्रसिद्धश्च लोकेऽपि धार्तराष्ट्रकुलक्षयः । (घे)

**सहदेवः**—लज्जां नाटयति । (घै)

**भीमसेनः**—स किं लज्जाकरो भवताम् ? अपि च रे मूर्ख !

युष्मान्ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।
न लज्जयति दाराणां सभायां केशकर्षणम् ॥ १७ ॥

---

(घु) साटोपं सावेशम् । 'आवेशाटोपसंरम्भा' इति त्रिकाण्डशेषः ।

(घू) तावन्निश्चितम् । स्वगोत्रस्यात्मनः कुलस्य क्षयादाशङ्कते बिभेति तथा भूतम्। शङ्कतेर्भीत्यर्थकत्वस्यापि दर्शनात् । हृदयमाविष्कृतं प्रकटीकृतं भवति । वीर्यातिशयशालिनामपि ग्रामचतुष्टयमात्रप्रार्थनं गोत्रक्षयभीत्यैवेति स्वाभिप्रायः प्रकटितो भविष्यतीत्यर्थः । कुरुराजस्य दुर्योधनस्यासंधेयता सन्ध्यनर्हता प्रतिपादिता उक्ता भवति । भार्यापरिभवादि दुःसह्यापराधसमुद्घाटनादितिभावः ।

(घे) एतत् अपकारोद्घाटनादि सर्वमपि निरर्थकं निष्फलम् । तावन्निश्चयेन 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारण' इति कोशात् । असन्धेयता संध्यनर्हता । निधनं हननमिति यावत् । प्रतिज्ञातम् । लोकेऽपि धार्तराष्ट्रस्य धृतराष्ट्रसंबन्धिनः कुलस्य क्षयो नाशः प्रसिद्धः । अस्माभिरसौ निश्चितं करिष्यत इति लोके प्रसिद्धमेव सत्यसन्धत्वादस्माकमितिभावः ।

(घै) लज्जां नाटयति अभिनयति । आत्मनः पितृव्यकुलक्षयहेतुत्वाल्लज्जासमुद्गमः।

(१७) युष्मानिति । क्रोधात्कोपेन शत्रूणां कुलस्य समूहस्य वंशस्य वा क्षयो नाशः कर्ता युष्मान्मद्व्यतिरिक्तांश्चतुरः पाण्डवान् ह्रेपयति लज्जयति । ह्रीलज्जायामित्यतो णिचि अर्तिह्रीत्यादिना पुक् । सभायां दाराणां सहधर्मिण्याः केशकर्षणं शत्रुकृतं कर्तृ न लज्जयति । लज्जतेर्णिच् । अयुक्तमेतदिति भावः । पथ्यावक्त्रं वृत्तम् ।

**द्रौपदी**—( जनान्तिकम् । ) णाह, ण लज्जन्ति एदे । तुमं वि दाव मा विसुमरेहि । (नाथ! न लज्जन्त एते । त्वमपि तावन्मा विस्मार्षीः।) (घो)

**भीमसेनः**—( सस्मरणम् ) वत्स! कथं चिरयति पाञ्चाली ? (घौ)

**सहदेवः**—आर्य! का खलु वेलात्रभवत्याः प्राप्तायाः । किं तु रोषावेशवशादागताप्यार्येण नोपलक्षिता । (घं)

**भीमसेनः**—( दृष्ट्वा सादरम् । ) देवि ! समुद्धतामर्षैरस्माभिरागतापि भवति नोपलक्षिता । अतो न मन्युं कर्तुमर्हसि । (घः)

**द्रौपदी**—णाह! उदासीणेसु तुह्मेसु मह मण्णू, ण उण कुविदेसु । ( नाथ ! उदासीनेषु युष्मासु मम मन्युर्न पुनः कुपितेषु । ) (ङ)

**भीमसेनः**—यद्येवमपगतपरिभवमात्मानं समर्थयस्व ( हस्ते गृहीत्वा पार्श्वे समुपवेश्य मुखमवलोक्य । ) किं पुनरत्रभवतीमुद्विग्नामिवोपलक्षयामि । (ङा)

---

(घो) अत्रापि जनान्तिकमिति निरर्थकमेव । अन्योन्यामन्त्रणाभावात् । तावदित्यवधारणे मैवेत्यर्थः विस्मार्षीः न विस्मर । माङि लुङ् इति लुङि न माङ्योग इत्यटो निषेधः ।

(घौ) सस्मरणमिति । दाराणामित्यादिवचनेनसबन्धेन स्मरणम् । पाञ्चाली चिरयति विलम्बं करोति । चिरशब्दाद्विलम्बार्थात्तत्करोतीति णिच् ।

(घं) अत्र भवत्याः पूज्याया द्रौपद्याः प्राप्तायाः का कियतीत्यर्थः खलु वेला समयः अतीतेति शेषः । आर्येण भवता रोषस्य य आवेशस्तस्य वशात् अधीनतया । अत्राधीनवचनोऽपि वशशब्दो भावप्रधानतया निर्दिष्टः । न उपलक्षिता दृष्टा ।

(घः) सादरं सबहुमानम् । समुद्धतामर्षैः प्रवृद्धक्रोधैः अस्माभिः मयेत्यर्थः । अस्मदो द्वयोश्चेति बहुवचनम् । भवती आगताऽपि न उपलक्षिता दृष्टा । अतो हेतोः मन्युं क्रोधं 'मन्युर्दैन्ये क्रतौ क्रुधी' त्यमरः । कर्तुं नार्हसि ।

(ङ) उदासीनेषु तटस्थेषु । वैरनिर्यातनव्यापारशून्येष्वित्यर्थः ।

(ङा) यद्येवं उदासीनेष्वस्मासु ते मन्युस्तर्हि । अपगतपरिभवं दूरीभूतावमानं अवमन्तॄणां रिपूणां समूलमुच्छेदादिति भावः । आत्मानं स्वं समर्थयस्व संभावय अवधार-

**द्रौपदी**—णाह! किं उव्वेअकालणं तुह्मेसु सण्णिहिदेसु ! ( नाथ ! किमुद्वेगकारणं युष्मासु सन्निहितेषु ? ) (ङि)

**भीमसेनः**—किमिति नावेदयसि ? ( केशानवलोक्य ) अथवा किमावेदितेन ? (ङी)

जीवत्सु पाण्डुपुत्रेषु दूरमप्रोषितेष्वपि ।
पाञ्चालराजतनया वहते यदिमां दशाम् ॥ १८ ॥

---

येति यावत् । आगर्वीयत्वात्तामर्थयतेस्तङ् । हस्ते गृहीत्वा धृत्वा । पार्श्वे समीपे 'पार्श्वमन्तिक' इति हैमः । अत्रभवतीं त्वां किं कस्मात् उद्विग्नां खिन्नाम् । उपलक्षयामि पश्यामि। यत्त्वमुद्विग्नेव दृश्यसे तत्र किं कारणमित्यर्थः ।

(ङि) युष्मासु विक्रान्तेषु पाण्डवेषु सन्निहितेषु सत्सु किमुद्वेगस्य कारणं न किंचिदित्यर्थः । अत्र किमपीतिं पाठो न युक्त इत्युपेक्षितः । एवं हि आवेदनोन्मुखी पाञ्चालीत्यवबोध्येत नैव तु तत्राप्रवृत्तिरेतस्याः । ततश्च किमिति नावेदयसीत्यादि भीमसेनोक्तं न संगच्छेतेति ।

(ङी) किमिति कस्मात् नावेदयसि न कथयसि । आवेदितेन कथनेन । नपुंसके भावे क्त इति क्तः । किं किं फलम् । कथनमपि निष्फलमेवेत्यर्थः ।

(१८) कुत एतादित्याह जीवत्स्विति । यत् यस्मात् पाण्डोः एतन्नामकस्य वीरप्रवरस्य राज्ञः पुत्रेषु जीवत्सु ध्रियमाणेषु सत्सु । किं च दूरं अप्रोषितेषु: अप्रयातेषु सत्सु अपि । प्रपूर्वाद्वसेः क्तः यजादित्वात्संप्रसारणम् । पाञ्चालानां राज्ञो द्रुपदस्य तनया पुत्री द्रौपदी इमां केशमोचनलक्षणां दशां वहते प्राप्नोति । वहतेः स्वरितेत्त्वादात्मनेपदम् । भर्तरि दूरप्रवासं गते मृते वा नारीणां वेणीग्रथनं निषिद्धं अन्यदा त्वेतदावश्यकमेव। सत्यप्येवमस्याः पतिषु विक्रमशालिनो राज्ञः पुत्रेष्वस्मासु तथाविधं प्रवासमनुपाश्रितेषु मरणमप्यप्राप्तेषु च राजकुलसंभवाया द्रौपद्या यदेवंविधाऽवस्थितिस्तदुद्वेगकारणकथनेपि न किमपि फलं सम्पत्स्यते । एषा व्यवस्था ऽस्माकमुद्वेगापनयाक्षमत्वं द्योतयतीति भावः । यद्वा अस्मासुजीवत्स्वप्रोषितेष्वपि वा यदियमेवंविधां दशां वहति तदेवास्या उद्वेगकारणमिति विनाऽप्यावेदनमुद्वेगहेतोरवगम्यमानत्वान्निष्फलमेवावेदनमित्यर्थः । न चास्मान्मृते भर्तरि केशधारणं नारीणां विहितमिति भट्टनारायणाभिप्राय इति भ्रमितव्यम् । ब्राह्मण्या एव वपनाधिकारेण तदितरत्र केशधारणे बाधकाभावात् । तदाह व्यासः 'मृतं भर्तारमादाय **ब्राह्मणी** व-

**द्रौपदी**—हञ्जे बुद्धिमदिए! कहेहि णाहस्स को अण्णो मह परिहवेण खिज्जइ ? ( हञ्जे बुद्धिमतिके, कथय नाथाय कोऽन्यो मम परिभवेन खिद्यते।) (ङु)

**चेटी**—जं देवी आणवेदि । (भीममुपसृत्य । अञ्जलिं बध्द्वा ।) सुणादु कुमालो । इदोवी अहिअदरं अज्ज उव्वेअकालणं आसी देवीए । (यद्देव्याज्ञापयति । श्रृणोतु कुमारः । इतोऽप्यधिकतरमद्योद्वेगकारणमासीद्देव्याः । (ङू)

**भीमसेनः**—किं नामास्मादप्यधिकतरम् ? बुद्धिमतिके ! कथय ।

कौरव्यवंशदावेऽस्मिन्क एष शलभायते । ?
मुक्तवेणीं स्पृशन्नेनां कृष्णां धूमशिखामिव ॥ १९ ॥

---

द्विमाविशेत् । जीवन्ती चेत्त्यक्तकेशा तपसा शोषयेद्वपुः ॥ ' इति । अत्र च पाञ्चाल्या दशयोद्वेगकारणस्य साधनादनुमानमलङ्कारः । 'अनुमानं तु विच्छित्या ज्ञानं साध्यस्य साधनात्। इति लक्षणात् । पथ्यावक्त्रं वृत्तम् ।

(ङु) नाथस्य नाथाय भीमायेत्यर्थः । प्राकृते चतुर्थ्याः स्थाने षष्ठी । अनुवादे तु चतुर्थीप्रयोग एव साधीयानिति प्रतिभाति । विद्यमाना तु षष्ठी शेषे भविष्यति । परिभवेन शत्रुकृतेनावमानेन ।

(ङू) देवी राज्ञी द्रौपदी । यदाज्ञापयति तत्करोमीति शेषः ।

(१९) कौरव्येति । कः एषः द्रौपद्या अवमन्ता । मुक्ता उन्मुक्ता वेणी स्तोमरूपः प्रवाहो यया तां पक्षे मुक्ता त्यक्ता वेणी केशरचना यया तां धूमशिखां धूमाग्रमिव वर्तमानां कृष्णां द्रौपदीं स्पृशन् । स्पृशतेर्लक्षणहेत्वोः क्रियाया इति हेतौ शता । शलभायमानत्वे हि स्पर्शो हेतुरिति । कौरव्यवंशदावे । कुरुशब्दः कुरुकुलसंभवे लाक्षणिको रघुवत् । तेन कुरोर्धृतराष्ट्रस्यापत्यानि कौरव्याः। कुरुनादिभ्य इति ण्यः। तेषां वंशः समूहः तस्य दावे वनाग्नाविव वर्तमाने अस्मिन् मयि । वंशपदं श्लेषमर्यादया वेणुमाभिदधत्तत्सादृश्यं कौरव्यवंशस्य गमयति । शलभायते शलभः पतङ्ग इवाचरति। कर्तुः क्यङित्याचारे क्यङ् । 'वेणी सेतुप्रवाहयोः। देवताडे केशबन्धे' इति हैमः। 'वंशः संघेऽन्वये वेणौ' इत्यभिधानचिन्तामणिः । 'दवो दाव इव स्यातो वनाग्निवनयोरपि । ' इति विश्वः । 'शिखाग्रमात्रे चूडाया' मिति। हैमः । अत्र रूपकोमयोः संसृष्टिः । एताभ्यां चालङ्काराभ्यां य एनां स्पृशति तमिमं भस्मसात्करिष्यामीति कौरवांश्चावश्यं संहरिष्यामीति च वस्तु व्यज्यत । पथ्यावक्त्रं वृत्तम् ।

**चेटी**—सुणादु कुमालो । अज्ज क्खु देवी अम्बासहिदा सुभद्दाप्पमुहेण सवत्तिवग्गेण परिवुदा अज्जाए गन्धालीए पादवन्दणं कादुं गदा । ( श्रृणोतु कुमारः । अद्य खलु देव्यम्बासहिता सुभद्राप्रमुखेण सपत्नीवर्गेण परिवृता आर्याया गान्धार्याः पादवन्दनं कर्तुं गता । ) (ङ)

**भीमसेनः**—युक्तमेतत् । वन्द्याः खलु गुरवः । ततस्ततः । (ङे)

**चेटी**—तदो पडिणिवुत्तमाणा भाणुमदीए दिट्ठा । ( ततः प्रतिनिवर्तमाना भानुमत्या दृष्टा ) (ङो)

**भीमसेनः**—(सक्रोधम् ।) आः, शत्रोर्भार्यया दृष्टा ? हन्त, स्थानं क्रोधस्य देव्याः । ततस्ततः । (ङौ)

**चेटी**—तदो ताए देवीं पेक्खिअ सहीजणदिण्णदिट्ठीए सगव्वं ईसि विहसिअ भणिअं ।(ततस्तया देवीं प्रेक्ष्य सखीजनदत्तदृष्ट्या सगर्वमीषद्विहस्य भणितम् ।) (ङं)

**भीमसेनः**—न केवलं दृष्टा उक्ता च ? अहो किं कुर्मः । ततस्ततः ।

---

(ङ) अद्येति । खल्विति वाक्यालङ्कारे । देवी राज्ञी द्रौपदी । अम्बया भवन्मात्रा कुन्त्या सहिता युक्ता । सुभद्रा प्रमुखा यस्मिंस्तेन सपत्नीनां समानः एकः पतिर्यासां तासां स्त्रीणाम् । नित्यं सपत्न्यादिष्विति नः । समानस्येति योगविभागाच्च सादेशः । वर्गेण समूहेन परिवृता युक्ता । गान्धार्या दुर्योधनमातुः ।

(ङे) युक्तं योग्यम् । एतत्पादवन्दनार्थं गमनम् । खल्विति हेतौ । ततस्ततः ततः परं कथयेत्यर्थः ।

(ङो) प्रतिनिवर्तमाना प्रत्यागच्छन्ती । भानुमत्या दुर्योधनभार्यया ।

(ङौ) आः इति कोपे । शत्रोर्दुर्योधनस्य । हन्तेति विषादे 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' रित्यमरः । देव्या द्रौपद्याः क्रोधस्य स्थानं पात्रं शत्रोर्भार्ययाऽवलोकनमित्यर्थात् । युक्तः कोप इति भावः ।

(ङं) तया भानुमत्या देवीं द्रौपदीं प्रेक्ष्य दृष्ट्वा । सखीनां जनेषु दत्ता दृष्टिर्यया तथाभूतया । इयं साऽस्मद्भर्त्रा परिभूता पाण्डवभार्येति संसूचनाय सखीजने दृग्दानम् । ईषत् किञ्चित् । भणितं उक्तम् ।

**चेटी**—अइ जण्णसेणि ! पञ्च गामा पत्थीअन्ति त्ति सुणीअदि । ता कीस दार्णीं वि दे केसा ण संजमीअन्ति ? ( अयि याज्ञसेनि ! पञ्च ग्रामाः प्रार्थ्यन्त' इति श्रूयन्ते तत्कस्मादिदानीमपि ते केशा न संयम्यन्ते ? ) (ङः)

**भीमसेनः**—सहदेव ! श्रुतम् ?

**सहदेवः**—आर्य ! उचितमेवैतत्तस्याः । दुर्योधनकलत्रं हि सा । पश्य (च)

स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि ।
मधुरापि हि मूर्च्छयते विषविटपिसमाश्रिता वल्ली ॥ २० ॥

**भीमसेनः**—बुद्धिमतिके ! ततो देव्या किमभिहितम् ? (चा)

**चेटी**—कुमाल ! जइ परिजणहीणा भवे तदो देवी भणादि ( कुमार ! यदि परिजनहीना भवेत्तदा देवी भणति । ) (चि)

---

(ङः) उक्तमनुवदति । अयीति । याज्ञसेनि द्रौपदि । प्रार्थ्यन्ते याच्यन्ते पाण्डवैरिति शेषः । श्रूयतेऽस्माभिरिति शेषः । तत्तस्मादिदानीमपि सांप्रतमपि सन्धिसंघटनेन दुःशासनहननस्यासंभवात्तच्छोणितार्द्रपाणिर्वेणीं संग्रथिष्यामीति भीमकृतायाः प्रतिज्ञायाः पूर्तेरसंभवात्केशमोक्षणस्य प्रयोजनाभावादितिभावः । कस्मात् हेतोः न संयम्यन्ते न बध्यन्ते । सोल्लुण्ठनोक्तिरियम् । असमर्थास्ते पतय इति भावः ।

(च) तस्याः भानुमत्याः उचितं योग्यम् । हि यतः सा दुर्योधनस्य कलत्रं भार्या 'कलत्रं श्रोणिभार्ययोः' इत्यमरः ।

(२०) स्त्रीणामिति । हि यतः स्त्रीणां चेतांसि मनांसि साहचर्याद्धेतुः सहवासाद्धेतोः भर्तृसदृशानि भर्तृतुल्यानि भर्तृचित्तसदृशानीत्यर्थः । भवन्ति । 'संसर्गजा दोषगुणा भवन्ती' ति भावः । दृष्टान्तमाह । मधुरा मधुररसवत्यपि वल्ली लता । विषविटपिसमाश्रिता विषवृक्षं श्रिता मूर्छयते भक्षयितारं विसंज्ञतां नयति । अत्र क्रियाफलस्य कर्तृगामित्वाभावेऽपितङ् । निरङ्कुशाः कवयः । अत एव च सेहुण्डादिगतां गुडूचीं नाद्रियन्ते भैषज्यकर्मणि लोकाः । दृष्टान्तालङ्कारः । तल्लक्षणं तु 'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बन' मिति । आर्या जातिः । अत्र भानुमत्या वचनस्यौचित्यसाधनायस्त्रीणामित्या दिवचननिदर्शनाद्दृष्टान्ताख्यं नाट्यलक्षणमप्यभिहितं भवति । तच्च 'दृष्टान्तो यस्तु पक्षार्थसाधनाय निदर्शनम् ।' इति साहित्यदर्पणे प्रोक्तम् ।

(चा) अभिहितं उक्तम् । अभिपूर्वकाद्दधातेः क्तः ।

**भीमसेनः**—किं पुनरभिहितं भवत्या ?

**चेटी**—कुमाल ! एव्वं मए भणिदं अइ भाणुमदि ! तुह्माणं अमुक्केसु केसहत्थेसु कधं अह्माणं देवीए केसा संजमीअन्ति त्ति । ( कुमार एवं मया भणितम् । अयि भानुमति ! युष्माकममुक्तेषु केशहस्तेषु कथमस्माकं देव्याः केशाः संयम्यन्त इति । (ची)

**भीमसेनः**—( सपरितोषम् । ) साधु बुद्धिमतिके ! साधु । तदभिहितं यदस्मत्परिजनोचितम् । ( इति स्वाभरणानि बुद्धिमतिकायै प्रयच्छति । अधीरमासनादुत्तिष्ठन् । ) अयि पाञ्चालराजतनये ! श्रूयताम् । अचिरेणैव कालेन । (चु)

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
　संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
　रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥ २१ ॥

---

(चि) परिजनहीना सेवकजनशून्या मद्विरहितेति यावत् । मयैवात्र प्रत्युक्तमिति भावः ।

(ची) कुमारेति । युष्माकं कौरवभार्याणाम् केशहस्तेषु केशकलापेषु 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्पर' इत्यमरः । अमुक्तेषु सत्सु । भर्तृमरणादिति भावः । अस्माकं देव्या राज्ञ्या द्रौपद्याः केशाः कथं संयम्यन्ते संयस्यन्त इत्यर्थः । यदा भवतां भर्तारो म्रियेरंस्तदैव यथाप्रतिज्ञमस्याः केशाः संयम्येरन्निति भावः । अस्यैवार्थस्य भङ्ग्यन्तरेण प्रतिपादनात्पर्यायोक्तमलङ्कारः तदुक्तं 'पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते' इति । एतेन च हेतुर्नामनाट्यलक्षणमभिहितं भवति ' हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनादि ' ति दर्पणोक्तेः ।

(चु) सपरितोषमिति । समुचितप्रतिवचनप्रदानात्परितोषः । अभिहितं भवत्येत्यर्थात् । अधीरमविलम्बितमिति यावत् । अचिरेणैव कालेन उत्तंसयिष्यतीति पद्यगतक्रियया संबन्धः ।

(२१) चञ्चदिति चञ्चन्तौ चलन्तौ भुजौ यस्मिन्कर्मणितद्यथा तथा भ्रमिता घूर्णिता या गदा तस्या अभिघातेन प्रहारेण संचूर्णितं सम्यक्चूर्णीकृतं ऊरुयुगलं सक्थिद्वयं यस्य तस्य सुयोधनस्य । षष्ठ्याः शोणितेन सम्बन्धः । स्त्यानं स्निग्धं अवनद्धं संलग्नं घनं सान्द्रं च यच्छोणितं रक्तं तेन शोणौ आरक्तौ पाणी यस्य तथाभूतः । 'स्त्यानं स्यात्स्निग्धआलस्य'

**द्रौपदी**—किं णाह ! दुक्करं तुए परिकुविदेण ? सव्वहा अणुगेह्णन्तु एदं ववसिदं दे भादरो ( किं नाथ ! दुष्करं त्वया परिकुपितेन ? सर्वथानुगृह्णन्त्वेतद्व्यवसितं ते भ्रातरः । ) **(चू)**

**सहदेवः**—अनुगृहीतमेतदस्माभिः ।

( नेपथ्ये महान्कलकलः । सर्वे सविस्मयमाकर्णयन्ति । )

**भीमसेनः**—

मन्थायस्तार्णवाम्भःप्लुतकुहरवलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताड्यतेऽयम् ॥ २२ ॥

---

इति हैमः । 'घनं निरन्तरं सान्द्र' मित्यमरः । भीमः कर्ता तव कचान् केशान् उत्तंसयिष्यति अलङ्करिष्यति । संयमयिष्यतीति यावत् । वसन्ततिलकाख्यं वृत्तम् ।

(चू) किमिति । परिकुपितेन त्वया कर्त्रा किं दुष्करं दुःखेन कर्तुं शक्यम् । न किंचिदपि सर्वमपिहि त्वया लीलयैव कर्तुं शक्यमिति भावः । ईषद्दुःसुष्विति खल् । ते व्यवसितंउद्यमं सर्वथा सर्वप्रकारेण अनुगृह्णन्तु आनुकूल्येन स्वीकुर्वन्तु ।

(२२) मन्थेति । अयं दुन्दुभिः केन ताड्यते आहन्यते । कीदृशो दुन्दुभिः ? मन्थेन मन्थनक्रियया देवासुरकृतया आयस्तः क्षुब्धो योऽर्णवः सागरस्तस्य अम्भसा तोयेन प्लुतानि पूर्णानि कुहराणि रन्ध्राणि यस्य तस्य वलतश्चलतो मन्दरस्य मथनदण्डभूतस्याद्रिविशेषस्य ध्वानो ध्वनिरिव धीरः प्रौढः । अत्र मन्थपदस्य मथनदण्ड इत्यर्थकरणमयुक्तं तस्य मन्दरभिन्नत्वप्रतीत्यापत्तेः । मन्थशब्दश्च मन्थ विलोडन इत्यतो भौवादिकाद्घञि निष्पन्नः । कोणानां वादनदण्डानां आघातेषु प्रहारेषु सत्सु । 'कोणो वादनदण्डे स्यात्' इति हलायुधः । गर्जन्तीनां शब्दायमानानां प्रलयस्य कल्पान्तस्य सम्बन्धिनीनां घनघटानां मेघसमूहानां यः अन्योन्यं संघट्टः संघर्षणं तज्जन्यः शब्द इति यावत् तद्वच्चण्डः उग्रः । घटाशब्दस्य करिसमूहवाचित्वेऽपि समूहसामान्यवाचित्वमपिस्वीक्रियते कविभिः । कृष्णाया द्रौपद्याः क्रोधस्य तत्फलभूतस्य संहारस्येत्यर्थः । अग्रदूतः अग्रगामी संदेशहर इव । कुरुकुलस्य कौरवसमूहस्य निधनस्य मरणस्यसूचकउत्पातभूतो निर्घातसंज्ञको वात इव । 'उक्तं च निर्घातलक्षणं बृहत्संहितायाम् 'पवनः पवनाभिहतो गगनादवनौ यदा पतति । भवति तदा निर्घातः' । इति ।

प्रविश्य संभ्रान्तः

**कञ्चुकी**—कुमार! एष खलु भगवान्वासुदेवः । (चे)

(सर्वे कृताञ्जलयः समुत्तिष्ठन्ति ।) (चै)

**भीमसेन**—(ससंभ्रमम् ।) क्वासौ भगवान्? (चो)

**कञ्चुकी**—पाण्डवपक्षपातामर्षितेन सुयोधनेन संयन्तुमारब्धः । (चौ)

(सर्वे संभ्रमं नाटयन्ति ।)

**भीमसेनः**—किं संयतः?

**कञ्चकी**—नहि नहि, संयन्तुमारब्धः ।

**भीमसेनः**—किं कृतं देवेन?

**कञ्चुकी**—ततः स महात्मा दर्शितविश्वरूपतेजःसंपातमूर्छितमवधूय कुरुकुलमस्मच्छिबिरसंनिवेशमनुप्राप्तः कुमारमविलम्बितं द्रष्टुमिच्छति । (चं)

**भीमसेनः**—(सहासम् ।) किं नाम दुरात्मा सुयोधनो भगवन्तं संयन्तुमि-

---

अस्य च प्रगल्भध्वनिविशिष्टदुन्दुभिसादृश्यम् । एष च संहारादिसूचक इति ज्यौतिषिकाः । अस्माकं यः सिंहनादस्तस्य प्रतिरसितस्य प्रतिध्वनेः सखा तुल्यः । राजाहःसखिभ्य इति टच् । मालयोपमालङ्कारः । स्रग्धरावृत्तम् । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् । इति लक्षणात् ।

(चे) संभ्रान्तः स्वकर्मणि त्वरितः । कञ्चुकी सौविदल्लापरपर्यायो राज्ञो वेत्रधरः । भगवान् ऐश्वर्यादिविशिष्टः वासुदेवः वसुदेवपुत्रः श्रीकृष्णः । द्रष्टुमिच्छतीत्युत्तरेण संबन्धः ।

(चै) कृताञ्जलय इति पूज्यत्वाच्छ्रीकृष्णस्यैष इत्यागमनसंभावनादुत्थानम् ।

(चो) ससंभ्रमं सत्वरम् । एष इतिकुञ्चुकिनाभिधानात्क्वाऽसाविति प्रश्नः ।

(चौ) पाण्डवानां पक्षे पातः अभिनिवेशः श्रीकृष्णस्य तेन अमर्षितः क्रुद्धस्तेन । संयन्तुं बन्धुम् ।

(चं) महात्मा पूज्यमूर्तिः श्रीकृष्णः दर्शितस्य स्वयं दृग्विषयतां नीतस्य विश्वरूपस्य आत्मनो विराट्स्वरूपस्य तेजसः संपातेनाभिघातेन मूर्छितं मोहं प्राप्तं कुरुकुलं कौरवसमूहम् अवधूय त्यक्त्वेति यावत् । अस्माकं शिबिरस्य सेनायाः संनिवेशं वसतिस्थानम् कुमारं भवन्तं भीमसेनम् । अविलम्बितं विलम्बशून्यं यथातथा ।

च्छति ? (आकाशे दत्तदृष्टि:।) आ: दुरात्मन्कुरुकुलपांसन! एवमतिक्रान्तमर्यादे त्वयि निमित्तमात्रेण पाण्डवक्रोधेन भवितव्यम्। (चः)

**सहदेवः**—आर्य! किमसौ दुरात्मा सुयोधनहतको वासुदेवमपि भगवन्तं स्वरूपेण न जानाति? (छ)

**भीमसेनः**—वत्स, मूढः खल्वयं दुरात्मा कथं जानातु। पश्य ? (छा)

आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम्॥ २३॥

---

(चः) कुरुकुलपांसनेति। कुरूणां कुलस्य पांसनो दूषकः 'दूषकपांसनौ' इति त्रिकाण्डशेषः। अतिक्रान्ता मर्यादा आचारसीमा येन तथाविधे सति। मर्यादास्थितिसीमयोरिति हैमः। निमित्तमात्रेण भवत्संहार विषय इत्यर्थात्।

(छ) सुयोधनहतकः। हतकशब्दो मृतार्थो निन्दाद्योतकः 'आक्षेपे हतकः स्मृत' इति हलायुधः। कुत्सितानि कुत्सनैरिति समासः। स्वरूपेण पारमार्थिकेन रूपेण। प्रकृत्यादिभ्य इति तृतीया। वासुदेवस्य पारमार्थिकं स्वरूपं न जानाति किमित्यर्थः।

(छा) मूढः अज्ञः। 'अज्ञे मूढयथाजात'त्यमरः खलु निश्चये। निश्चितमज्ञ इत्यर्थः। ज्ञानाभावमुपपादयति पश्येति।

(२३) आत्मारामा इति। आत्मनि परब्रह्मणि आरमन्ते विषयान्तरपरिहारपूर्वकमासज्यन्त इत्यात्मारामाः। निर्विकल्पे समाधौ विषयान्तरस्यापरिस्फुरणात्। निर्विकल्पे असंप्रज्ञाताख्ये समाधौ ध्यानविशेषे विहितरतयः कृतप्रमाणः। ज्ञानस्योद्रेकादभिवृध्या विघटिता विश्लेषितास्तमसो ज्ञानप्रतिबन्धकस्याज्ञानस्य ग्रन्थयो ग्रन्थितुल्यानि बन्धनानि यैस्तथाभूताः। सत्वगुणे निष्ठा स्थितिर्येषां तथाभूताः। सत्त्वमात्रमाश्रितवन्त इत्यर्थः। सत्त्वस्यैव ज्ञानजनकत्वात्। एवं भूताः पुरुषाः। तमसामज्ञानानां परस्तात्परत्र विद्यमानम्। विशुद्धज्ञानमयत्त्वात्तस्य। ज्योतिषां तेजसां ग्रहादिरूपाणां परस्तात्परत्र विद्यमानं सर्वोत्तरतेजोमयत्वात्तस्य। अत एव वा पूर्वत्र तमःपदमन्धकारार्थकं मन्तव्यम्। यं, कमपि अनिर्वचनीयम् वीक्षन्ते पश्यन्ति। तं अमुम् पुराणमनादिं देवं श्रीकृष्णं मोहेनाज्ञानेनान्धः परमात्मसाक्षात्कारेऽसमर्थः अयं दुर्योधनः कथं वेत्तु जानातु। नैव विज्ञातुं प्रभवेत्। तत एव च युक्त-

आर्य मैत्रेय ! किमिदानीमध्यवस्यति गुरुः ? (छि)

---

मस्याज्ञानमिति भावः । त्रितय किलैतच्चरमयोगाङ्गतयोच्यते धारणा ध्यानं समाधिश्चेति । तत्र यत्र क्वापि देशे चित्तस्य स्थिरीकरणं धारणा । यथा शूलधारिणि चन्द्रार्धशेखरे भगवद्वपुषि । तदाह भगवान् पतञ्जलिः । 'देशबन्धश्चित्तस्य धारणा ' । इति । यत्र च धारणायां मनः स्थिरीक्रियते तस्यैवानन्यवृत्त्या ज्ञानं ध्यानम् । तदप्युक्तं तेनैव । 'तत्र प्रत्ययैकतानता ध्यान ' मिति । ध्याने चाहं ध्यानकर्ता परमात्मा च ध्येय इत्यादिकं मनसो ज्ञानं भवति । यदा तु चित्तं ध्येयाकारतया परिणतं ध्येयस्वरूपेणैव भासते आत्मनश्च स्वरूपेण शून्यमिव भवति तदा तध्यानमेव समाधिरित्युच्यते । तदप्याह स एव 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ' इति । अर्थो ध्येयम्।स चायं समाधिर्द्विविधः संप्रज्ञातश्चासंप्रज्ञातश्चेति । तत्र तावत्संप्रज्ञातश्चतुर्विधो भवति । वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मिताऽनुगतश्चेति।यः कोपि वा परमात्मानं चिन्तयितुकामः पुरुषः प्रथमतः स्थूलस्वरूपमेवैनं चिन्तयति । स्थूलपरिचयाच्चित्तस्य । युगपत्सूक्ष्मे प्रवेश्यमानं चित्तं नास्तिकतां जनयेदिति । एवं च स्थूलं चन्द्रार्धशेखरादि स्वरूपं ध्यायतो यच्चित्तस्य स्थूलध्येयात्मना परिणमनं सोऽयं वितर्कानुगतः संप्रज्ञातः समाधिः । वितर्को हि स्थूलस्वरूपतापत्तिः । तस्यैव ध्येयस्य प्रकृतिमहदहङ्कारादिसूक्ष्मतत्त्वात्मकतया चिन्तनेन तदाकारतया परिणमनं चेतसो विचारानुगतः । एवं च चिन्तने सत्त्वस्योद्रेकाद्य आनन्दः समुद्भवति तत्साक्षात्कार आनन्दानुगतः । केवलपरमात्मस्वरूपज्ञानलक्षणस्तु अस्मितानुगतः । एकात्मकं हि ज्ञानमस्मिता । तदप्याचष्टे स एव 'वितर्कविचारानन्दास्मितानुगमात्संप्रज्ञात' इति । संप्रज्ञात एव सविकल्पक इत्युच्यते । असंप्रज्ञतस्तु समाधिः सर्वासामपि वृत्तीनामस्तमने संस्कारमात्रावशेषवाँश्चित्तस्य निर्विशेषपरमात्मानुभवफलो निरोधः । परस्मादेव वैराग्यादसौ भवति । नात्र स्थूलाद्यालम्बनम् । लक्षितश्चायं भगवता पतञ्जलिना ' विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्य' इति । अत्र च समाधौ शूलधारित्वादयः स्थूलाः प्रकृत्यादयः सूक्ष्मा अपि वा परमात्मनो विकल्पा न परिस्फुरन्ति । केवलं तु निराकृतविकल्पः परमात्मैव साक्षाद्भवति । आत्मारामा निर्विकल्पे समाधौ विहितरतयश्च सत्त्वनिष्ठा यं वीक्षन्त इत्यनेन भगवतः श्रीकृष्णस्य परमात्मत्वं स्फुटीकृतं भवति । परस्तादिति दिग्देशेत्यादिनाऽस्तातिः । षष्ठ्यतसर्थेति च तद्योगे षष्ठी । मन्दाक्रान्तावृत्तम् । मन्दाक्रान्ताम्बुधिनगहयैर्मो भनौ तौ गुरू चेत् । इतिलक्षणात् ।

(छि) आर्येति आर्य कञ्चुकिन्! 'आर्यः स्यात्सौविदल्लेऽपि' इति हलायुधः सौविदल्लः कञ्चुकी । मैत्रेय इत्यत्र जयन्धरेत्यपि क्वचित्पाठः । स एव च युक्त इति प्रतिभाति । मैत्रेयादिनाम्नां कञ्चुकिष्वदर्शनात् । एतानि हि प्रायेण विदूषकस्यैव नामानि भवन्तीति । अध्यवस्यति करोति ।

**कञ्चुकी**——स्वयमेव गत्वा महाराजस्याध्यवसितं ज्ञास्यति कुमारः । (इति निष्क्रान्तः ।) (छी)

( नेपथ्ये । कलकलानन्तरम् ।)

भो भो द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयोऽस्मदक्षौहिणीपतयः कौरवचमूप्रधानयोधाश्च, श्रृण्वन्तु भवन्तः । (छु)

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
　यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसंभृतं नृपसुताकेशाम्बराकर्षणैः
　क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥ २४ ॥

---

(छी) अध्यवासितं कार्यम् । भावे क्तः ।

(छु) द्रुपदविराटौ भूपविशेषौ । वृष्णयोऽन्धकाश्च यादवाः । ते सहदेवश्चेत्येते प्रभृतयो येषु ते । अस्माकं पाण्डवानामक्षौहिण्याः सेनायाः पतयः । अक्षौहिण्यां गजादिप्रमाणं तु प्रोक्तं 'अक्षौहिण्याः प्रमाणं तु खागाष्टैकद्विकैः (२१८७०) गजैः। रथैरेतैर्हयैस्त्रिघ्नैः पञ्चघ्नैश्च पदातिभिः ॥' इति । कौरवचम्वाः कौरवसेनायाः प्रधानयोधा मुख्या योद्धारः । 'अनीकिन्यक्षौहिणी च' इति सेनापर्यायेषु शारदीनाममाला ।

(२४) यदिति । यत् सत्यरूपव्रतस्य भङ्गाद्विच्छेदाद्भीरु मनो यस्य तथाभूतेन युधिष्ठिरेण । कोपमापद्य वनवासायनङ्गीकारे प्रतिज्ञाभङ्गेन सत्यभ्रंशः स्यादिति बिभ्यतेत्यर्थः । यत्नेन वीराणामवमानस्यासह्यतया प्रयासेन मन्दीकृतम् स्वयममन्दमपि मन्दतां गमितम् । वारितप्रसरमित्यर्थः । यत् शमवता शान्तिशालिना कुलस्यात्मनो वंशस्य शान्तिमुपद्रवराहित्यमिच्छता तेन विस्मर्तुमपि विस्मृतिं नेतुमपि ईहितं इष्टम् । सन्धिकरणोत्तरं क्रोधस्य निष्फलत्वादिति भावः । तत् नृपसुताया राजपुत्र्या द्रौपद्याः केशानामम्बरस्य चाकर्षणैर्दुःशासनकृतैः द्यूतारणौ द्यूतरूपे वह्निनिष्पादनोपयोगिनि दारुणि संभृतं निष्पादितं, यौधिष्ठिरं युधिष्ठिरसम्बन्धि महत् क्रोधज्योतिः कोपरूपं तेजः कोपाग्निरिति यावत् । कुरुवने कुरुकुलजाता दुर्योधनादय एव वनं तत्र जृम्भते प्रसर्पति । अत्र क्रोधे ज्योतिष्ट्वारोप एव कुरुषु वनत्वारोपे द्यूतेऽरणित्वारोपे नृपसुतायां गम्यमाने मन्थत्वारोपे तस्याः केशाम्बरेषु च गम्ये रज्जुत्वारोपे कारणमिति परम्परितं रूपकमलङ्कारः । एतेन च युधिष्ठिरोऽवश्यं कौरवान्विनाशयिष्यतीति वस्तु ध्वन्यते । उपमितसमासस्तु प्रकृतानुपयुक्त इत्युपेक्ष्य एवेति द्रष्टव्यम् । केशाम्बराकर्षणैर्महदितियोजनमपि हेयमेव । उक्तपूर्वलक्षणं शार्दूलविक्रीडितं वृत्तम् । अत्र समाधानं

**भीमसेनः**—( आकर्ण्य । सहर्षम् । ) जृम्भतां जृम्भतामप्रतिहतप्रसरमार्यस्य क्रोधज्योतिः । (छू)

**द्रौपदी**—णाह ! किं दाणीं एसो पलअजलहरत्थणिदमंसलो क्खणे क्खणे समरदुन्दुही ताडीअदि ? ( नाथ ! किमिदानीमेव प्रलयजलधरस्तानितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताड्यते ? ) (छे)

**भीमसेनः**—देवि ! किमन्यत् ? यज्ञः प्रवर्तते ।

**द्रौपदी**—( सविस्मयम् । ) को एसो जण्णो ? ( क एष यज्ञः ? )

**भीमसेनः**—रणयज्ञः । तथाहि । (छ)

चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥ २५ ॥

---

नाम नाट्याङ्गम् । स्वस्था भवन्तु मयि जीवति धार्तराष्ट्रा इतिप्रागुक्तस्य बीजस्य नायकाभिमतत्त्वोक्तेः । तदाह दर्पणे कविराजः 'बीजस्यागमनं यत्तु तत्समाधानमुच्यते' इति ।

(छू) अप्रतिहतप्रसरम् न प्रतिहतः कुण्ठितः प्रसरो वेगो यस्य तथा भूतम् । आर्यस्य युधिष्ठिरस्य ।

(छे) प्रलयसम्बन्धिनो ये जलधरा मेघास्तेषां स्तनितेन गर्जितेन तथाविधेन ध्वनिनेत्यर्थः मांसलः पुष्टः । प्रलयजलधरवद्गभीरं गर्जन्नित्यर्थः। एषः समरदन्दुभिः। किंकस्मात् ताड्यते आहन्यते । एतेन परिभावनाख्यं नाटकाङ्गमभिहितं भवति । 'कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावने' ति लक्षणात् ।

(छै) रणः संग्राम एव यज्ञः । तत्प्रवृत्तिं समर्थयति तथाहीति ।

(२५) चत्वार इति । वयं युधिष्ठिररहिताश्चत्वारः पाण्डवा ऋत्विजो याजकाः । 'ऋत्विजो याजकाश्चते' इत्यमरः । सः भगवान् हरिः श्रीकृष्णः कर्मणः संग्रामरूपस्य यज्ञस्य क्रियाया उपदेष्टा उपदेशकृत् आचार्य इत्यर्थः ।नरपतिर्युधिष्ठिरः संग्रामो युद्धमेवाध्वरो यज्ञस्तत्र दीक्षितः संजातदीक्षः । तारकादित्वादितच् । पत्नी सहधर्मिणो द्रौपदी गृहीतं व्रतं वेणीबन्धाभावादिरूपं यया तथाभूता । कौरव्याः कौरवा दुर्योधनादयः । कुरु-

**सहदेवः**—आर्य ! गच्छामो वयमिदानीं गुरुजनानुज्ञाता विक्रमनुरूपमाचरितुम् । (छो)

**भीमसेनः**—वत्स ! एते वयमुद्यता एवार्यस्यानुज्ञामनुष्ठातुम् । (उत्थाय) देवि ! गच्छामो वयमिदानीं कुरुकुलक्षयाय ।

**द्रौपदी**—(बाष्पं धारयन्ती ।) णाह, असुरसमराहिमुहस्स हरिणो विअ मङ्गलं तुह्माणं होदु । जं च अम्बा कुन्दी आसासदि तं तुह्माणं होदु । (नाथ ! असुरसमराभिमुखस्य हरेरिव मङ्गलं युष्माकं भवतु । यच्चाम्बा कुन्त्याशास्ते तद्युष्माकं भवतु । (छौ)

**उभौ**—प्रतिगृहीतं मङ्गलवचनमस्माभिः । (छं)

**द्रौपदी**—अण्णं अ णाह ! पुणो वि तुह्मेहिं समरादो आअच्छिअ अहं समासासइदव्वा । (अन्यच्च नाथ ! पुनरपि युष्माभिः समरादागत्याहं समाश्वासयितव्या ।)

**भीमसेनः**—ननु पाञ्चालराजतनये ! किमद्याप्यलीकाश्वासनया ? (छः)

---

नादिभ्य इति ण्यः । पशवो यागेऽत्र वध्या इत्यर्थः । प्रियाया अस्माकं वल्लभाया द्रौपद्या यः परिभवक्लेशः शत्रुकृतावमानजन्यः क्लेशः तस्य उपशान्तिः प्रशमः फलमस्य यज्ञस्येत्यर्थात् । अत्र च अयं यशोदुन्दुभिः यशःसूचको दुन्दुभिः कर्ता राजन्यानां योधभूतानां क्षत्रियाणामुपनिमन्त्रणाय आह्वानार्थं स्फीतं समृद्धं यथा तथा । स्फायी वृद्धावित्यतो निष्ठायां स्फायः स्फीति स्फ्यादेशः । रसति शब्दं करोति । रस शब्द इत्यतो लट् । साङ्गं रूपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।

(छो) गुरुणा जनेन युधिष्ठिरेण । अनुज्ञाता अनुमोदिताः । वयं त्वं चाहं चेत्यर्थः । अस्मदो द्वयोश्चेति बहुवचनम् । विक्रमस्यात्मनः पराक्रमस्य अनुरूपं योग्यं कर्मेति शेषः । आचरितुं कर्तुम् । यद्वा विक्रमानुरूपं यथा तथाऽऽचरितुमिति योज्यम् ।

(छौ) बाष्पं धारयन्ती निगृह्णन्ती । प्रयाणे बाष्पमोक्षस्यामङ्गल्यत्वात् । असुरसमराभिमुखस्य दैत्यसंग्रामे प्रवृत्तस्य हरेर्विष्णोः । मङ्गलं कल्याणम् । आशास्ते इच्छति तत् भवतां विजय इत्यर्थः ।

(छं) प्रतिगृहीतं स्वीकृतम् । मङ्गलवचनं भवदीयमित्यर्थात् ।

(छः) अलीका मिथ्याभूता या आश्वासना तया । किम् । परमार्थत एवाश्वासयिष्यामीत्यर्थः ।

भूयः परिभवक्लान्तिलज्जाविधुरिताननम् ।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम् ॥ २६ ॥

**द्रौपदी**—णाह ! मा क्खु जण्णसेणीपरिहवुद्दीविदकोवाणला अणवेक्खिद-सरीरा संचरिस्सध । जदो अप्पमत्तसंचरणिज्जाइं रिउबलाइं सुणीअन्ति । (नाथ ! मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला अनपेक्षितशरीराः संचरिष्यथ । यतोऽप्रमत्तसंचरणीयानि रिपुबलानि श्रूयन्ते । ) **(ज)**

**भीमसेनः**—अयि सुक्षत्रिये !

अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥ २७ ॥

---

(२६) भूय इति । परिभवेन शत्रुकृतावमानेन या क्लान्तिः ग्लानिर्लज्जाच ताभ्यां विधुरितं संजातवैकल्यं विवर्णमितियावत् आननं मुखंयस्य तं। विधुरशब्दाद्वैकल्यार्थकात्तारकादित्वादितच् । 'वैकल्येऽपिच विश्लेषे विधुरं विकले त्रिषु' इति मेदिनी । न निःशेषिताः निर्मूलिताः कौरव्याः कौरवा येन तं वृकोदरं मां भूयः पुनः न पश्यसि न द्रक्ष्यसीत्यर्थः । वर्तमानसामीप्ये भविष्यति लट् । बन्धुरिताननमिति पाठे बन्धुरितं व्याप्तम् । क्लान्तिलज्जाशब्दौ चात्र तज्जन्यवैवर्ण्ये लाक्षणिकौ । एतदपेक्षया विधुरितमित्येव पाठः साधुः । सारल्यात् ।

(ज) मा खल्विति । मेति निषेधार्थको माशब्दो न तु माङ् । अत एव संचरिष्यथेत्यत्र न लुङ् । याज्ञसेन्या मम द्रौपद्याः परिभवेनोद्दिपितः प्रदीप्तिं नीतः कोपरूपोऽनलोऽग्निर्येषां तथाभूताः । अनपेक्षितशरीराः न अपेक्षितं शरीरं यैस्तथाभूताः सन्तो न संचरिष्यथ । अप्रमत्तैः अनवधानशून्यैः संचरणीयानि प्रवेष्टुं योग्यानि । अवहितैरेव शत्रूणां बलेषु संचरणीयमिति भावः ।

(२७) अन्योन्येति । पाण्डुपुत्राः पाण्डवाः कर्तारः । संग्राम एव एकः प्रधानोऽर्णवः समुद्रः तस्यान्तःपयसि मध्यवर्तिनि जले विचरितुं संचरितुं पण्डिताश्चतुराः सन्ति । कीदृशे पयसि ? अन्योन्येषामास्फालेन घट्टनेन भिन्ना विदीर्णा ये द्विपा गजास्तेषां रुधिरं रक्तं वसा वस्रसा चरबीतिख्याता मांसं मस्तिष्कं मस्तुलुङ्गकं मेन्दू इतिख्यातं च तान्येवपङ्को

( इति निष्क्रान्ताः सर्वे । ) (जा)

## इति प्रथमोऽङ्कः । (जि)

यत्र तथाभूते । मग्नानां । पङ्क इत्यर्थात्संबध्यते । पङ्के निमग्नानां स्यन्दनानां रथानामुपरि तेषां मग्नतयाऽधः स्थातुमशक्यत्वात् कृतः पदन्यासः पदनिक्षेपो यैस्तथाभूताः विक्रान्ताः पराक्रमशालिनः पत्तयः पादचारिणः सैनिका यत्र तास्मिन् । स्फीतं समृद्धं यदसृक् रक्तं तस्य पानार्थं या गोष्ठी उपस्थितः सजातीयानां समाजः तत्र रसन्त्यः शब्दायमाना या अशिवा अमङ्गलसूचिकाः शिवाः शृगाल्यः ता एव तूर्याणि वाद्यविशेषाः तैस्तदनुरोधेनेत्यर्थः नृत्यन्तः कबन्धाः शिरोविरहिता देहा यस्मिंस्तत्रेति । अत्र संग्रामेऽर्णवत्वारोपो रुधिरादिषु पङ्कत्वारोपश्च वाच्यः । पत्तिकबन्धादिषु जलचरत्वारोपः पुनरार्थ इत्येकदेशविवर्तिरूपकमलङ्कारः 'यत्रकस्यचिदार्थत्वमेकदेशविवर्ति तत् । ' इति विश्वनाथोक्तेः ।

(जा) निष्क्रान्ताः गताः । अङ्कान्ते सर्वेषामपि पात्राणां गमनस्यावश्यकत्वात् ।

(जि) अङ्कः । तल्लक्षणमुक्तं विश्वनाथेन साहित्यदर्पणे 'प्रत्यक्षनेतृचारितो रसभावसमुज्ज्वलः । भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः । विच्छिन्नावान्तरैकार्थः किंचित्संलग्नबिन्दुकः । युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च ॥ नानाधिष्ठानसंयुक्तो नातिप्रचुरपद्यवान् । आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ॥ नानेकदिननिर्वर्त्यकथया संप्रयोजितः । आसन्ननायकः पात्रैर्युक्तस्त्रिचतुरैस्तथा ॥ दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः । विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा ॥ दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरं च यत् । शयनाधरपानादि नगराद्युपरोधनम् ॥ स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः । देवीपरिजनादीनाममात्यवणिजामपि । प्रत्यक्षनेतृचरितैर्युक्तो भावरसोद्भवैः । अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ॥ ' इति । इतिशब्दः समाप्तौ । तथा च प्रथमोङ्कः समाप्त इत्यर्थः ।

---

इति श्रीमत्पण्डितराजवंशावतंसवैयाकरणेशखर श्रीमत्कान्ताचार्यसूरिणां छात्रेण सदाशिवबुधेन्द्रतनुजन्मना राशिवडेकरोपाह्वन श्रीअप्पाशर्मविद्यावाचस्पतिना प्रणीतायां बालबोधिन्याख्यायां वेणीसंहारव्याख्यायां प्रथमोङ्कः । श्रीसदाशिवार्पणमस्तु । शिवम्

## द्वितीयोऽङ्कः ।

(ततः प्रविशति कञ्चुकी ।) (*)

**कञ्चुकी**—आदिष्टोऽस्मि महाराजदुर्योधनेन—'विनयंधर ! सत्वरं गच्छ त्वम् । अन्विष्यतां देवी भानुमती । अपि निवृत्ता अम्बायाः पादवन्दनसमयान्न वेति । यतस्तां विलोक्य निहताभिमन्यवो राधेयजयद्रथप्रभृतयोऽस्मत्सेनापतयः समरभूमिं गत्वा सभाजयितव्याः' इति । तन्मया द्रुततरं गन्तव्यमित्यहो प्रभविष्णुता महाराजस्य । यन्मम जरसाभिभूतस्य मर्यादामात्रमेवावरोधनिवासः । अथवा किमिति जरामुपालभेय । यतः सर्वान्तःपुरिकाणामयमेव व्यावहारिको वेषश्चेष्टा च । तथाहि । (जी)

---

**श्रीशिवः शरणम् ।**

**बालबोधिन्यां नाम वेणीसंहारव्याख्यायां**

## द्वितीयोऽङ्कः ।

**श्रीगणेशाय नमः ।**

(*) भीमसेननिष्क्रमणोत्तरं संवृत्तस्य भविष्यतश्चार्थस्य प्रकाशनार्थं विष्कम्भमवतारयति । तत इति । ततः भीमसेनादिनिष्क्रमणानन्तरम् । कञ्चुकी अन्तःपुराधिकृतः पुरुषः ।

(जी) आदिष्टोऽस्मि आज्ञापितोऽस्मि । सभाजयितव्या इतीत्यनेन संबन्धः । महाराजेन दुर्योधनेन । आज्ञामनुवदति विनयन्धरेति।विनयन्धर इति अस्य कञ्चुकिनः संज्ञा। अन्विष्यतां मार्ग्यताम् । अनुपूर्वक इच्छतिर्मार्गणार्थो विद्यते । अन्वेषणं चात्र वृत्तान्तज्ञानविषयको व्यापारः । भानुमतीति दुर्योधनभार्यायाः संज्ञा । देव्या भानुमत्या वृत्तान्तो ज्ञायतामित्यर्थः । त्वयेत्यर्थात् । कोसौ वृत्तान्तस्तदाह । अपीति । अपिः प्रश्ने । अम्बायाः दुर्योधनमातुर्गान्धार्याः पादवन्दनसमयात् पादयोर्नमस्करणरूपात् आचारात् आचारमनुष्ठायेत्यर्थः । 'समयाः शपथाचारे' त्यमरः । निवृत्ता प्रत्यागता न वा इति अन्विष्यतामित्यनेन

नोच्चैः सत्यपि चक्षुषीक्षितमलं श्रुत्वापि नाकर्णितं
शक्तेनाप्यधिकार इत्यधिकृता यष्टिः समालम्बिता ।
सर्वत्र स्खलितेषु दत्तमनसा यातं मया नोद्धतं
सेवास्वीकृतजीवितस्य जरसा किं नाम यन्मे कृतम् ? ॥ १ ॥

---

संबन्धः । किमन्वेषणकारणं तदाह । यत इति । यतो यस्मात्कारणात् तां भानुमतीं वि-लोक्य साक्षात्कृत्य । तदनन्तरमित्यर्थात् । समरभूमिं रणभूमिं गत्वा निहतः अभिमन्युः एतन्नामाऽर्जुनपुत्रो यैस्ते । राधेयः राधापुत्रः कर्णः जयद्रथ एतन्नामा क्षत्रियः तौ प्रमुखौ मुख्यौ यत्र ते अस्माकं सेनापतयः । सभाजयितव्याः सत्कारेणानन्दनीयाः । 'आनन्द-नसभाजने' इत्यमरः । सभाज प्रीतिदर्शनयोरिति चौरादिकात्तव्यः । इति आदिष्टोऽस्मी-त्यनेन संबन्धः । तत् यस्मान्महाराजेनैवमादिष्टं तस्मात् । मया कञ्चुकिना । द्रुततरं अ-तिशयेन द्रुतं सत्वरम् । गन्तव्यमित्येतत्स्वरूपा महाराजस्य दुर्योधनस्य प्रभविष्णुता प्रभ-वनशीलता । प्रपूर्वाद्भवतेः सामर्थ्यार्थकात् 'भ्राज्यलंकृञ् भूसहिरुची' त्यादिना कालापसू-त्रेण ताच्छीलिक इष्णुच् । ततो भावे तल् । पाणिनीयास्तु भुवो लोक इष्णुचं नेच्छन्ति । ततस्तन्मते निरङ्कुशाः कवयः । अहो इति आश्चर्ये । मयाऽपि शीघ्रतरं गन्तव्यमिति य-त्सेयं महाराजस्य प्रभविष्णुता नान्यत्किमपीत्यर्थः । कुत एवमित्याह । यत् यतः जरसा वार्धकेन कर्त्री । जराया जरसन्यतरस्यामिति जरस् । अभिभूतस्य आक्रान्तस्य मम अव-रोधनिवासः राज्ञोऽन्तःपुरे वासः । 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चा-वरोधश्चे' त्यमरः । मर्यादामात्रम् आचारमात्रम् । केवलमाचार एवेत्यर्थः । जरसाऽभि-भूतत्वादन्तः पुरे निवसन्नपि किमपि कार्यं कर्तुं न प्रभवामीत्यर्थः । तथापि यन्मया शीघ्रं गन्तव्यं सोयं महाराजस्य प्रभाव एवेति भावः । स्ववचनमाक्षिपति अथवेति । यद्वा जरां वार्धकं किमिति कस्मादुपालभेय निन्देयम् । उपाङ्पूर्वाल्लभेर्निन्दार्थकात् विधौ लिङ् । कुतो नोपालभ्यते जरेत्याह यत इति । यतो यस्मात् सर्वान्तःपुरिकाणां सर्वेषां जरयाऽभिभूता-नामनभिभूतानां च निखिलानां आन्तःपुरिकाणामन्तःपुरेऽधिकृतानां कञ्चुकिनां । अन्तः पुरशब्दात्तत्र नियुक्त इति ठक् । अन्तः पुरचारिणामिति पाठे अन्तःपुरे चरतां अधिकृता-नामित्यर्थः । अयमेव यो मम स एव । मत्सदृश एवेत्यर्थः । व्यावहारिकोः तन्त्रत्यव्यवहा-रयोग्यः । वैहारिक इति पाठे विहरणमन्तः पुरे संचरणं विहारस्तत्रोचित इत्यर्थः । वेषः नेपथ्यं चेष्टा व्यापारः कर्मेत्यर्थः । उक्तमर्थमुपपादयति तथाहीति ।

(१) आत्मनो वेषचेष्टानिवेदनेन समानाधिकाराणामान्तःपुरिकाणां वेषं चेष्टां च प्रदर्शयति । नोच्चैरिति । मया कर्त्रा । उच्चैः महति चक्षुषि नेत्रे सत्यपि विद्यमानेऽपि ।

( परिक्रम्य दृष्ट्वा । आकाशे । ) विहङ्गिके ! अपि श्वश्रूजनपादवन्दनं कृत्वा प्रति-निवृत्ता भानुमती ? ( कर्णं दत्वा । ) किं कथयसि—आर्य ! एषा भानुमती देवी पत्युः समरविजयाशंसया निर्वर्तितगुरुदेवपादवन्दनाद्यप्रभृत्यारब्धनियमा बालो-

'अल्पे नीचैर्महत्युच्चै' रित्यमरः । अलं पर्याप्तं यथा तथा नेक्षितं न दृष्टम् । अविनयभियेति भावः । श्रुत्वापि अन्तः पुरसंलापादिकमित्यर्थात् । न आकर्णितं न श्रुतम् । श्रुतवताऽप्य-श्रुतवतेव व्यवहृतमित्यर्थः । रहस्योद्भेदे दण्डभियेति भावः।शक्तेन यष्टिं विना व्यवहर्तुं समर्थे-नापि अधिकृता अधिक्रियत इत्यधिकृत् तेन अन्तःपुराधिकृतेनेत्यर्थः । बाहुलकात्कर्मणि क्विप् । अधिकारः कञ्चुकिनः कर्तव्यमिति हेतोः यष्टिः दण्डः समालम्बिता आश्रिता करे धृतेत्यर्थः । सर्वत्र सर्वेषु स्थानेषु स्खलितेषु स्वकर्मभ्रंशेषु दत्तमनसा दत्तं व्यापारितं मनो येन तथाभूतेन उद्धतं अविनीतं यथा तथा न यातं न गतम् । सर्वत्रापि विनीतैव गतिरा-श्रिता अन्यथा हि विनीतवृत्तेः सेवकजनोचितायाः स्खलनं स्यादिति हेतोरिति भावः । तस्मात् सेवया स्वीकृतं स्वीयतां नीतं स्वाधीनीकृतमिति यावत् । जीवितं जीवनं यस्य तस्य मम यत् जरसा वृद्धतया कृतं तत्किंनाम ? न किमपीत्यर्थः । यद्धि जरसा करणीयं तत्सेवयैव कृतं तेनोपस्थितायामपि तस्यां न कश्चित्पूर्वावस्थातो मे विशेष इति भावः । जरया हि सत्यपि आकृत्या महति चक्षुषि दृशः प्रतिहतत्वात्पर्याप्तं नेक्ष्यते श्रवणगतेऽपि शब्दे नाकर्ण्यते श्रोत्रस्य प्रतिहतत्वात् । यष्टिश्च समालम्ब्यते उद्धतं च न गम्यते । सेवके-नाप्येवं पूर्वोक्तहेतुभ्य इति जराया उपालम्भो नोचित इति भावः । अत्र ईक्षितमित्यत्रेक्षितु मिति समालम्बितेत्यत्र समालम्ब्यत इति च पाठो न युक्तः । प्रत्ययक्रमस्य भङ्गापत्तेः । मयेति हि तृतीयान्तेन कर्त्रा सम्बद्धाः सर्वेऽप्यत्र क्रियाशब्दाः । ते च क्तान्ता एवेति आकर्णितं यातमित्येताभ्यां स्फुटीभवति । तेन तथाविधानामेवापरेषां विनिवेशे न क्रमो भज्यते । अन्यथा तु ईक्षितुमिति तुमुन्नन्तं कर्तृपदं चात्र प्रथमान्तं आकर्णितमितिक्तान्तं समालम्ब्यत इति तु लडन्तं पुनश्च गतामिति क्तान्तामिति सर्वथा भग्नः क्रमो भवतीति । भग्नक्रमत्वं च नाम दोष एवेति । एवमुच्चैरित्यादीनामूर्ध्वमित्यादिकमपव्याख्यानमेवे-त्यवबोध्यम् । अत्र प्रथमवाक्ये महतश्चक्षुष ईक्षणहेतोः सत्त्वेऽपीक्षणक्रियायाः पर्याप्त-तयाऽसंघटनाद्विशेषोक्तिर्नामालङ्कारः । 'सति हेतौ फलाभावो विशेषोक्तिः' इति दर्पणोक्तेः । श्रुत्वापि नाकर्णितमित्यत्र च श्रवणे सत्यप्यनाकर्णनमिति विरोधः सेवकतयाऽऽकर्णित-स्यापि रहस्यस्य प्रकाशनादिरूपफलाभावादनाकर्णनसादृश्यमिति परिहार इति विरोधाभासः । 'आभासत्वे विरोधस्य विरोधाभास इष्यत' इति लक्षणात् । तृतीये शक्तस्यापि यष्टिसमा-लम्बनं चतुर्थे च शक्तस्योद्धतगतगमनाभाव इति द्वितयमनुपपद्यमानं अधिकार इतीति स्व-

द्याने तिष्ठतीति। तद्भद्रे! गच्छ त्वमात्मव्यापाराय । यावदहमप्यत्रस्थां देवीं महाराजस्य निवेदयामीति । (परिक्रम्य ।) साधु पतिव्रते! साधु। स्त्रीभावेऽपि वर्तमाना वरं भवती न पुनर्महाराजः । योऽयमुद्यतेषु बलवत्स्वबलवत्सु वा वासुदेवसहायेषु पाण्डुपुत्रेष्वरिष्वद्याप्यन्तःपुरविहारसुखमनुभवति । (विचिन्त्य ।)इदमपरमयथातथं स्वामिनश्चेष्टितम् । कुतः ? (जु)

---

लितेषु दत्तमनसेति च समर्थ्यत इति समर्थनीयस्यार्थस्य समर्थनात्काव्यलिङ्गमलङ्कारः । 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति लक्षणात् । सेवास्वीकृतजीवितस्य मे न किमपि जरसा कृतमिति वस्तुना च सेवाजरसोः सादृश्यसूचनादुपमा व्यज्यते । उक्तपूर्वलक्षणं शार्दूलविक्रीडितं वृत्तम् ।

(जु) परिक्रम्य पादविक्षेपं कृत्वा किंचिद्गत्वेति यावत् । क्रमु पादविक्षेप इत्यतो ल्यप् आकाशे ब्रवीतीतिशेषः। आकाशभाषितत्वादस्य वचनस्य । उक्तं चाकाशभाषितलक्षणं धनञ्जयेन 'किंब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् । ' इति । विहङ्गिकेति चेटयाः संज्ञा । वसन्ते विहङ्गानामुपवर्ण्यत्वेन चेटया विहङ्गिकेति नाम कृतम् । तथा ह्यनुशिष्यते नाट्यविद्भिः संज्ञाकरणम् 'चेटचेटयोस्तथा पुनः । वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ।' इति। अपीति प्रश्ने। श्वश्रूजनः पत्युर्मातृजनः। कर्णं दत्त्वा श्रवणाभिनयार्थं श्रोत्रं व्यापार्य। चेटयाः कथनमनुवदति आर्येति। आर्य कञ्चुकिन् 'आर्यः स्यात्सौविदल्लेऽपी' ति हलायुधः । सौविदल्लः कञ्चुकी पत्युरित्यस्य विजयेन संबन्धः। समरे युद्धे विजयस्य शत्रून्पराजित्य प्राप्यस्योत्कर्षस्याशंसया इच्छया हेतुभूतया । आरब्धनियमेत्यनेन संबन्धः । निर्वर्तितं कृतं गुरूणां देवानां च पादवन्दनं यया तथाभूता। अद्यप्रभृति वर्तमानं दिनं समारभ्य । आरब्धनियमा कृतव्रतारम्भा। बालोद्यान एतत्संज्ञक उपवने । इतीत्यस्य कथयसीत्यनेन संबन्धः । आत्मव्यापाराय आत्मनो व्यापारं कार्यमनुष्ठातुम् । क्रियार्थोपपदस्येति चतुर्थी। यावत्सत्वरं निवेदयामीत्यनेन संबन्धः। महाराजस्य दुर्योधनाय। शेषे षष्ठी । देवीमत्रस्थां निवेदयामि। परिक्रम्य निवेदनार्थं गमनमभिनीय । पतिव्रते साध्वि भानुमति ! स्त्रीभावे स्त्रीत्वे वर्तमानाऽपि स्त्रीभूतापीत्यर्थः। भवती वरं मनागिष्टा । 'अव्ययं तु मनागिष्टे' इति वरशब्दार्थेषु विश्वः। कालोचितक्रियानुष्ठानादिति भावः। न पुनर्महाराजः वरमित्यनुवर्तते न मनागपीष्ट इत्यर्थः। हेतुमाह योऽयमिति। उद्यतेषु संग्रामोद्युक्तेषु। बलवत्स्विति स्वाभिप्रायः। स च पारमार्थिकत्वात्प्रधान इत्यादितो निर्दिष्टः । अबलवत्सु इति दुर्योधनाशयः। वासुदेवः सहायः सहकारी येषां तेषु। एतेन बलवत्त्वाभावेऽपि पाण्डवानां विज-

आशास्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-
स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः ।
प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो
बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात् ॥ २ ॥

---

यस्यावश्यम्भाविता द्योत्यते। आरिषु शत्रुभूतेषु। अन्तःपुरेण लक्षणया अन्तः पुरवर्तिनीभिः स्त्रीभिर्विहारस्य संबन्धि सुखं अनुभवति। अनुचितमेतदिति भावः। अत एव एतदपेक्षयो-चितकारिणी त्वमेव वरमित्युक्तम्। इदं निर्देक्ष्यमाणं अपरं अन्तःपुरविहारादन्यत्। अयथातथं तथोचितप्रकारकं कर्मानतिक्रम्य वर्तते यथातथम्। पदार्थानतिवृत्तावव्ययीभावः। तथा न भवतीति अयथातथं अनुचितम्। अनुचितत्वे कारणमाह। कुत इति।

(२) आशस्त्रेति। आशस्त्रग्रहणात् शस्त्रगहणावधि। आङ्मर्यादावचन इतिकर्म-प्रवचनीयसंज्ञायां पञ्चम्यपाङ्परिभिरिति पञ्चमी। शस्त्रग्रहणमारभ्येत्यर्थः। अकुण्ठपरशोः न कुण्ठः प्रतिहतः परशुः परश्वधो यस्य तथाभूतस्य। शस्त्रग्रहणादारभ्य पराजयमप्राप्त-स्येत्यर्थः। तस्य प्रसिद्धस्य मुनेः परशुरामस्यापि जेता पराभवकर्तेति विक्रमातिशयो द्यो-त्यते। तथाविधोऽपि अयं भीष्मः पाण्डुसूनुभिः पाण्डुपुत्रैः पाण्डवैः कर्तृभिः शरैः करणभूतैः शायितः भूमौ पातित इति यावत्। शरशय्यायां शायित इत्यर्थस्तु पाण्डवानां सामर्थ्यातिशयद्योतनपुरःसरं तापजननोचितत्वं न प्रतिपादयतीत्युपेक्ष्यः। तथाविधः सन् अस्य दुर्योधनस्यतापाय तापं जनयितुं न भवति। किंच अयं दुर्योधनः कर्ता। प्रौढानां प्रगल्भानामनेकेषां धनुर्धराणां धनुषो धारकाणां योधानां विजयेन पराभवेन श्रान्तस्य सं-जातश्रमस्य। एकाकिनः असहायस्य बालस्याप्रगल्भस्य अरातिभिः शत्रुभिर्लूनं छिन्नं धनु-र्यस्य तथाभूतस्य अभिमन्योः अर्जुनपुत्रस्य वधात् प्राणापहरणात् हेतुभूतात्। प्रीतः प्रमुदितः। 'प्रहृष्टः प्रमुदितः प्रीत' इत्यमरः। यः क्वापि पराभवं नप्राप्तस्तस्यापि परशु रामस्य पराजेतुर्भीष्मस्य भूमौ निपातनाच्छत्रूणां पाण्डवानां सामर्थ्यातिशयमवगत्य तदुचितं चेष्टनीयं न पुनरयं तथा चेष्टते तापमपि वा न प्राप्नोति। श्रान्तस्यैकाकिनोऽसमानबलस्या-युधशून्यस्य च बहुभिः संभूय हननं न वीराणां धर्म इति तथानुष्ठाने खेद एवोचितः। एष पुनरभिमन्युं हत्वा नन्दतीति द्वितयमेतदयथातथमेवास्य चेष्टितमिति भावः। प्रौढेत्यादीनि प्रीतेरत्यन्तानुचितत्वं द्योतयन्ति। पूर्वार्धे तापहेतोःसत्त्वेऽपि तापानुत्पाद इति विशेषोक्तिः। उत्तरार्धे चानन्दहेतोरभावेऽपि तदुत्पत्तेरभिधानात् विभावनालङ्कार इति द्वयोः संसृष्टिः। 'विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते' इति विभावनालक्षणम्। शार्दूलविक्रीडितं वृत्तम्।

सर्वथा दैवं नः स्वस्ति करिष्यति । तद्यावदत्रस्थां देवीं महाराजस्य निवेदयामि । ( इति निष्क्रान्तः । ) (जू)

**विष्कम्भकः ।** (जे)

---

( ततः प्रविशत्यासनस्था देवी भानुमती सखी चेटी च । ) (जै)

**सखी**—सहि भाणुमदि ! कीस दाणीं तुमं सिविणअदंसणमेत्तस्स किदे अहिमाणिणो महाराअदुज्जोहणस्स महिसी भविअ एव्वं विअलिअधीरभावा अतिमेत्तं संतप्पासि ? ( सखि भानुमति ! कस्मादिदानीं त्वं स्वप्नदर्शनमात्रस्य कृतेऽभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वैवं विगलितधीरभावातिमात्रं संतप्यसे ? ) (जो)

**चेटी**—भट्टिणि ! सोहणं भणादि सुवअणा । सिविणअन्तो जणो किं ण प्पलवदि ? ( भट्टिनि ! शोभनं भणति सुवदना । स्वपञ्जनः किं न खलु प्रलपति ? ) (जौ)

---

(जू) सर्वथा सर्वप्रकारेण स्वस्ति कल्याणं करिष्यति । तत् यस्मादादिष्टोऽस्मि तस्मात् । यावत्सत्वरम् । निष्क्रान्तः गतः । एतावता भीष्मस्य पतनमभिमन्युवधश्चेति वृत्तः कथांशः अन्तःपुरविहारसुखमनुभवतीत्यादिभिश्च भावी कथांशो निर्दिष्टः ।

(जे) विष्कम्भकः । 'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ।' इत्युक्तलक्षणः समाप्तः । मध्यं चात्र पात्रं कञ्चुकी । यथा चात्र वृत्तवर्तिष्यमाणानां कथांशानां निदर्शनं तथा स्फुटीकृतमेवानुपदमस्माभिः ।

(जै) अङ्कार्थमुपक्षिपति तत इति । ततः कञ्चुकिनिष्क्रमणानन्तरं प्रविशतीति देव्यादिभिः प्रत्येकं संबध्यते । चेटी दासी ।

(जो) सखि भानुमति ! त्वं अभिमानिनः प्रणयवतः 'अभिमानस्त्वहंकृतौ । हिंसायां प्रणये ज्ञाने' इति हैमः । महिषी राज्ञी 'कृताभिषेका महिषी'त्यमरः । भूत्वा स्वप्नदर्शनमात्रस्य कृते केवलस्वप्नदर्शननिमित्तम् । निमित्तभूतेन स्वप्नदर्शनेनेति यावत् । एवं विगलितधीरभावा नष्टधैर्या सती अतिमात्रमत्यन्तं संतप्यसे । त्वयि प्रणयशाली महाराजो दुर्योधनः समापतितामप्यापदं निरासयिष्यतीति नास्ति ते संतापकारणमिति भावः ।

(जौ) भट्टिनि राज्ञि ! 'राजपत्न्यस्तु संभाव्याः सर्वाः परिजनेनतु । भट्टिनी स्वामिनी देवी'ति भरतोक्तेः । खलु हेतौ । यतः स्वपन् निद्रामनुभवन् । किमिति प्रश्ने । न प्रलपति न निरर्थकं वदति । सर्वमपि ब्रवीतीत्यर्थः । स्वप्नगतस्य संलापस्यासंबद्धत्वान्न तापकारणमिति भावः ।

**भानुमती**—हञ्जे! एव्वंण्णेदं । किं णु एदं सिविणअं अदिमेत्तं अकुसलदंसणं मे पडिभादि ? ( हञ्जे एवमिदम् । किन्वयं स्वप्नोऽतिमात्रमकुशलदर्शनो मे प्रतिभाति ? ) (जं)

**सखी**—जइ एव्वं ता कहेदु पिअसही । जेण अह्मे वि पडिट्ठावअन्तीओ पसंसाए देवदासंकित्तणेण अ पडिहरिस्सामो । ( यद्येवं तत्कथयतु प्रियसखी । येनावामपि प्रतिष्ठापयन्त्यौ प्रशंसया देवतासंकीर्तनेन च परिहरिष्यावः ।) (जः)

**चेटी**—देवि ! एव्वंण्णेदं । अकुसलदंसणा वि सिविणआ पंससाए कुसलपरिणामा होन्ति त्ति सुणीअदि । ( देवि ! एवमिदम् । अकुशलदर्शना अपि स्वप्नाः प्रशंसया कुशलपरिणामा भवन्तीति श्रूयते । ) (झ)

**भानुमती**—जइ एव्वं ता कहइस्सम् । अवहिदा होध । ( यद्येवं तत्कथयिष्ये । अवहिते भवतम् । ) (झा)

---

(जं) इदं भवदुक्तमेवम् । तथापि तिशेषः । किंनु किमर्थं नु । नु इति वितर्के । अकुशलममङ्गलसूचकं दर्शनं यस्य तथाभूतः प्रतिभाति । मम पुनरकुशलदर्शनो भाति स्वप्नः (मह उण अकुसलदंसणं पडिभादि सिविणअम्)इत्येव पाठः समीचीनः। पुनः परन्तु स्वप्नः अकुशदर्शनः प्रतिभाति ।

(जः) यदि एवं भवदुक्तप्रकारं स्वप्नस्ते यद्यकुशलदर्शनः प्रतिभाति तदेत्यर्थः प्रियसखी भवती । येन कथनेन । आवां कर्त्र्यौ प्रतिष्ठापयन्त्यौ विरुद्धतया स्थापयन्त्यौ स्वप्नस्य यत्फलं तद्विपरीतफलकत्वेन स्वप्नं परिणमयन्त्यावित्यर्थः । परिहारिष्याव इत्यनेन संबन्धः । प्रतिपूर्वकात्सिष्ठतेर्णिजन्तात् ' लक्षणहत्वोः क्रियाया'इति हेतौ शतृप्रत्ययः । तेन अशुभस्य स्वप्नस्य शुभफलकत्वसंपादनहेतोरित्यर्थः फलति । प्रशंसया स्तोत्रेण देवतानां संकीर्तनेन नामोच्चारेण च। धान्येन धनवानितिवत्तृतीया । प्रशंसालक्षणं देवतासंकीर्तनलक्षणं च परिहारं कारिष्याम इत्यर्थः । यद्वा प्रशंसयेति संकीर्तनेनेति च करणे तृतीया । परिहारश्चाशुभनिरासनोपायः । पाठान्तरं सुगमम्।

(झ) कुशलपरिणामाः शुभफलाः ।

(झा) अवहिते एकाग्रचित्ते ।

(झि) मुहूर्तमल्पकालं 'मुहूर्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च' इति शब्दार्णवः। तिष्ठ तूष्णीं भवेति यावत्। चिन्तां विचारं स्मरणार्थं नाटयति अभिनयति ।

**सखी**—कहेदु पिअसही । ( कथयतु प्रियसखी )

**भानुमती**—मुहुत्तअं चिट्ठ जाव सव्वं सुमरिस्सम्। ( मुहुर्तं तिष्ठ यावत्सर्वं स्मरिष्यामि । ( इति चिन्तां नाटयति । ) (झि)

( ततः प्रविशति दुर्योधनः कञ्चुकी च )

**दुर्योधनः**—सूक्तमिदं कस्यचित् । (झी)

गुप्त्या साक्षान्महानल्पः स्वयमन्येन वा कृतः ।
करोति महतीं प्रीतिमपकारोऽपकारिणाम् ॥ ३ ॥

येनाद्य द्रोणकर्णजयद्रथादिभिर्हतमभिमन्युमुपश्रुत्य समुच्छ्वसितमिव नश्चेतसा । (झु)

**कञ्चुकी**—देव ! नेदमतिदुष्करमाचार्यशस्त्रप्रभावाणाम् । कर्णजयद्रथयोर्वा कात्र श्लाघा ? (झू)

---

(झी) इदं वक्ष्यमाणं कस्यापि सूक्तं शोभनं वचनम् । उक्तं इत्यत्र वचोनपुंसके भावे क्तः ।

(३) किं तत्सूक्तं? तदाह गुप्त्येति । स्वयं अन्येन स्वभिन्नेन वा कर्त्रा गुप्त्या अप्रकाशतया साक्षात्प्रकाशतो वा कृतः महानल्पो वा अपकारिणां शत्रूणाम् । कर्मणि षष्ठी । अपकारः अपायः महतीं प्रीतिं आनन्दं स्वस्येति शेषः करोति जनयति । अत्र वा इति सर्वत्र संबध्यते । सामान्यश्चायमर्थोऽभिमन्युवधस्य समर्थनायोपन्यस्तः । पथ्यावक्त्रं वृत्तम्।

(झु) समर्थनीयं विशेषमाह । येनेति । येन यस्मात् । हेतौ तृतीया । अभिमन्युं द्रोणकर्णजयद्रथादिभिः कर्तृभिः हतं हिंसितं उपश्रुत्य श्रुत्वा । अत्रोपेत्युपसर्गः श्रुधात्वर्थमेवानुवर्तते । त्रिविधा ह्युपसर्गाः । तदाहुः ‘धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते । तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा ।’ इति । नः अस्माकं चेतसा हृदयेन कर्त्रा उच्छसितमिव विकसितमिवेत्युत्प्रेक्षा । आनन्दातिशयाद्विकासः । उच्छ्वसितमिति भावे निष्ठा । उत्पूर्वकस्य श्वसेर्विकासार्थत्वं तु ‘प्रफुल्लोत्फुल्लसंफुल्लोच्छ्वसितानि विजृम्भितम् ।’ इति हैमात् । पूर्वपद्येन सह गद्येनात्रार्थान्तरन्यासोऽलङ्कारः सामान्येन विशेषस्य समर्थनात् । तल्लक्षणं च ‘सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्यं च कारणेनेदं कार्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ।’ इति ।

(झू) एतत् अभिमन्युहननम् कर्म । आचार्यस्य द्रोणस्य शस्त्रप्रभावाणां शस्त्रसामर्थ्यानाम् ‘प्रभावस्तेजसि शक्तावि’ ति हैमः । शेषे षष्ठी । नलोकेति निषेधस्तु कारकषष्ठी

**राजा**—विनयंधर ! किमाह भवान्? एको बहुभिर्बालो लूनशरासनश्च निहत इत्यत्र का श्लाघा कुरुपुङ्गवानामिति । मूढ ! पश्य । (ङे)

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम् ।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥ ४ ॥

**कञ्चुकी**—(सवैलक्ष्यम् ।) देव ! न ममायं संकल्पः । किं तु वः पौरुषप्रतीघातोऽस्माभिरनालोकितपूर्व इत्यत एवं विज्ञापयामि । (ङै)

---

विषयः । प्रभावस्यानेकविधत्वमपेक्ष्य बहुत्वेन निर्देशः । अति दुष्करं अतिशयेन दुष्करं न। विनैव प्रयासं कर्तुंशक्यमिति भावः । तेनानायाससाध्यमेव कर्मेदमनुष्ठितमाचार्येणेति नैष श्लाघितुं योग्य इति भावः । दुर्योधनेन द्रोणकर्णजयद्रथादिभिरित्युक्तं तत्रादिमस्य श्लाघां निरस्यान्ययोरपि निरस्यति । कर्णेति । श्लाघा प्रशंसा का न कापीत्यर्थः । तयोरपि नात्र कर्मणि प्रशंसार्हत्वमिति भावः । एकस्य हि बहुभिर्हननं न श्लाघायै प्रकल्पते वीरधर्मविरुद्धत्वादिति ।

(ङे) विनयन्धर इति कञ्चुकिनो नाम । किमाह किं ब्रवीति । ब्रुवो लटि ब्रुवः पञ्चानामिति णलाहश्च।एको लूनशरासनः विछिन्नधन्वा च बाल. बहुभिरित्यनेनायुक्तत्वं गम्यते। अत्र विषये कुरुपुङ्गवानां कुरुषु श्रेष्ठानाम् । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ।' इत्यमरः । इतीत्याहेत्यनेन संबन्धः । मूढ अनभिज्ञ ।

(४) इत्थमेव पाण्डवैरपि चेष्टितमिति प्रदर्शयन्नात्मनो दोषाभावं समर्थयति । हत इति । शिखण्डिनं नाम द्रुपदपुत्रं पुरस्कृत्य अग्रे कृत्वा । पुरोऽव्ययमिति गतिसंज्ञायां कुगतिप्रादय इति समासः । समासेऽनञ् पूर्वे इतिक्त्वो ल्यप् । जरति वृद्धे 'जीर्णो जीनो जरन्नपी' ति वृद्धपर्यायेष्वमरः । गाङ्गेये गङ्गायाः ( भागीरथ्याः ) पुत्रे भीष्मे हते सति पाण्डवैरित्यर्थात् । पाण्डुपुत्राणां पाण्डवानां या श्लाघा प्रशंसा सैव अस्माकं कौरवाणां अभिमन्युहननेनेत्यर्थात् भविष्यति । यथा शत्रुभिरस्मासु चेष्टितं तथैवाऽस्माभिरपि तेष्विति न वयं दोषभागिन इति भावः । अत्र पाण्डवश्लाघायाः कौरवगामित्वस्यासंभवात्तत्सादृश्यं प्रतीयमानं कौरवपाण्डवश्लाघयोर्बिम्बानुबिम्बभावं बोधयतीति निदर्शनालङ्कारः । तदुक्तं दर्पणे 'संभवन्वस्तुसंबन्धोऽसंभवन्वाऽपि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शने' ति । श्लाघयोः सादृश्यवर्णनाच्चात्र लेशाख्यं नाटकाङ्गम् । तदप्युक्तं तत्रैव 'स लेशो भण्यते वाक्यं यत्सादृश्यपुरःसरम् ।' इति ।

**राजा**—एवमिदम् । (ञो)

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम् । ॥ ५ ॥

**कञ्चुकी**—( कर्णौ पिधाय । सभयम् । ) शान्तं पापम् । प्रतिहतममङ्गलम् । (ञौ)

**राजा**—विनयंधर ! किं मयोक्तम् ?

---

(ञे) सवैलक्ष्यं साश्चर्यम् । 'विलक्षो विस्मयान्वित' इत्यमरः । लज्जास्थानेऽपि श्लाघासंदर्शनादाश्चर्यम् । अयं भवतोत्प्रेक्ष्यमाणोऽयुक्तकारित्वं कौरवाणामित्येवंरूपः संकल्पो मानसो व्यापारः आभिप्राय इति यावत् । तत्कथमेवं प्रोच्यत इत्याह । किन्त्विति वः युष्माकम् पौरुषस्य तेजसः प्रतीघातो निरोधः । 'पौरुषं पुरुषस्य स्याद्भावेकर्मणि तेजसि' इति मेदिनी । प्रतीघातशब्दे च 'उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः । अनालोकितपूर्वः पूर्वं न अवलोकितो दृष्टः । अतः अदृष्टपूर्वस्य दर्शनात् एवं पूर्वोक्तं विज्ञापयामि सविनयं ब्रवीमीत्यर्थः।आस्तां नाम भीष्मवधे पाण्डवानां प्रवृत्तिर्भवन्तस्तु न हि विना पौरुषं चेष्टन्ते । न चायं पौरुषस्य पन्था इत्यत एवमुक्तमिति भावः ।

(ञो) एवमिदं यथा त्वयोक्तं तथैव।नास्माकं कदापि पौरुषप्रतीघातो भवतीत्यर्थः।

(५) भाविन्यपि पौरुषप्रतिघाताभावं समर्थयितुकामो वदति । सहेति । पाण्डुसुतः पाण्डवो युधिष्ठिरः कर्ता न चिरादविलम्बेन । नेति पृथगव्ययं न तु समासैकदेशः । सहभृत्यगणं भृत्यानां पोष्याणां गणेन सह वर्तमानं, सबान्धवं बान्धवैः सह वर्तमानम् । 'वोपसर्जनस्ये'ति वैकल्पिकः सहस्य सभावस्तेनोभयथा रूपम् । सहमित्रं मित्रसहितं ससुतंपुत्रसहितं सहानुजं कनिष्ठभ्रातृसहितं सुयोधनं संयुगे युद्धे 'संयत्कलिः संयुगम्' इति युद्धपर्यायेषु हलायुधः । स्वबलेन स्वसामर्थ्येन निहन्ति हनिष्यतीत्यर्थः । वर्तमानसामीप्ये भविष्यति लट् । अत्र पाण्डुसुतं सुयोधन इति वक्तव्ये दर्पान्धतया विपर्ययेण पठितम् । तत एव चात्र भ्रंशो नाम नाटकाङ्गम् । तदुक्तं विश्वनाथेन ' दृप्तादीनां भवेद्भ्रंशो वाच्यादन्यपरं वचः । ' इति । सुन्दरीवृत्तम् 'विषमे ससजा गुरुः समे सभरालगौ यदि सुन्दरी तदा । ' इति लक्षणात् ।

(ञौ) कर्णौ पिधाय करतलाभ्यामाच्छाद्य स्वामिमरणश्रवणस्यानाकर्णनीयत्वात् । सभयं भयेन सहितं यथातथा । भीतिश्चाचिरात्स्वामिनो मरणमित्यवधारणात् । शान्तं पापं

**कञ्चुकी—**

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।

स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतं सुयोधनः ॥ ६ ॥

एतद्विपरीतमभिहितं देवेन । (शं)

**राजा**—विनयंधर ! अद्य खलु भानुमती यथापूर्वं मामनामन्त्र्य वासभवनात्प्रातरेव निष्क्रान्तेति व्याक्षिप्तं मे मनः । तदादेशय तमुद्देशं यत्रस्था भानुमती । (ज्ञः)

**कञ्चुकी**—इत इतो देवः । (ञ)

( उभौ परिक्रामतः । )

**कञ्चुकी**—( पुरोऽवलोक्य । समन्ततो गन्धमाघ्राय । ) देव ! पश्य पश्य । एतत्तुहिनकणशिशिरसमीरणोद्वेल्लितबन्धच्युतशेफालिकाविरचितकुसुमप्रकरमीषदालोहितमुग्धवधूकपोलपाटललोध्रप्रसूनविजितश्यामलतासौभाग्यमुन्मीलितबहुलकुन्दकुसुमसुरभिशीतलं प्रभातकालरमणीयमग्रतस्ते बालोद्यानम् । तदवलोकयतु देवः । तथाहि । (ञा)

---

पापं दुर्घटनारूपं शान्तं भवत्विति शेषः । अमङ्गलं च प्रतिहतं भवत्विति शेषः । अवक्तव्यस्य मरणादेः श्रवणे प्रयुज्यत एतद्द्वितयमन्यतरद्वा ।

(ज्ञं) एतद्विपरीतं एतस्य विरुद्धम् । पाण्डुसुतं सुयोधन इति वक्तव्ये पाण्डुसुतः सुयोधनमिति कर्तृकर्मव्यत्यासेनोक्तमित्यर्थः ।

(ज्ञः) यथापूर्वम् । अत्र पूर्वपदं पूर्वरीतिपरम् पूर्वां रीतिमनतिक्रम्य मामनामन्त्र्य अपृष्ट्वा वासभवनात् शयनगृहात् 'उशन्ति शयनस्थानं वासागारमि'ति हलायुधः । निष्क्रान्ता गता । अनामन्त्र्येत्यत्र विद्यमानस्य नञो निष्क्रमणक्रियया संबन्धः । यथापूर्वमामन्त्र्य न निष्क्रान्तेत्यर्थः । अन्यथा तु अनामन्त्रणस्य पूर्वरीत्यनुरोधित्वापत्त्या मनसो व्याक्षेपासंभवः । मनः व्याक्षिप्तमस्वस्थीभूतम् । आदेशय कथय । उद्देशं प्रदेशम् ।

(ञ) देवः आगच्छत्विति शेषः ।

प्रालेयमिश्रमकरन्दकरालकोशैः
पुष्पैः समं निपतिता रजनीप्रबुद्धैः ।
अर्कांशुभिन्नमुकुलोदरसान्द्रगन्ध-
संसूचितानि कमलान्यलयः पतन्ति ॥ ७ ॥

---

(आ) समन्ततः परितः । आघ्राय घ्राणेनोपादाय । बालोद्यानं नामोपवनम् । तद्विशेषयति । तुहिनेत्यादि । तुहिनस्य हिमस्य कणैः सूक्ष्मांशैः शिशिरेण शीतलेन समीरणेन वायुना उद्वेल्लितानि आकंपितानि यानि बन्धनानि वृन्तानि तेभ्यश्च्युता गलिता याः शेफालिका निर्गुण्डीकुसुमानि ताभिर्विरचितः कृतः कुसुमप्रकरः पुष्पविक्षेपो यत्र तत् । 'तुषारस्तुहिनं हिमम्' 'लवलेशकणाणवः' 'तुषारः शीतलः शीतः' 'वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुतं' इति चामरः । 'बन्धनं पुष्पवृन्त'मिति महेश्वरीयव्याख्यां श्रत्यः । शेफालिकेत्यत्र पुष्पमूलेषु बहुलमिति पुष्पार्थे लुप् । वृन्तबन्धुरशेफालिकेतिपाठे । तुहिनकणशिशिरेण समीरणेनोद्वेल्लितानि वृन्तानि कुसुमबन्धनानि यासां तथाभूता या बन्धुरा रम्याः नम्रा वा शेफालिकास्ताभिर्विरचितः कृतः कुसुमानां प्रकरो विक्षेपो यत्रेत्यर्थः । अयमेव च पाठः सरलमनोरमः । बन्धुरो रम्यनम्रयोरिति हैमः । ईषत् आलोहितौ आरक्तौ यौ मुग्धवधूनां सुन्दरीणां कपोलौ तद्वत्पाटलैः श्वेतरक्तैर्लोध्रस्य वृक्षविशेषस्य प्रसूनैः पुष्पैः विजितं निर्जितमधःकृतमिति यावत् श्यामलताया वल्लीविशेषस्य सौभाग्यं सौन्दर्यं यत्र 'मुग्धस्तु सुन्दरे मूढे' इति मेदिनी । 'स्त्रीवधूर्योषिता रामे'ति त्रिकाण्डशेषः । 'श्वेतरक्तस्तु पाटल' इत्यमरः । सौभाग्यं इत्यत्र भावे ष्यञि हृद्भगसिन्ध्वन्तेभ्य इत्युभयपदवृद्धिः । उन्मीलितैर्विकसितैर्बहुलैः कुन्दकुसुमैः कुन्दपुष्पैः सुरभि सुगन्धि शीतलं च । प्रभातकालेन रमणीयं रम्यम् ।

(७) रमणीयतामुपपादयति । तथाहीति । रजनीप्रबुद्धैः रात्रौ विकसितैः प्रालेयेन हिमेन मिश्रो युतो यो मकरन्दः पुष्परसस्तेन कराला दन्तुरा नतोन्नता इत्यर्थः कोशाः पात्रायिता मध्यप्रदेशा येषां तैः कुसुमैः पुष्पैः समं सह निपतिता भूमौ पतिताः । अलयो भ्रमराः कर्तारः । अर्कस्य सूर्यस्यांशुभिः किरणैः भिन्ना विकसिता ये मुकुलाः कलिकाः तेषामुदरस्य अन्तर्भागस्य संबन्धिना गन्धेन सूचितानि ज्ञापितानि कमलानि कर्मभूतानि गच्छन्ति । गमनार्थकत्वाचास्य सकर्मकता । आनिपातमपि पोषिता लुब्धाः क्षीणमाश्रयमपहायान्यत्र गच्छन्तीति भावः । करालो दन्तुरे तुङ्गे इति मेदिनी । 'प्रालेयं मिहिके'ति हिमपर्यायेष्वमरः । प्रबुद्धोज्जृम्भफुल्लानी'ति हैमः । 'भिन्नमन्यार्थवचने संगते दारिते स्फुटे (विकसिते)' इति विश्वः । अत्र क्षीणाश्रयत्यागपूर्वकं संपन्नसमाश्रयणरूपकार्येण भ्रमरेष्वकृत-

**राजा**—(समन्तादवलोक्य।) विनयंधर ! इदमपरममुष्मिन्नुषसि रमणीयतरम् । पश्य । (त्रि)

जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टै-
हस्तैर्भानोर्नृपतय इव स्पृश्यमाना विबुद्धाः ।
स्त्रीभिः सार्धं घनपरिमलस्तोकलक्ष्याङ्गरागा
मुञ्चन्त्येते विकचनलिनीगर्भशय्यां द्विरेफाः ॥ ८ ॥

**कञ्चुकी**—देव नन्वेषा देवी सुवदनया तरलिकया च सहोपविष्टा तिष्ठति । तदुपसर्पतु देवः । (त्री)

---

व्यवहारारोपात्समासोक्तिः । तदुक्तं दर्पणे 'समासोक्तिः समैर्यत्रकार्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥' इति । वसन्ततिलकाख्यं वृत्तम् ॥

(त्रि) उषसि प्रभाते । 'उषः प्रत्युषसी अपी'ति प्रभातपर्यायेष्वमरः ।

(८) जृम्भेति । एते पुरो दृश्यमानाः जृम्भाया विकाशस्यारम्भेण प्रविततताः विस्तृता ये दलानां कुसुमपत्राणां उपान्ताः प्रान्तप्रदेशास्त एव जालानि गवाक्षास्तैः प्रविष्टाः तैः । 'जृम्भाविकाशजृम्भणयो' रिति मेदिनी । 'जालं समूह आनायगवाक्षक्षारकेष्वपी'त्यमरः । भानोः सूर्यस्य हस्तैः किरणैः । करपर्यायत्वाद्धस्तस्य किरणवाचित्वम् । उस्रैरितिपाठस्तु समीचीनः । 'किरणोस्रमयूखांशु' इत्यमरः । भाभिरिति पाठस्तु त्याज्यः । कथमप्यस्य पुंस्त्वसिद्धावपि कविभिरनादृततया भाति पद्मः सरोवर इत्यादिवदप्रयुक्तताख्यदोषापत्तेः। स्पृश्यमानाः सन्तो विबुद्धा जागरिताः । घनः परिमलो गन्धो यस्य तथाभूतः स्तोकं नैशिकविहारवशेन लुप्तप्रायत्वात् ईषल्लक्ष्यो दृष्टिविषयश्चाङ्गरागो विलेपनं येषां तथाभूताः । 'गन्धमात्रे परिमलः' इति धरणिः । 'अङ्गरागो विलेपनम्' इति हैमः । द्विरेफा भ्रमराः कर्तारो नृपतयो राजान इव स्त्रीभिः सार्धं सह । विकचाया विकसिताया नलिन्या गर्भाः अन्तर्भागा एव शय्या तां मुञ्चन्ति त्यजन्ति । । राजानोऽपि जालप्रविष्टैः सूर्यकिरणैः स्पृश्यमाना घनपरिमलस्तोकलक्ष्याङ्गरागाश्च स्त्रीभिः सार्धं शय्यां विजहतीति । उपमालङ्कारः । मन्दाक्रान्तावृत्तम् ।

(त्री) नन्विति स्मरणे । देवी राज्ञी भानुमती । सुवदनाऽस्याः सखी । तरलिका नु चेटी । तिष्ठति विद्यते । उपसर्पतु समीपं गच्छतु ।

**राजा**—( दृष्ट्वा । ) आर्य विनयंधर ! गच्छ त्वं साङ्ग्रामिकं मे रथमुप-कल्पयितुम् । अहमप्येष देवीं दृष्ट्वानुपदमागत एव । (ॠु)

**कञ्चुकी**—यथाज्ञापयति देवः ( इति निष्क्रान्तः । ) (ॠू)

**सखी**—पिअसही ! अवि सुमरिदं तुए ? ( प्रियसखि ! अपि स्मृतं त्वया ? ) (ॠे)

**भानुमती**—सहि ! सुमरिदम् । अज्ज किल पमदवणे आसीणाए मह अग्गदो एव्व दिव्वरूविणा णउलेण अहिसदं वावादिदम् ( सखि ! स्मृतम् । अद्य किल प्रमदवन आसीनाया ममाग्रत एव दिव्यरूपिणा नकुलेनाहिशतं व्यापादितम् ) (ॠै)

**उभे**—( आत्मगतम् । ) सन्तं पावम् । पडिहदं अमङ्गलम् । ( प्रकाशम् । ) तदो तदो । ( शान्तं पापम् । प्रतिहतममङ्गलम् । ततस्ततः । ) (ॠो)

**भानुमती**—अदिसंदावोवग्गहिअहिअआए विसुमरिदं मए । ता पुणो वि

---

(ॠु) आर्य कञ्चुकिन् । 'आर्यः साधौ सौविदल्ले' इति विश्वः । सांग्रामिकं संग्रामोपयुक्तम् । उपकल्पयितुं सज्जीकर्तुम् । अनुपदं पश्चात् 'अनुगेऽनुपदान्वक्षे' इति हेमः । सत्वरमिति यावत् ।

(ॠू) तथा करोमीति शेषः ।

(ॠे) अपीति प्रश्ने ।

(ॠै) किल वाक्यालङ्कारे । प्रमदवने उपवनविशेषे 'विज्ञेयं प्रमदनं नृपस्तु यस्मि-न् शुद्धान्तैः सह रमते गृहोपकण्ठे ।' इति हलायुधः । आसीनायाः उपविष्टायाः । आस उपवेशन इत्यतो लटः शानचि ईदास इति ईत् । अग्रतः अग्रे सप्तम्यर्थे तसुः । दिव्यरूपिणा दिव्याकृतिमता । नकुलेन मुंगुस इतिख्यातेन जन्तुना कर्त्रा । अहिशतं सर्पशतम् । व्यापादितं घातितम् व्याङ् पूर्वात्पदेर्णिजन्तान्निष्ठा । व्याङ्पूर्वश्च पद्यतिर्मरणार्थः ।

(ॠो) अत्रापवार्येत्यपपाठः । रहस्यकथनाभावात् । तत्र च सत्यात्मगतमिति व्यर्थम् । यद्धि अपवारितं भवति नैतदात्मगतम् । तथाह्युक्तं दर्पणकृता 'तद्भवेदपवारितम् । रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते ।' इति । आत्मगतं तु 'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।' इति लक्षितं तेनैव । प्रकाशं सर्वश्राव्यं यथा तथा । 'सर्वश्राव्यं प्रकाशं स्यात्' इति विश्वनाथः ।

सुमरिअ कहइस्सम् (अतिसंतापोपगृहीतहृदयया विस्मृतं मया । तत्पुनरपि स्मृत्वा कथयिष्ये ।) (औ)

**राजा**—अहो ! देवी भानुमती सुवदनातरलिकाभ्यां सह किमपि मन्त्रयमाणा तिष्ठति । भवतु । अनेन लताजालेनान्तरितः शृणोमि तावदासां विश्रब्धालापम् । (इति तथा स्थितः ) (अं)

**सखी**—सहि ! अलं संदावेण । कहेदु पिअसही । (सखि! अलं संतापेन । कथयतु प्रियसखी । )

**राजा**—किं नु खल्वस्याः संतापकारणम् । अथवानामन्त्र्य मामियमद्य वासभवनान्निष्क्रान्तेति समर्थित एवास्या मया कोपः । अयि भानुमति ! अविषयः खलु दुर्योधनो भवत्याः कोपस्य । (अः)

किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया
निद्राच्छेदविवर्तनेष्वभिमुखं नाद्यासि संभाविता ।
अन्यस्त्रीजनसंकथालघुरहं स्वप्ने त्वया लक्षितो
दोषं पश्यसि कं प्रिये परिजनोपालम्भयोग्ये मयि ? ॥ ९ ॥

---

(औ) अतिसंतापेनोपगृहीतमाक्रान्तं हृदयं यस्यास्तथाभूतया । हेतुगर्भं विशेषणमेतत् । विस्मरणे ह्येष हेतुः । अतिसंतापोद्विग्नहृदययेति पाठे । अतिसंतापेन दुःस्वप्नस्मरणजन्येनोद्विग्नं चलितं अस्थिरतामाप्तमित्यर्थः । हृदयं यस्यास्तथाभूतया । ओविजी भयचलनयोरित्यतो निष्ठा । ओदितश्चेति निष्ठातस्य नः ।

(अं) मन्त्रयमाणा गूढं संलपन्ती । मन्त्रिगुप्तपरिभाषण इत्यतः शानच् । लताजालेन वल्लीसमूहेन । अन्तरितो व्यवहितः । तावत्साकल्येन । विस्रब्धालापं विस्रब्धः परस्परविश्वासयुक्तो य आलाप आभाषणं तम् ।

(अः) अस्या भानुमत्याः संतापकारणं किं नुखल्विति वितर्के स्यात् भवेत् । अथवेति पक्षान्तरे। अनामन्त्र्य अपृष्ट्वा। इति हेतोः अस्याः कोपः मया कर्त्रा समर्थितः संभावितः। यदसावनापृच्छ्यैव मां गतवती तेन मयि कुपितैवासाविति मया तर्कितमिति भावः । अनुपपन्नं हि विना कोपमस्या अनामन्त्र्य गमनम् । खलु निश्चयेन । अविषयोऽपात्रमिति यावत् ।

(विचिन्त्य।) अथवा। (ट)

इयमस्मदुपाश्रयैकचित्ता
मनसा प्रेमनिबद्धमत्सरेण।
नियतं कुपितातिवल्लभत्वा-
त्स्वयमुत्प्रेक्ष्य ममापराधलेशम्॥ १०॥

तथापि शृणुमस्तावत्किं नु वक्ष्यतीति। (टा)

---

(९) कोपस्याविषयतामात्मनः समर्थयति। किमिति। हे प्रिये मया प्रमादादनवधानादपि तव कण्ठे भुजलतायाः सुकुमारतया लतासदृशस्यात्मनो भुजस्य पाशो बन्धः शिथिलीकृतः किं? प्रमादादपि न शिथिलीकृत इत्यर्थः। निद्रायाः छेदेऽवान्तरविरतौ यानि विवर्तनानि पार्श्वपरिवर्तनानि तेषु अभिमुखं संमुखं यथा तथा अद्य मयेति शेषः न संभाविता संमानितासि। प्रश्ने काकुः। परिवृत्तपार्श्वापि मया संमुखीभूय संभावितासीति भावः। त्वया अहं अन्येन त्वदितरेण स्त्रीजनेन सह या संकथा संलापः तया लघुः क्षुद्रतां प्राप्तः स्वप्नेऽपि लक्षितो दृष्टः। प्रश्ने काकुः। स्वप्नेऽपि ते नैवंविधोऽहं साक्षाद्भूतो मया हि नान्यया संलपितमिति भावः। 'अन्योन्योक्तिः संलापसंकथे' इति हैमः। तत् परिजनोपालम्भयोग्ये परिजनस्य भवद्भृत्यस्य कर्मभूतस्य य उपालम्भो भर्त्सनं तद्योग्ये दासभूत इत्यर्थः मयि कं दोषं पश्यसि। न कोपि मयि दोष इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ट) विचिन्त्य विचार्य। अपराधस्यादर्शनेन तदुन्नयनार्थं विचारः। अथवा किं वा।

(१०) कोपमुपपादयति। इयमिति। प्रेम्णा निबद्धो रचितो मत्सरो यत्र तथाभूतेन मनसा उपलक्षिता। उपलक्षणे तृतीया। अवश्यं हि प्रेम्णि सुलभं मात्सर्यं भवति। वयमेव उपाश्रय आश्रयस्थानं यस्य तथाभूतमेकं श्रेष्ठं चित्तं यस्यास्तथाभूता। 'एके मुख्यान्यकेवला' इत्यमरः। अतिवल्लभत्वात् अतिप्रियत्वात मम अपराधलेशं अपराधलवं स्तोकमपराधमित्यर्थः। बहोः सर्वथाऽसंभवादिति भावः। नियतं नूनं स्वयं उत्प्रेक्ष्य कल्पनामात्रेण संभाव्य कुपिता क्रुद्धा। आशङ्कते हि प्रणयातिशयः प्रणयिनोऽपराधमिति भावः। औपच्छन्दसिकं वृत्तम्। 'तत्रैवा (वैतालीये) न्ते धिके गुरौ स्यादौपच्छन्दसिकं कवीन्द्रहृद्यम्।' इति लक्षणात्। वैतालीयलक्षणं तु 'षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः। न समाऽत्र पराश्रिता कला वैतालीयेन्ते रलौ गुरुः।' इति। कला मात्रा।

(टा) तथापि अपराधस्य वस्तुतोऽभावेऽपि।

**भानुमती**—तदो अहं तस्स अदिसइददिव्वरूविणो णउलस्स दंसणेण उच्छुआ जादा हिदहिअआ अ । तदो उज्झिअ तं आसणट्ठाणं लदामण्डवं पविसिदुं आरद्धा । (ततोऽहं तस्यातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च । तत उज्झित्वा तदासनस्थानं लतामण्डपं प्रवेष्टुमारब्धा ।) (टि)

**राजा**—(सवैलक्ष्यम् ।) किं नामातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च ? तत्किमनया पापया माद्रीसुतानुरक्तया वयमेवं विप्रलब्धाः ? (सोत्प्रेक्षम् 'इयमस्मत्-' (२।१०) इति पठित्वा ।)) मूढ दुर्योधन ! कुलटाविप्रलभ्यमानमात्मानं बहु मन्यमानोऽधुना किं वक्ष्यसि ? ('किं कण्ठे-' (२।९) इत्यादि पठित्वा । दिशोऽवलोक्य ।) अहो, एतदर्थमेवास्याः प्रातरेव विविक्तस्थानाभिलाषः सखीजनसंकथासु च पक्षपातः । दुर्योधनस्तु मोहादविज्ञातबन्धकीहृदयसारः क्वापि परिभ्रान्तः । आः पापे! मत्परिग्रहपांसनि ! (टी)

---

(टि) अतिशयिता अतिक्रान्ता अधःकृता इति यावत् दिव्या दिवि भवाः प्राणिनो येन तथाविधेन रूपेण युक्तस्य । अत इनि ठनाविति मत्वर्थ इनिः । उत्सुका उत्कण्ठिता 'औत्सुक्यं रणरणकोत्कण्ठे' इति हैमः । विलम्बासहेति वा 'कालाक्षमत्वमौत्सुक्यम्' इति दशरूपकम् । हृतहृदया तेनेत्यर्थात् । तत् पूर्वमधिष्ठितं आसनं उज्झित्वा त्यक्त्वा ।

(टी) सवैलक्ष्यं साश्चर्यम् । किं नाम ब्रवीतीति शेषः । वचनमनुवदति अतिशयितेत्यादि । तत् यत एवं वदति तस्मात् । पापया क्रूरया 'नृशंसो घातुकः क्रूरः पाप' इत्यमरः । यद्वा पापविशिष्टया । अर्शआदित्वादच् । ततष्टाप् । माद्रीसुते नकुलनाम्नि पाण्डवे अनुरक्तया कृतानुरागया वयं 'अस्मदो द्वयोश्चे' ति बहुवचनम् । एवं विप्रलब्धा वञ्चिताः? । कुलटया स्वैरिण्या विप्रलभ्यमानं प्रतार्यमाणं । 'कुलटेत्वरी । स्वैरिणी' त्यमरः। अधुना इदानीं प्रतारणमिदमितिज्ञानोत्पत्तिकाले। अहो इति धिगर्थे विषादवाचकं वा 'अहो धिगर्थे शोके च करुणार्थविषादयोरि' ति मेदिनी । एतदर्थं नकुलसमागमार्थम्। विविक्तस्थानाभिलषः एकान्तस्थानेच्छा । सखीजनसंकथासु वयस्याजनैः संलापेषु पक्षपातोऽनुरागः । मोहादज्ञानात् न विज्ञातो बन्धक्याः कुलटाया भानुमत्या हृदयसारः तद्दयतत्त्वमभिप्राय इति यावत् येन तथाभूतः । 'बन्धकी कुलटेत्वरी' त्यमरः । क्वापि अपारमार्थिके भाव इत्यर्थः । परिभ्रान्तः परिभ्रमं भ्रान्तिं प्राप्तवान् । अभिप्रायापरिज्ञानात्कृतकमपि प्रेम पारमार्थिकममंस्तेति भावः । आः इति कोपे । मत्परिग्रहपांसनि मत्कृतस्याङ्गीकरणस्य दूषिके

तद्भीरुत्वं तव मम पुरः साहसानीदृशानि
श्लाघा सास्मद्वपुषि विनयव्युत्क्रमेऽप्येष रागः ।
तच्चौदार्यं मयि जडमतौ चापले कोऽपि पन्थाः
ख्याते तस्मिन्वितमसि कुले जन्म कौलीनमेतत् ॥ ११ ॥

**सखी**—तदो तदो । (ततस्ततः ।)

**भानुमती**—तदो सोवि मं अणुसरन्तो एव्व लदामण्डवं पविट्ठो । (ततः सोऽपि मामनुसरन्नेव लतामण्डपं प्रविष्टः ।)

**राजा**—अहो, कुलटोचितमस्याः पापाया अशालीनत्वम् । (ट)

यस्मिंश्चिरप्रणयनिर्भरबद्धभाव-
मावेदितो रहसि मत्सुरतोपभोगः ।
तत्रैव दुश्चरितमद्य निवेदयन्ती
ह्रीणासि पापहृदये ! न सखीजनेऽस्मिन् ॥ १२ ॥

---

'दूषकपांसनौ' इति त्रिकाण्डशेषः । पांशुल इतिपाठे मत्परिग्रहश्चासौ पांशुला स्वैरिणी चेत्यर्थः । अत्र परिग्रहः पत्नी 'परिग्रहः परिजने पत्न्यां' इति मेदिनी ।

(११) भानुमत्या त्दृदयस्याविज्ञातत्वद्योतनाय तस्या आचरितस्य परस्परविरुद्धत्व-मुपवर्णयति । तदिति । मम पुरः अग्रे तन्मयाऽनुभूतं तव भीरुत्वं भयशीलत्वम्।मत्परोक्षे तु ईदृशानि एवंविधानि परपुरुषानुसरणादीनि साहसानि अविमृष्य कृतानि दुराचरितानि । 'साहसं तु दमे दुष्कृतकर्मणि । अविमृष्यकृतौ' इति हैमः । सा मयाऽनुभूता अस्मद्वपुषि मच्छरीरविषये श्लाघा प्रशंसा । न हीदृशं जगत्यपरं मे प्रियमित्यादिरूपा । अपीति चार्थे । किं चेत्यर्थः । एषः संप्रत्यवेक्ष्यमाणः विनयव्युत्क्रमे इंद्रियजयातिक्रमे व्यभिचार इत्यर्थः रागः प्रणयः । जडमतौ मूढबुद्धौ मयि मद्विषये तत्पूर्वमनुभूतं तवेतिशेषः । औदार्यं दाक्षि-ण्यं सरलतेत्यर्थः । अयं च चापले चपलतायां दुराचरित इत्यर्थः । कोऽपि अनिर्वचनीयः पन्थाः प्रभाते विविक्तस्थानगमनादिरूपो मार्गः । तस्मिन्ख्याते प्रसिद्धे वितमसि निर्मले कुले वंशे जन्म तवेति शेषः।एतत् कौलीनं दुष्कर्म 'कौलीनं गुह्यजन्ययोः । कुकर्मणि' इति मेदिनी । सर्वथा परस्परविरुद्धमविषह्यमिदं तवाचरितमिति भावः । मन्दाक्रान्तावृत्तम् ।

(ट) कुलटोचितं स्वैरिणीयोग्यम् । अशालीनत्वं धाष्टर्यम् । परपुरुषोपभोगनिवेद-नरूपं निर्लज्जत्वमित्यर्थः । 'स्यादधृष्टस्तु शालीनः । ' इत्यमरः ।

**उभे**—तदो तदो । ( ततस्ततः । )

**भानुमती**—तदो तेण सगव्वं पसारिअकरेण अवहरिदं मे त्थणंसुअम् । ( ततस्तेन सगर्वं प्रसारितकरेणापहृतं मे स्तनांशुकम् । ) (ट)

**राजा**—( सक्रोधम् । ) अलमिदानीमतःपरमाकर्णनेन । भवतु तावत्तस्य परवनितावस्कन्दनप्रगल्भस्य माद्रीसुतहतकस्य जीवितमपहरामि । ( किंचिद्गत्वा । विचिन्त्य । ) अथवा इयमेव तावत्पापशीला प्रथममनुशासनीया । ( इति निवर्तते । ) (टे)

**उभे**—तदो तदो । ( ततस्ततः । )

---

(१२) नैर्लज्यमेव विस्पष्टयति । यस्मिन्निति । हे पापहृदये पापयुक्तान्तःकरणे भानुमति । यस्मिन् सखीजने त्वयेतिशेषः । चिरप्रणयेन चिरकालिकेन विश्वासेन निर्भरं अतिमात्रं बद्धो ग्रथितः प्रादुष्कृत इतियावत् भावः स्वीय आशयो यस्मिन्कर्मणि तद्यथा-तथा । 'प्रणयः प्रेम्णि विस्रम्भे' इति । 'भावः स्वभावेऽभिप्राये' इति च विश्वः । मत्सुरतोपभोग आवेदितः कथितः । सखीजने विश्वासस्य चिरप्ररूढत्वात्सुस्पष्टतयाऽऽत्मनोऽभिप्रायमाविष्कृत्य त्वया मत्सुरतोपभोगः कथित इति भावः । तत्रैव तस्मिन्नेव अस्मिन् पुरोवर्तिनि सखीजने अद्य दुश्चरितं दुष्टमाचरणं व्यभिचाररूपं निवेदयन्ती कथयन्ती न ह्रीणा लज्जिता असि भवसि । ह्री लज्जायामित्यतो निष्ठायां नुदविदेत्यादिना तस्य नः रषाभ्यामिति णत्वम् । अजाद्यत इति टाप् च । नभावस्य वैकल्पिकत्वाद्ध्रीतासीत्यपि पाठान्तरम् । परा किलेयं काष्ठा निर्लज्जत्वस्येति भावः । वसन्ततिलकावृत्तम् ।

(ट) स्तनांशुकं स्तनसंबन्धि वसनम् ।

(टे) अतःपरं स्तनांशुकाहरणवृत्तात्परं आकर्णनेन श्रवणेन अलं साध्यं नास्तीत्यर्थः । परस्य स्वस्माद्भिन्नस्य वनितायां अवस्कन्दने प्रपाते 'हल्ला' इतिमहाराष्ट्रभाषया ख्याते प्रगल्भो धृष्टस्तस्य । 'प्रपातस्त्वभ्यवस्कन्द' इति हैमः । अभ्यवस्कन्द एवावस्कन्दनम् । हतकशब्दः कुत्सायां प्रयुज्यते नाट्ये कुत्सनार्थकत्वाच्चास्य 'कुत्सितानि कुत्सनै'रिति समासः । माद्रीसुतो माद्र्या नाम पाण्डुभार्यायाः पुत्रो नकुलः स एव हतकस्तस्य । 'प्रकाण्डाद्याः प्रशंसायामाक्षेपे हतकः स्मृतः ।' इतिहलायुधः । जीवितं जीवनमायुरित्यर्थः । अपहरामि मुष्णामि नाशयामीति यावत् । एनं हन्मीत्यर्थः । तावदित्यवधारणे निश्चितमित्यर्थः । पापशीला पापाचरणस्वभावा । अनुशासनीया दण्डनीया ।

**भानुमती**—तदो अज्जउत्तस्स प्पभादमङ्गलतूररवमिस्सेण वारविलासिणी-जणसंगीदरवेण पडिबोधिदह्मि। ( तत आर्यपुत्रस्य प्रभातमङ्गलतूर्यरवमिश्रेण वार-विलासिनीजनसंगीतरवेण प्रतिबोधितास्मि। ) (टे)

**राजा**—( सवितर्कम्। ) किं नाम ? प्रतिबोधितास्मीति। स्वप्नदर्शनमनया वर्णितं भवेत् ?। अथवा सखीवचनादेव व्यक्तिर्भविष्यति। (टो)

( उभे सविषादमन्योन्यं पश्यतः। ) (टौ)

**सुवदना**—जं एत्थ अच्चाहिदं तं भाईरहीप्पमुहाणं णईणं सलिलेण अवहारी-अदु। भअवदाणं वि बम्हणाणं आसीसाए आहुदिहुदेण पज्जलिदेण भअवदा हुदा-सणेण अ णस्सदु। ( यदिहात्याहितं तद्भागीरथीप्रमुखानां नदीनां सलिलेनापह्रियताम्। भगवतां ब्राह्मणानामप्याशिषा आहुतिहुतेन प्रज्वलितेन भगवता हुताशनेन च नश्यतु।) (टं)

**राजा**—अलं विकल्पेन। स्वप्नदर्शनमेवैतदनया वर्णितम्। मया पुनर्म-न्दधियाऽन्यथैव संभावितम्। (टः)

---

(टे) आर्यपुत्रस्य पत्युर्दुर्योधनस्य। प्रभातकालिकानि यानि मङ्गलवाद्यानि तेषां रवेण मिश्रो युक्तस्तेन। वारविलासिनीनां वेश्यानां 'वारस्त्री गणिका वेश्ये' त्यमरः। जन-स्य समूहस्य संगीतरवेण गीतध्वनिना। प्रतिबोधिताऽस्मि जागारितत्वं नीतास्मि। प्रतिपूर्वा-द्बुध्यतेर्णिजन्तान्निष्ठा।

(टो) किंनाम ब्रवीतीति शेषः। वचनमनुवदति प्रतिबोधितेति। संभावयति स्वप्नमिति। भवेदिति संभावनायां लिङ्। प्रश्ने काकुः। व्यक्तिः स्पष्टत्वम्। सखीवचनादेवास्याः पारमार्थिको भावो ज्ञास्यत इत्यर्थः।

(टौ) उभे सखी चेट्यौ। सविषादं सखेदं स्वप्नस्यानिष्टसूचकत्वाद्विषादः।

(टं) इह स्वप्नवृत्तान्ते यदत्याहितं महाभीतिहेतुभूतं। हेतुहेतुमतोरभेदात्। 'अ-त्याहितं महाभीता' विति मेदिनी। सलिलेनेति सलिलस्पर्शेनेत्यर्थः। अपह्रियतां निराक्रि-यताम्। सर्वारिष्टप्रशमनफलानि हि पुण्यनदीनां सलिलानि। भगवतां पूज्यानाम्। 'पूज्ये तत्रभवानत्रभवांश्च भगवानपि' इति हैमः। आहुतयो होमद्रव्याणि हुतानि मन्त्रोच्चारपूर्वकं क्षिप्तानि यस्मिंस्तेन। आहिताग्न्यादित्वान्निष्ठायाः परतः प्रयोगः। हुताशनेनाग्निना। नश्यतु। महाभीतेर्विनाशाय भागीरथ्यादिजलस्नानं ब्राह्मणानामाशिषोऽग्नौ होमश्चानुष्ठेय इति-भावः।

दिष्ट्यार्धश्रुतविप्रलम्भजनितक्रोधादहं नो गतो
दिष्ट्या नो परुषं रुषार्धकथने किंचिन्मया व्याहृतम् ।
मां प्रत्याययितुं विमूढहृदयं दिष्ट्या कथान्तं गता
मिथ्यादूषितयानया विरहितं दिष्ट्या न जातं जगत् ॥ १३ ॥

**भानुमती**—हला ! कहेहि किं एत्थ प्पसत्थं किं वा असुहसूअअं त्ति । ( हला ! कथय किमत्र प्रशस्तं किं वाऽशुभसूचकमिति । ) *

**सखी चेटी** च—(अन्योन्यमवलोक्य । अपवार्य ।) एत्थ णत्थि त्थोअं वि सुहसूअअम् । जइ एत्थ अलीअं कइस्सं ता पिअसहीए अवराहिणी एव्व हुविस्सम् । सो सिणिद्धो जणो जो पुच्छिदो परुसं वि हिदं भणादि । (प्रकाशम् ) सहि ! सव्वं एव्व एदं असुहणिवेदणम् । ता देवदाणं पणामेण दुजादिजणपडिग्गहेण अ अन्तरीअदु । णहु दाढिणो णउलस्स वा दंसणं अहिसदवहं अ सिविणए पसंसन्ति विअक्खणाओ । ( अत्र नास्ति स्तोकमपि शुभसूचकम् । यद्यलीकं कथयिष्यामि तदा प्रियसख्या अपराधिनी भविष्यामि । स एव स्निग्धो

---

(ट:) विकल्पेन भ्रान्त्या संशयेनेति यावत् । 'विकल्पः पुंसि भ्रान्तौ च कल्पने ।' इति मेदिनी । एतत्पूर्वोक्तम् । पुनः परंतु । मन्दधिया मूढबुद्धिना । संभावितं तर्कितम् ।

(१३) दिष्ट्येति । अहं दुर्योधनः अर्धेनासमग्रेण श्रुतेन स्वप्नवृत्तान्तस्य श्रवणेन जनित उत्पादितो यः क्रोधस्तस्माद्धेतुभूतात् नो गतः न गतवान् । भानुमत्याः सकाश इत्यर्थात् । इति यत्तदिदं दिष्ट्या 'शुभं संवृत्तमित्यर्थः । शुभे दिष्ट्ये'ति त्रिकाण्डशेषः । 'अभावे नत्व नो नापी' त्यमरः । मया कर्त्रा । अर्धकथने भानुमत्या स्वप्नवृत्तान्तस्यार्धनिवेदने किंचित् किमपि परुषं निष्ठुरं न व्याहृतं नोक्तम् । 'व्याहार उक्तिरि'त्यमरः । तदेतदपि दिष्ट्या शुभं संवृत्तम् । विमूढहृदयं विशेषेण भ्रान्तचित्तं मां प्रत्याययितुं विश्वासयितुं कथा स्वप्नसंबन्धिनी अन्तं समाप्तिं गता प्राप्तेत्येतदपि दिष्ट्या । मिथ्या दूषितया मया मृषैवारोपितदोषया अनया भानुमत्या शून्यं जगत् न जातं नेयं मया मिथ्यैव दोषमारोप्य मारितेत्यर्थः । इदमपि दिष्ट्या शुभं संघटितम् । यद्वा दिष्ट्या हर्षस्थानमित्यर्थः । 'दिष्ट्या हर्षे मङ्गले च' इति मेदिनी । शार्दूलविक्रीडितं वृत्तम् ।

(*) हला सखि ! । अत्रास्मिन् स्वप्नवृत्तान्ते । प्रशस्तं शुभम् ।

जनो यः पृष्टः परुषमपि हितं भणति । सखि ! सर्वमेवैतदशुभनिवेदनम् । तद्देवतानां प्रणामेन द्विजातिजनप्रतिग्रहेण चान्तर्यताम् । न खलु दंष्ट्रिणो नकुलस्य वा दर्शनमहिशतवधं च स्वप्ने प्रशंसन्ति विचक्षणाः ।) (ड)

**राजा**—अवितथमाह सुवदना । नकुलेन पन्नगशतवधः स्तनांशुकापहरणं च नियतमनिष्टोदर्कं तर्कयामि । (ढ)

---

(ड) अन्योन्यमवलोक्येति । शुभस्याभावादशुभस्य च कथयितुमशक्यत्वादन्योन्यावलोकनम् । अपवार्य भानुमतीं त्रिपताककरेण व्यवहितां कृत्वा । अपवारितलक्षणं तूक्तं दर्पणे कविराजेन 'तद्भवेदपवारितम् । रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते । त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।' इति । एतच्च बहुपुस्तकपाठानुसारेण विनिबद्धम् । वस्तुतः पुनरत्र । 'सखी चेटी चान्योन्यमवलोकयतः । सखी- ( अपवार्य )' इत्येव पाठो युक्तः । यद्धि अपवार्योच्यते न तदुभाभ्यां युगपत् । अपवार्य वचनं हि एकेनापरस्य सकाशे तद्भिन्नमपवार्य रहस्याख्यानमिति । अत एव चोत्तरत्र सखीतिपदमुपन्यस्तं, ततश्च सख्या एवैतद्भाषितमिति । **स्तोकमपि** अल्पमपि । 'स्तोकाल्पक्षुल्लकाः सूक्ष्मम्' इत्यमरः । अलीकं मिथ्या । अपराधिनी अपराधवती कृतापराधेत्यर्थः । सखीजने परमार्थस्य गोपनमन्यथाख्यानं वाऽपराध एवेति भावः । स्निग्धः सखा 'वयस्यः स्निग्धः सवया' इत्यमरः । परुषमपि निष्ठुरमपि अप्रियमपीति यावत् । हितं हितकरं भणति ब्रवीति । अनिष्टस्यापि भूतार्थस्यैव कथनं मित्रधर्म इतिभावः । अशुभनिवेदनं अशुभस्य निवेदकं अशुभसूचकमित्यर्थः । द्विजातिजनेभ्यो ब्राह्मणसमुदायेभ्यो यः प्रतिग्रहो विधिवद्देयं तेन । ब्राह्मणेभ्यो विधिवद्दानं कृत्वेत्यर्थः । 'प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । द्विजेभ्यो विधिवद्देय' इति मेदिनी । अन्तर्यतां दूरीक्रियताम् । अन्तरशब्दस्यान्तरवत्परस्य तत्करोतीतिणिजन्तस्य कर्मणि लोटिरूपम् । दंष्ट्रिणो दंष्ट्राविशिष्टस्य व्याघ्रादेः नकुलस्य मुंगुस इति महाराष्ट्रभाषया ख्यातस्य । अहिशतवधं सर्पशतमारणं । प्रशंसन्ति शोभनमिति ब्रुवते । विचक्षणा विद्वांसः । 'लब्धवर्णो विचक्षण' इति विद्वत्पर्यायेष्वमरः । स्वप्ने नकुलाहिदर्शनस्याशुभत्वं तूक्तं स्वप्नाध्याये 'क्रोष्टुकुक्कुटमार्जारगोधाबभ्रुभुजङ्गमाः । मक्षिका वृश्चिका दंशा दृष्टाः स्वप्ने न शोभनाः ॥ विग्राद्राजभयं दंष्ट्रिशृङ्गि कोशाद्यभिद्रवात् ।' इति च ।

(ढ) सुवदना भानुमत्याः सखी । अवितथं सत्यम् । नकुलेन कर्त्रा पन्नगशतस्य सर्पशतस्य वधः स्तनांशुकस्य भानुमत्याः स्तनसंबन्धिनो वस्त्रस्य हरणं कर्षणम् । नियतं अनिष्टः इष्टविरुद्धो दुःखकर इति यावत् । उदर्को भाविफलं यस्य तथाभूतम् । नन्वथात्र विरु-

प्रायेणैव हि दृश्यन्ते स्वप्नाः कामं शुभाशुभाः ।
शतसंख्या पुनरियं सानुजं स्पृशतीव माम् ॥ १४ ॥

( वामाक्षिस्पन्दनं सूचयित्वा । ) आः, ममापि नाम दुर्योधनस्यानिमित्तानि हृदयक्षोभमावहन्ति । ( सावष्टम्भम् । ) भीरुजनहृदयप्रकम्पनेषु का गणना दुर्योधनस्यैवंविधेषु ? गीतश्चायमर्थोऽङ्गिरसा । (ठ)

---

द्व्यर्थकत्वम् । 'नञभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे । ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः ।' इति मेदिनी । 'उदर्कः फलमुत्तरम्' इत्यमरः ।

(१४) अनिष्टोदर्कतां समर्थयति । प्रायेणेति । शुभाशुभाः स्वप्नाः प्रायेण बाहुल्येन दृश्यन्त एवेति काममनुमतं ममेत्यर्थः । 'प्रायो मरणानशनमृत्यौ बाहुल्यतुल्ययोः' इति 'कामं चानुमतौ स्मृतम्' इति च मेदिनी । यद्वा काममिति क्रियाविशेषणं बाहुल्येन च कामं यथेप्सितं चेत्यर्थः । 'कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्' इत्यमरः । पुनः परन्तु शुभाशुभस्वप्नानां बाहुल्येन दर्शनेऽपीत्यर्थः । इयमस्याः स्वप्ने गता शतसंख्या सर्पाणां शतात्मिका संख्या मां स्पृशतीव संबध्नातीवेत्युत्प्रेक्षा । अत्र पर्यायेणेति प्रायेणेत्यत्र पाठान्तरम् । पर्यायश्च क्रमः स चानन्तर्येण प्रवृत्तिरूपः।यथा दिनं च रात्रिश्च पर्यायेण प्रवर्तेते इति। दिनतः परं रात्री रात्रेश्च परं दिनमित्यर्थः । नैवं शुभस्वप्नात्परमशुभमशुभतश्च परं शुभमित्यस्ति नियमः। तत एव च परित्यक्तोऽयं पाठः । प्रायणैवेत्येष एव च श्रीविश्वनाथकविराजादीनां प्राचां पाठ इति स एवाङ्गीकृतः । अत्र तुल्यतर्काख्यं नाटयलक्षणम् । तदुक्तं 'तुल्यतर्को यदर्थेन तर्कः प्रकृतगामिना' इति दर्पणे ।

(ठ) वामाक्षिस्पन्दनं सव्यदृष्टिस्फुरणम् । अशुभमेतदित्याचक्षते शाकुनिकाः । आ इति संतापे 'आः स्मरणेऽपाकरण कोपसंतापयोरपि' इति मेदिनी । ममापि निरतिशयशक्तिशालिनोऽपीति भावः । नामेति विस्मये । 'नाम कोपेभ्युपगमे विस्मये स्मरणेऽपि च' ति मेदिनी । अनिमित्तानि दुःशकुना वामाक्षिस्पन्दनादयो दुस्वप्नादयश्च । हृदयक्षोभं हृदयचाञ्चल्यं आवहन्ति जनयन्ति । सावष्टम्भं साहङ्कारम् । 'दर्पोऽवलेपोऽवष्टम्भ' इत्यहङ्कारपर्यायेष्वमरः । भीरूणां भयशीलानां जनानां हृदयं प्रकम्पयान्ति तथाविधानि तेषु । एवंविधेषु ईदृशेषु स्वप्नादिषु का गणना क आदरः। न कश्चिद्गणनेत्यर्थः । दुर्योधनस्येति निःसीमबलशालिन इति भावः । अयं ममाभिप्रेतः अर्थः अङ्गिरसा मुनिविशेषेण । **अत्राङ्गिरसेनेत्येव पाठो युक्तः** । आङ्गिरसो हि बृहस्पतिः स च नास्तिकमतस्य

ग्रहाणां चरितं स्वप्नोऽनिमित्तौत्पातिकं तथा ।
फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति ॥ १५ ॥ इति ।

तद्भानुमत्याः स्त्रीस्वभावसुलभामलीकाशङ्कामपनयामि । (ठी)

**भानुमती**—हला सुवअणे! पेक्ख दाव उदअगिरिसिहरन्तरविमुक्करहवरो विअलन्तसंझाराअप्पसण्णदुरालोअमण्डलो जादो भअवं दिवसणाहो । (हला सुवदने! पश्य तावदुदयगिरिशिखरान्तरविमुक्तरथवरो विगलत्संध्यारागप्रसन्नदुरालोकमण्डलो जातो भगवान्दिवसनाथः ।) (ठु)

---

प्रवर्तयिता ततश्चोपपद्यते शकुनादिष्वनादर एतस्येति । जीव आङ्गिरसो वाचस्पतिरित्यमरः । गीत उक्तः ।

(१५) आङ्गिरसोक्तमुपदर्शयति । ग्रहाणामिति । ग्रहाणां रव्यादीनां चरितं चारः राशिषु संक्रमणम्।नपुंसक्ते भावे क्तः । स्वप्नः स्वप्नदर्शनम् । तथा अनिमित्तान्यपशकुनाश्चौत्पातिकं उत्पातसंबन्धि निर्घातवातादिकं चेत्येतेषां समाहारः । अनिमित्तानामौत्पातिकानां च जातिप्राधान्याज्जातिरप्राणिनामित्येकवद्भावः । सनपुंसकमिति नपुंसकत्वं च । इत्येतानि काकतालीयं काकाधिष्ठिततालवृक्षसदृशं यथा तथा । समासाच्च तद्विषयादितीवार्थे छः । फलन्ति फलं ददति । यथा कश्चित्काकः कमपि तालमधिष्ठति तस्मिन्नेव समयेऽसौ तालः कालवशात्कदाचिद्भज्यते तथापि न हि तालभङ्गः काकाधिष्ठानफलमेवं कालवशाद्घटमानानि फलानि न ग्रहचारादिभिर्दीयन्ते। यथा च तालभङ्गः काकाधिष्ठानफलमिति मन्दा मन्यन्त एवमेव मूढानामियं कल्पना ग्रहचारादयः फलमुपदर्शयन्तीतीति भावः । अत एव तेभ्यो ग्रहचरितादिभ्यः । भीत्रार्थानामित्यपादानसंज्ञायां पञ्चमी । प्राज्ञा विद्वांसो न बिभ्यति न भययुक्ता भवन्ति । अनिमित्तान्युपयाचितमित्यप्यत्र पाठः । स च समीचीनः । औत्पातिकानामनिमित्तेष्वेवान्तर्भावात् । उपयाचितं दिव्यदोहदम् । 'यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं दिव्यदोहदं तद्विदुर्बुधाः ।' इति हारावली ।

(ठी) तत् यत एवमाङ्गिरसेनोक्तं तस्मात् । अलीकाशङ्कां मिथ्याभीतिम् । 'शङ्का त्रासे वितर्के चे'ति त्रिकाण्डशेषः । आशङ्का शङ्काचेति समानार्थौ शब्दौ । अपनयामि दूरीकरोमि ।

(ठु) हला सखि ! तावदिति वाक्यालङ्कारे । उदयगिरेः शिखरान्तरेण शिखरमध्येन विमुक्तो रथवरः श्रेष्ठो रथो यस्य तथाभूतः । विगलन्विनश्यन् संध्यारागः संध्यासं-

**सखी**—सहि! साणिदकणअपत्तसरिसेण लदाजालन्तरापडिदकिरणणिवहेण पिञ्जरिदोज्जाणभूमिभाओ पूरिदप्पडिण्णो विअ रिउदुप्पेक्खणिज्जो जादो भअवं सहस्सकिरणो । ता समओ दे कुसुमचन्दणगब्भेण अग्घेण पज्जुवट्ठादुम । (सखि ! शाणितकनकपत्रसदृशेन लताजालान्तरापतितकिरणनिवहेन पिञ्जरितोद्यानभूमिभागः पूरितप्रतिज्ञ इव रिपुदुःप्रेक्षणीयो जातो भगवान्सहस्रकिरणः । तत्समयस्ते कुसुमचन्दनगर्भेणार्घ्येण पर्यपस्थातुम् ।) (ठू)

**भानुमती**—हञ्जे तरलिए! उवणेहि मे अग्घभाअणं जाव भअवदो सहस्सरस्सिणो सवरिअं णिव्वट्टेमि ! (हञ्जे तरलिके ! उपनय मेऽर्घ्यभाजनं यावद्भगवतः सहस्ररश्मेः सपर्यां निर्वर्तयामि ।) (ठे)

**चेटी**—जं देवी आणवेदि ॥ (यद्देव्याज्ञापयति) (इति निष्क्रान्ता ।)

---

बन्धी रक्तिमा यस्य तथाभूतश्चासौ स्वच्छं दुरालोकं दुःखेनालोकितुं शक्यं च मण्डलं यस्य तथाभूतः । दिवसनाथः सूर्यः ।

(ठू) शाणितानि शाणे घृष्टानि यानि कनकपत्राणि सुवर्णमयानि पत्राणि तत्सदृशेन लताजालस्य वल्लीसमूहस्यान्तरान्मध्यात्पतितेन किरणानां निवहेन समूहेन करणभूतेन । पिञ्जरितः पीतवर्णतां नीतः उद्यानस्योपवनस्य संबन्धी भूमिभागो येन तथाभूतः । 'पीतेच पिञ्जरः ।' इति विश्वः । पिशङ्गीकृतेति पाठे पिङ्गलीकृत इत्यर्थः । 'पिशङ्गौ कद्रुपिङ्गला' वित्यमरः । पूरितप्रतिज्ञः पूर्णीकृतप्रतिज्ञः पुरुष इव रिपुभिर्दुःखेन प्रेक्षणीयः प्रेक्षितुं शक्यः । यथा पूरितप्रतिज्ञो रिपुभिर्दुःप्रेक्षणीयो भवत्येवमसौ दुःप्रेक्षणीयः संवृत्त इति भावः । सहस्रकिरणः सूर्यः । सहस्रशब्दोऽत्रानन्तवाची । कुसुमानि गर्भेऽस्य तथाविधेन अर्घ्येण पूजोपयोगिना द्रव्येण पूजार्थं देयेनसलिलेन वा 'अर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः । पर्युपस्थातुं पूजयितुम् । कालसमयवेलास्विति तुमुन् । समयः कालः । अयं पूजनसमय इत्यर्थः । 'अर्घः पूजाविधौ' इति 'अर्घ्यमर्घोपयोग्ये स्या' दिति च मेदिनी । यद्वा अर्घः पूजार्थं पूज्याय समर्पणीयो द्रव्यसंभारः । स च काशीखण्डे प्रोक्तः 'आपः क्षीरं कुशाग्रं च दधिसर्पिः सतण्डुलम् । यवः सिद्धार्थकश्चैव अष्टाङ्गोर्घः प्रकीर्तित' । इति ।

(ठे) तरलिकेति चेट्या अभिधानम् । उपनय आनयेत्यर्थः । अर्घभाजनं पूजाद्रव्यपात्रम् । यावत् सत्वरम् । सहस्रकिरणस्य सूर्यस्य । सपर्यां पूजाम् । निर्वर्तयामि करोमि । 'पूजा नमस्यापचितिः सपर्ये' त्यमरः ।

**राजा**—अयमेव साधुतरोऽवसरः समीपमुपगन्तुं देव्याः । (ठै)

( प्रविश्य । )

**चेटी**—देवि ! एदं अग्घभाअणम् । ता णिव्वट्टीअदु भअवदो सहस्सरस्सिणो सवरिआ । ( देवि ! एतदर्घ्यभाजनम् । तन्निर्वर्त्यतां भगवतः सहस्ररश्मेः सपर्या । ) (ठो)

( राजोपसृत्य संज्ञया परिजनमुत्सार्य स्वयमेवार्घ्यपात्रं गृहीत्वा ददाति । ) (ठौ)

**सखी**—( स्वगतम् । ) कहं महाराओ समाअदो । हन्त ! किदो से पिअसहीए णिअमभङ्गो रण्णा । ( कथं महाराजः समागतः । हन्त, कृतोऽस्याः प्रियसख्या नियमभङ्गो राज्ञा । ) (ठं)

**भानुमती**—( दिनकराभिमुखी भूत्वा । ) भअवं ! अम्बरमहासरेक्कसहस्सपत्त! पुव्वदिसावहूमुहमण्डलकुङ्कुमविसेसअ ! सअलभुवणाङ्गणदीवअ ! एत्थ सिविणअदंसणे जं किं वि अच्चाहिदं तं भअवदो प्पणामेण कुसलपरिणामी ससदब्भादुअस्स अज्जउत्तस्स होदु । ( अर्घ्यं दत्वा । ) हला ! उवणेहि मे कुसुमाइं जाव अवराणं वि देवदाणं सवारिअं णिव्वट्टेमि । ( हस्तौ प्रसारयति । ) ( भगवन्! अम्बरमहासरएकसहस्रपत्र! पूर्वदिशावधूमुखमण्डलकुङ्कुमविशेषक! सकलभुवनाङ्गनदीपक! अत्र स्वप्नदर्शने यत्किमप्यत्याहितं तद्भगवतः प्रणामेन कुशलपरिणामि सशतभ्रातृकस्यार्यपुत्रस्य भवतु । हला! उपनय मे कुसुमानि यावदपरासामपि देवतानां सपर्यां निर्वर्तयामि । ) (ठः)

---

(ठै) देव्या भानुमत्याः समीपमुपगन्तुं गन्तुम् । कालसमयेत्यत्रार्थग्रहणादवसरयोगे तुमुन् । अत्रोपेत्युपसर्गो धात्वर्थमेवानुवर्तते समीपमिति पार्थक्येन वचनात् । साधुतरः अत्यन्तं समीचीनः ।

(ठो) अर्घ्यभाजनं पूजाद्रव्यपात्रं अर्घ्योपयोगिसलिलपात्रं वा । निर्वर्त्यतां क्रियताम् । सपर्या पूजा ।

(ठौ) संज्ञया हस्तचालनादिना संकेतेन । उत्सार्य दूरीकृत्य ।

(ठं) कथं संभ्रमे । 'कथं हर्षे च गर्हायां प्रकारार्थे च संभ्रमे' इति मेदिनी । हन्तेति विषादे । नियमभङ्गो व्रतभङ्गः । कृतः निश्चितं करिष्यत इत्यर्थः । निश्चितेऽर्थे भविष्यत्यपि भूतवत्प्रयोगः ।

( राजा पुष्पाण्युपनयति । स्पर्शसुखमभिनीय च कुसुमानि भूमौ पातयति । ) ( ड )

**भानुमती**—( सरोषम् । , अहो प्पमादो परिअणस्स । ( परिवृत्य दृष्ट्वा । ससंभ्रमम् । ) कधं अज्जउत्तो? ( अहो प्रमादः परिजनस्य । कथमार्यपुत्रः ?) (डा)

**राजा**—देवि ! अनिपुणः परिजनोऽयमेवंविधे सेवावकाशे। तत्प्रभवत्यत्रा-नुशासने देवी । ( डि )

( भानुमती लज्जां नाटयति । )

---

(ठः) अम्बरमाकाश एव महासरस्तस्यैकं मुख्यं सहस्रपत्रं कमलमिव तथाभूत । 'एके मुख्यान्यकेवलाः ' 'सहस्रपत्र कमलम्' इति चामरः । पूर्वदिशा प्राचीदिगेव वधूः स्त्री तस्या मुखमण्डलस्य कुङ्कुमविशेषकः केशरतिलक इव । दिशेत्या'पं चैव हलन्ता-नामि'त्याप् । ' विशेषकोऽस्त्री तिलक' इति मेदिनी । सकलं भुवनमेवाङ्गनं चत्वरं तस्य दीपको दीप इव तथाभूत। अत्याहितं महद्भयं तद्धेतुभूतमित्यर्थः । प्रणामेन नमस्कारेण हेतु-भूतेन । कुशलपरिणामि कुशलः कल्याणः परिणामः फलं तदस्त्यस्य तथाविधम् । कुशलं परिणमते तच्छीलं वा । ताच्छीलिको णिनिः । सशतभ्रातृकस्य शतेन भ्रातृभिः सहितस्य आर्यपुत्रस्य पत्युः षष्ठ्याः कुशलेन संबन्धः । अर्घ्यं पुष्पादिगर्भितं वारि । यावत् साक-ल्येन । उपमा च रूपकं चात्र संसृष्टम् ।

(ड) स्पर्शसुखं भानुमत्याः स्पर्शजन्यं सुखं अभिनीय नाटयित्वा। अत्र 'दुर्योधनः पुष्पाण्युपनयति । भानुमत्यास्तत्स्पर्शजातकम्पाया हस्तात्पुष्पाणि पतन्ती'ति पाठो न समी-चीनः । स्वयं पातितेषु कुसुमेषु परिजने रोषायोगेन ' भानुमती सरोषमि'ति अग्रिमवचन-विरोधात् । दर्शनतः प्राक् दुर्योधनज्ञानाभावेन सखीबुध्याश्चानपनीततया कम्परूपसात्त्विक-भावोदयायोगात् ।

(डा) अहो इति विषादे । ' अहो धिगर्थे शोके च करुणार्थविषादयोः ' इतिमे-दिनी । प्रमादः अनवधानता । परिवृत्य परावृत्त्य दृष्ट्वा । ससंभ्रमं सावेगम् । कथमिति संभ्रमे ।

(डि) एवंविधे ईदृशे पुष्पोपहरणादिरूपे सेवावकाशे सेवाप्रदेशे सेवाविधाविति यावत् । अनिपुणः अकुशलः । यद्वा एवंविधे सेवावकाशे सेवावसरे सति सेवितुमिति शेषः अनिपुणो न कुशलः । अयं मत्स्वरूपः परिजनो दासः । तत् यतोऽ निपुणतया घटितोऽ परावस्तस्मात् । देवी भवती अनुशासने दण्डने प्रभवति समर्था भवति। यथेच्छं विधीयतां-ममानुशासनमिति भावः ।

**राजा**—अयि प्रिये !

विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः
परिजनपथवर्तिन्यत्र किं संभ्रमेण ? ।
स्मितमधुरमुदारं देवि मामालपोच्चैः
प्रभवति मम पाण्योरञ्जलिः सेवितुं त्वाम् ॥ १६ ॥

**भानुमती**—अज्जउत्त ! अब्भणुण्णादाए तुए अत्थि मे कस्सिं वि णिअमे अहिलासो । ( आर्यपुत्र ! अभ्यनुज्ञातायास्त्वयास्ति मे कस्मिन्नपि नियमेऽभिलाषः । ) **(डी)**

---

(१६) अनुशासनमाह । विकिरेति । हे देवि राज्ञि भानुमति ! संभ्रमेण साध्वसेन किं किंफलं न किंचिदित्यर्थः । परित्यज्यतां साध्वसमिति भावः । 'संभ्रमः साध्वसेऽपि स्यादि'ति मेदिनी । परिजनानां पन्था मार्गः सेवारूपा सरणिरित्यर्थः परिजनपथः । ऋक्पूरित्यादिना अः । तत्र वर्तितुं शीलं यस्य तथाभूते अत्र मयि । धवलेन शुभ्रेण दीर्घेण चापाङ्गेन नेत्रप्रान्तेन संसर्पति प्रसर्पति तच्छीलं चक्षुः दृष्टिमिति यावत् विकिर विक्षिप । चक्षुषि शुक्लादीनां वर्णानामैक्यस्य कविसमयसिद्धत्वादिहापाङ्गस्य शुक्लतयोपवर्णनम्। तदाह वाग्भटः 'चक्षुरादेरेकानेकवर्णत्वस्य चैक्यम् ।' इति । आदिपदमपाङ्गादीनां संग्राहकम् । यथाऽपराद्धे परिजने दृष्टिर्विक्षिप्यत एवं मय्यपि विक्षिप्यतामितिभावः । स्मितेन 'ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताधरम्' इत्युक्तलक्षणेन हासेन मधुरं मनोहरं यथा स्यात्तथा उदारं अक्षुद्रं च यथास्यात्तथा मां उच्चैः आलप भाषस्व। समादिशेति यावत् । रोषवशाद्यथा परिजनमुच्चैरालपस्येवं मामप्यालपेत्यर्थः । मम पाण्योः अञ्जलिः परस्परसंलग्नौ प्रसृती त्वां सेवितुं प्रभवति समर्थोऽस्ति । 'पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान्' इत्यमरः । अत्र त्वं स्पृशास्मानिति पाठो वचनक्रमभङ्गाद्ग्राम्यत्वाच्चोपेक्ष्यः । अत्रानुशासनात्मकस्य प्रतिकूलस्य मिषेण कटाक्षविक्षेपादीनामानुकूल्यानुबन्धिनां प्रार्थनात् अनुकूलमलङ्कारः । 'अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत् ।' इति लक्षणात् । मालिनीवृत्तम् 'तल्लक्षणं च ननमयययुतेयं मालिनी भोगिलोकैः' इति ।

(डी) अभ्यनुज्ञातायाः अनुमोदितायाः । नियमे व्रतविषये । 'नियमो मन्त्रणायां च प्रतिज्ञानिश्चये व्रते' इति मेदिनी । अभिलाषः इच्छा । कमपि नियममनुष्ठातुमिच्छामि तदनुमोद्यतामिति भावः । नायं विहारस्यावसर इति ध्वनिः ।

**राजा**—श्रुतविस्तर एवास्मि भवत्याः स्वप्नवृत्तान्तं प्रति । तदलमेनं प्रकृतिसुकुमारमात्मानं खेदयितुम् । (ङु)

**भानुमती**—अज्जउत्त ! सङ्का मे बाहेदि । ता अणुमण्णदु मं अज्जउत्तो ।
(आर्यपुत्र ! शङ्का मां बाधते । तदनुमन्यतां मामार्यपुत्रः ।) (ङू)

**राजा**—(सगर्वम् ।) देवि ! अलमनया शङ्कया । पश्य । (ङे)

किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं ?
किं द्रोणेन ? किमङ्गराजविशिखैरेवं यदि क्लाम्यसि ।
भीरु ! भ्रातृशतस्य मे भुजवनच्छायासुखोपास्थिता
त्वं दुर्योधनकेसरीन्द्रगृहिणी शङ्कास्पदं किं तव ? ॥ १७ ॥

---

(ङु) स्वप्नवृत्तान्तं प्रति स्वप्नवृत्तविषये। प्रतेः 'लक्षणेत्थंभूताख्याने' त्यादिनेत्थंभूताख्याने कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्त' इति द्वितीया। श्रुतो विस्तरः स्वप्नवृत्तान्तविषयको येन तथाभूतः।तत् नियमविधानं कर्तुं प्रकृतिसुकुमारं स्वभावेनैव कोमलमेनं आत्मानं भवत्या देहं ' शरीरब्रह्मणोरपि' इत्यात्मशब्दार्थेषु मेदिनी । खेदयितुं श्रमयितुं अलं पर्याप्तम् । 'पर्याप्तिवचनेष्वलमर्थेष्वि'ति तुमुन् । व्रतविधिना ते शारीरः क्लेशः स्यादिति नैतदाचरणीयमिति भावः । अलमिति वारणवाचकमित्यङ्गीकारे तु तुमुन्नोपपद्येत । आयास्येति पाठस्तु समीचीनः । तत्र च तदिति तस्मादित्यर्थः ।

(ङू) शङ्का भीतिः । बाधते पीडयति ।

(ङे) आशङ्कया भीत्या ।

(१७) भीतेर्निरर्थकत्वमुपपादयति । किमिति । यदि त्वमेवं क्लाम्यसि ग्लायसि । क्लमुग्लानौ इत्यतो लट् । तदा व्याप्ता दिशो याभिस्तासां, प्रकम्पिता संख्यातिगामितया भारेण वेपिता भूर्याभिस्तासां नः अस्माकं अक्षौहिणीनां सेनानां किं फलं क उपयोगः? 'अनीकिन्यक्षौहिणी च स्कन्धावारः पताकिनी ।' इति सेनापर्यायेषु शारदीनाममाला । द्रोणेन द्रोणाचार्येण किं किं फलम्? अङ्गानां देशविशेषाणां राजा अङ्गराजः कर्णस्तस्य विशिखैः बाणैः किं फलम्? समुदितां भीतिं निरकर्तुं प्रभविष्णवो हि विद्यन्तेऽस्माकमक्षौहिण्यादयस्तद्यदि भीत्या तव ग्लानिस्तदा निष्फलैवैषां स्थितिरिति भावः।अङ्गदेशमर्यादा तु शक्तिसंगमतन्त्रे प्रोक्ता ' वैद्यनाथं समारभ्य भुवनेशान्तगं शिवे । तावदङ्गाभिधो देशो या-

**भानुमती**—अज्जउत्त ! ण हु मे किं वि आसङ्काकालणं तुम्हेसु सण्णिहिदेसु । किं तु अज्जउत्तस्स एव्व मणोरहसंपात्तिं अहिणन्दामि । ( आर्यपुत्र ! न खलु मे किमप्याशङ्काकारणं युष्मासु संनिहितेषु । किंत्वार्यपुत्रस्यैव मनोरथसंपत्तिमभिनन्दामि । (डै)

**राजा**—अयि सुन्दरि ! एतावन्त एव मे मनोरथा यदहं दयितया संगतः स्वेच्छया विहरामीति । पश्य । (डो)

प्रेमाबद्धस्तिमितनयनापीयमानाब्जशोभं
लज्जायोगादविशदकथं मन्दमन्दस्मितं वा ।
वक्त्रेन्दुं ते नियममुषितालक्तकाङ्काधरं वा
पातुं वाञ्छा परमसुलभं किं नु दुर्योधनस्य ? ॥ १८ ॥

( नेपथ्ये महान्कलकलः । सर्वे आकर्णयन्ति । )

---

त्रायां न हि दुष्यति' इति । एष च देशो भारते वर्षे आग्नेय्यामिति वाराही संहिता गिरिव्रजात्पूर्वं मोदागिरेश्च पश्चादेष इति महाभारतादनुमीयते । हे भीरु! भयशीले! त्वं मे भ्रातॄणां शतस्य भुजा एव वनं तस्य च्छायायां सुखमास्थिता स्थिता । भ्रातरो मे शतं त्वदीयं परितापमपाकर्तुं प्रभव इति भावः । किं च त्वं दुर्योधन एव कसरीन्द्रः सिंहश्रेष्ठो विक्रमातिशयशालित्वात्तस्य गृहिणी भार्या । इतोऽपि नास्ति ते शङ्कास्थानमिति भावः । अतः तव शङ्कास्पदं भीतिस्थानं किं? न किंचिदपीत्यर्थः । रूपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।

(डै) युष्मासु संनिहितेषु सत्सु । मनोरथसपत्तिं इष्टसिद्धिं अभिनन्दामि प्रशंसामि । ततस्तदर्थमुचितं व्रतानुष्ठानमिति भावः ।

(डो) दयितया प्रियया त्वया संगतो युक्तः स्वेच्छया स्वेच्छानुसारं विहरामि विहारं करोमि । इति यत् एतावन्त एव मे मनोरथाः ।

(१८) एतावन्तवन्त एव मनोरथा इतीदं समर्थयति । प्रेमेति । प्रेम्णाऽनुरागेणासमन्तात् बद्धं व्याप्तमिति यावत् अत एव स्तिमितमचञ्चलं 'स्तिमितोऽचञ्चले क्लिन्ने' इति विश्वः । यन्नयनं नेत्रं तेन करणभूतेनापीयमाना विलोप्यमाना अब्जस्य कमलस्य शोभा येन तथाभूतं कमलतुल्यनयनशालिनमिति भावः । लज्जायोगाल्लज्जासंबन्धात् अविशदकथ-

**भानुमती**—( सभयं राजानं परिष्वज्य । ) परित्ताअदु परित्ताअदु अज्जउत्तो ।
( परित्रायतां परित्रायतामार्यपुत्रः । ) (ढौ)

**राजा**—( समन्तादवलोक्य । ) प्रिये ! अलं संभ्रमेण । पश्य । (ढं)

दिक्षु व्यूढाङ्घ्रिपाङ्गस्तृणजटिलचलत्पांशुदण्डोऽन्तरिक्षे
झाङ्कारी शर्कराळः पथिषु विटपिनां स्कन्धकाषैः सधूमः ।
प्रासादानां निकुञ्जेष्वभिनवजलदोद्गारगम्भीरधीर-
श्चण्डारम्भः समीरो वहति परिदिशं भीरु ! किं संभ्रमेण ? ॥ १९ ॥

---

मस्पष्टसंलापम् । वेति समुच्चये 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये ।' इत्यमरः। किंचेत्यर्थः ।मन्दमन्दस्मितं लज्जायोगादेव मन्दप्रकारमल्पमित्यर्थः स्मितं हसितं यत्र तथाभूतम्। प्रकारे गुणवचनस्येति मन्दशद्बस्य द्विर्वचनम् । वा किंच नियमेन व्रतेन मुषितः अपहृतः अलक्तकाङ्कोऽलक्तकचिह्नं यस्य तथाविधोऽधरोयत्र तम् । अधररञ्जनार्थं किलालक्तकरसः प्रदीयते स्म पूर्वं वनिताभिः । सचास्या व्रतयोगान्नासीत् । अत उक्तं नियमेत्यादि । परमसुलभम् अत्यन्तं सुलभं । सहधर्मिण्या त्वेष: । वक्त्रेन्दुं इन्दुसदृशं वक्त्रं पातुं प्रगाढं चुम्बितुमित्यर्थः । दुर्योधनस्य वाञ्छा इच्छा किं नु कस्मात्कारणान्नु भवतीति शेषः । नुर्वितर्के । भवति किल दुर्लभस्य वस्तुनः प्राप्तौ वाञ्छा । मम पुनः प्रकाममपि सुलभं ते मुखचन्द्रं पातुमभिलाषः । तदेतत्तत एव यतो दयितया सहितः स्वेच्छया विहरामीत्येतावानेव मे मनोरथ इति । यद्वा असुलभं भाग्यैकलभ्यत्वाद्दुर्लभं वक्त्रेन्दुं पातुं परं केवलं वाञ्छेत्यर्थः। तस्यैव पाने केवलं वाञ्छेत्येतावतैव शक्यमवबोद्धुं मनोरथस्य स्वरूपमिति भावः। उपमालङ्कारः । मन्दाक्रान्ता वृत्तम् ।

(ढौ) सभयं कलकलाकर्णनजन्येन भयेन सहितं यथा तथा। परिष्वज्य आलिङ्ग्य । परिपूर्वात्स्वञ्जतेः क्त्वो ल्यप् । परित्रायतां पालयतु मामितिशेषः।

(ढं) संभ्रमेण साध्वसेन । 'संभ्रमः साध्वसेऽपि स्या'दिति मेदिनी । पश्येति भीरुस्वभावसमर्थनार्थम् ।

(१९) कलकलनिमित्तमुपदर्शयन् भीतेः प्रयोजनाभावमुपपादयति । दिक्ष्विति । हे भीरु! भयशीले! परिदिशं दिशिदिशि । वीप्सायमव्ययीभावः। समीरो वातः वहति प्रसर्पतीति यावत् । तत्संभ्रमेण भयेन किं न किमपि प्रयोजनं भीत्येति भावः। समीरं विशेषयति

**सखी**—महाराअ ! आरोहीअदु एदं दारुपव्वदप्पासादम् । उव्वेअकारी क्खु अअं उत्थिदपरुसरअकलुसीकिदणअणो उम्मूलिदतरुवरसद्दावित्तत्थमन्दुरापरिब्भट्टवल्लहतुलङ्गमपज्जाउलीकिदजणपद्धई भीसणो समीरणो ।( महाराज ! आरुह्यताभेषदारुपर्वतप्रासादः । उद्वेगकारी खल्वयमुत्थितपरुषरजःकलुषीकृतनयन उन्मूलिततरुवरशब्दावितत्रस्तमन्दुरापरिभ्रष्टवल्लभतुरङ्गमपर्याकुलीकृतजनपद्धतिर्भीषणः समीरणः । (*)

---

। दिक्ष्वित्यादिना । दिक्षु दिशासु व्यूढानि विशेषेण प्रापितानि अङ्घ्रिपानां वृक्षाणां अङ्गानि पत्रशाखाद्या अवयवा येन तथाभूतः । 'पुलाक्यङ्घ्रिपः सालानोकह' इति वृक्षपर्यायेषु हैमः । व्यूढ इत्यत्र विपूर्वाद्वह प्रापण इत्यतो निष्ठा । यद्वा व्यूढानि संहतानि अङ्घ्रिपाणामङ्गानि यत्र तथाभूतो दिक्षु वहतीति योज्यम् । 'व्यूढः संहतविन्यस्तपृथुलेष्वि'ति मेदिनी । सहंतश्च पुञ्जितः । अन्तारिक्षे आकाशे तृणैर्जटिलो व्याप्तश्चलंश्च पांशूनां धूलीनां दण्डः स्कन्धो यत्र । स्कन्धश्च तरोर्मूलाच्छाखावधिभागः । तत्सदृशत्वाच्चायमपि दण्डः । 'प्रकाण्डे लगुडे कोणे' इति दण्डार्थेषु हैमः । प्रकाण्डश्च तरुस्कन्धः । पथिषु मार्गेषु झांकारी झांकारवान् । झाङ्कार इति ध्वनेरनुकरणम् । शर्कराभिः कर्परांशैः वालुकाभिरितियावत् अलते शोभते तथाविधः । अत्र 'शर्करालः शर्करावान् सिध्मादित्वाल्लच्' इति जगद्धरः । तन्न । सिध्मादिषु शर्कराशब्दस्य पाठाभावात् । प्रासादानां राजमन्दिराणां सम्बन्धिषु निकुञ्जेषु वृक्षावृतप्रदेशेषु उपवनेष्विति याबत् 'कुञ्जनिकुञ्जकुडङ्गाः स्थानेवृक्षैर्वृतान्तरे' इति हैमः । विटपिनां वृक्षाणां 'विटपी पादपस्तरु' रित्यमरः । स्कन्धकाषैः स्कन्धानां परस्परं घर्षणैः । सधूमो धूमयुक्तः । वृक्षस्कन्धानां पस्परघर्षणेन वह्नेः प्रादुर्भावाद्धूमवैशिष्टयम् । अभिनवस्य नवीनस्य जलदस्येवोद्गारा ध्वनयस्तैर्गम्भीरः धीरः स्वच्छन्दश्च । 'धीरः स्यात्त्रिषु पण्डिते । स्वच्छन्दे' इतिमेदिनी । स्वच्छन्दवाहीत्यर्थः । चण्डस्तीव्र आरम्भ उद्यमो व्यापार त्यर्थः यस्य तथाभूतः । 'चण्डो दैत्यान्तरे तीव्रे' इति 'आरम्भस्तु त्वरायां स्यादुद्यमे वधदर्पयोः' इति च विश्वः । दिशिदिशि पवनप्रसर्पणेन कोलाहलोत्पत्तेर्नास्ति भीतेरवकाश इतिभावः । अत्र चण्डवेगस्य समीरस्य स्वरूपक्रिययोर्वर्णनात्स्वभावोक्तिरलङ्कारः । 'स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ।' इतिलक्षणात् । स्रग्धरावृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।' इति लक्षणात् ।

(*) दारुपर्वतप्रासादम् क्रीडार्थं दारुभिः काष्ठैर्विरचितः पर्वतो दारुपर्वतस्तत्र गतः प्रासादो राजमन्दिरम् । आरुह्यतां त्वयेति शेषः । अत्र एतद्दारुपर्वतप्रासादमिति क्वचित्पाठः स च प्राकृतानवगममूलः । प्राकृते हि भूयिष्ठं लिङ्गानां वैपरीत्यं भवति । 'लि-

**राजा**—(सहर्षम् ।) उपकारि खल्विदं वात्याचक्रं सुयोधनस्य । यस्य प्रसादादयत्नपरित्यक्तनियमया देव्या संपादितोऽस्मन्मनोरथः । कथमिति ? । (ङः)

न्यस्ता न भ्रुकुटिर्न बाष्पसलिलैराच्छादिते लोचने
नीतं नाननमन्यतः सशपथं नाहं स्पृशन्वारितः ।
तन्व्या मग्नपयोधरं भयवशादारब्धमालिङ्गितुं
भङ्क्तास्या नियमस्य भीषणमरुन्नायं वयस्यो मम ॥ २० ॥

---

ङ्गानां वैपरीत्यं च संस्कृतात्प्राकृते भवेत्' इत्युक्तेः । संस्कृते तु तदनुवादः संस्कृतानुरोधेनै-वोचित इति । उद्वेगकारी चित्तस्यव्याकुलताजनकः । उत्थितैः उत्पतितैः परुषैरमृदुलै रजोभिः पांशुभिः कलुषीकृतं आविलीकृतं निराकृतप्रसादमित्यर्थः नयनं येन तथाभूतः । वातोध्दूतानां रजसां नयनान्तः प्रविष्टतया नयस्याविलीभावः । उन्मूलितानां तरुवराणां प्रधानतरूणां शब्देन ध्वनिना वित्रस्ता विशेषेणभीता अत एव च मन्दुराया अश्वशालायाः सकाशात्परिभ्रष्टा बहिः पलायिता वल्लभाः कुलीनाःसल्लक्षणा वा ये तुरङ्गमा अश्वास्तैः पर्याकुलीकृता व्याकुलतां नीता दुःप्रवेशतां गमितेति यावत् जनानां लोकानां पद्धातिमार्गो येन कारण-भूतेन तथाभूतः । 'वाजिशाला तु मन्दुरा' इत्यमरः । 'कुलीनाश्वे च वल्लभः । ' इति विश्वः । 'वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे' इति मेदिनी । ' सरणिः पद्धतिः पद्ये'त्यमरः ।

(ङः) इदं वात्याचक्रं वातसमूहमण्डलम् । वात्येति वातशद्बात्पाशादिभ्य इति यः। यप्रत्ययान्तं च स्वभावतः स्त्रीलिङ्गमिति हरदत्तः । ततष्टाप् । उपकारि उपकर्तृ । यस्य वात्याचक्रस्य प्रसादादनुग्रहात् । अयत्नं अप्रयासं प्रार्थनादिरूपं मच्छ्रमं विना परित्यक्तो-नियमो व्रतं यया तथा भूतया देव्या अस्मन्मनोरथः अस्माकमभिलाषः संपादितः संपू-रितः । कथमिति चेच्छ्रुयतामिति शेषः ।

(२०) मनोरथसंपत्तिमुपवर्णयति । न्यस्तेति । भ्रुकुटिः नियमभङ्गे प्रवृत्तोऽहमिति रोषाद्भ्रूभङ्गः न न्यस्ता न कृता।'सकोपभ्रूविकारे स्याद्भ्रभ्रुभ्रूभ्यः परा कुटिः।' इति हैमः।न मयि रोषाद्भ्रूभङ्ग आरचित इति भावः । अनिष्टमहं व्रतभङ्गं करोमीति कुपितया बाष्पस-लिलैः अश्रुजलैः लोचने नेत्रे न आच्छादिते आवृते। न रुदितमित्यर्थः । एतेनास्या धीरा-धीरामध्यात्वं द्योत्यते । मध्या हि धीराधीरा कुपिता रोदिति । तदाहुः 'प्रियं सोत्प्रासव-क्रोक्त्या मध्याधीरा दहेद्रुषा । धीराधीरा तु रुदितैः' इति । आननं मुखं अन्यतः चुम्बन-परिहारार्थेति भावः न नीतं न परावर्तितमित्यर्थः । स्पृशन् स्पर्शं कुर्वन्नालिङ्गन्निति यावत्

सतृसंपूर्णमनोरथस्य मे कामचारः संप्रति विहारेषु । तदितो दारुपर्वतप्रासादमेव गच्छामः । (ढ)

( सर्वे वात्याबाधां रूपयन्तः परिक्रामन्ति । ) (ढा)

**राजा—**

कुरु घनोरु ! पदानि शनैः शनैरयि! विमुञ्च गतिं परिवेपिनीम् ।
सुतनु ! बाहुलतोपरिबन्धनं मम निपीडय गाढमुरःस्थलम् ॥२१॥

---

अहं दुर्योधनः सशपथं शपथसहितं यथा तथा न वारितो न निषिद्धः । प्रत्युत तन्व्या कृशाङ्ग्या भानुमत्या भयवशाद्भीत्यधीनत्वात् हेतोः मग्नौ आलिङ्गनस्यातिमात्रं गाढत्वान्मदीयोरसि नितान्तं लीनावित्यर्थः पयोधरौ स्तनौ यस्मिंस्तद्यथा तथा आलिङ्गितुं आरब्धम् । अत एव अस्या भानुमत्या नियमस्य भङ्क्ता भञ्जकः।वात्यासंभ्रमेणालिङ्गनस्य संवृत्तत्वा द्व्रतभङ्गः । अयं भीषणमरुत् भयङ्करो वायुर्न किन्तु मम वयस्यः सखा । ममात्यन्तमनुकूलस्यास्या आलिङ्गनादेर्जनकत्वादिति भावः । अत्र भ्रुकुटिन्यासादिकं विनैवालिङ्गनादेः स्वयं समारम्भणे भयवशादिति पदार्थस्य हेतुतयोपनिबन्धनात्काव्यलिङ्गमलङ्कारः । तदनुप्राणिता च नायं मरुत्किन्तु मे वयस्य इत्यत्र प्रकृतस्य वायुत्वस्य प्रतिषेधपूर्वकं वयस्यत्वस्याप्रकृतस्य स्थापनादपह्नुतिरित्युभयोरङ्गाङ्गिभावेन सङ्करः । तत्र हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् । इति काव्यलिङ्गस्य 'प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः ।' इत्यपह्नुतेश्च लक्षणम् । शार्दूलविक्रीडितं वृत्तम् ।

(ढ) तत् यस्माद्व्रतं भग्नं तस्मात् प्रतिबन्धकाभावादित्यर्थः । संप्रति विहारेषु क्रीडार्थं संचरणेषु विषये । 'विहारस्तु परिक्रम' इत्यमरः । स च विहारार्थं संचरणमिति भानुदीक्षितः । मम दुर्योधनस्य कामचारः कामेन स्वेच्छया चारः आचरणम् स्वच्छन्दचारितेति भावः । अस्तीति शेषः । भार्यया सह स्वच्छन्दं विहरिष्यामीति भावः ।

(ढा) वात्याबाधां वात्याजनितां पीडाम् । रूपयन्तो नाटयन्तः । परिक्रामन्ति पादविक्षेपं कुर्वन्ति । क्रमुपादविक्षेप इत्यतो लट् ।

(२१) कुर्विति । अयि घनोरु घनौ परस्परसंलग्नत्वान्निरन्तरौ ऊरू यस्यास्तथाभूते भानुमति! पदानि शनैः शनैः मन्दं मन्दं कुरु न्यस । परिवेपिनीं प्रकम्पवतीं गतिं गमनं मुञ्च त्यज । हे सुतनु! शोभनशरीरे बाहुलते कोमलतया लतासदृशौ ते बाहू एव उपरिगतं

( प्रवेशं रूपयित्वा । ) प्रिये! अलब्धावकाशः समीरणः संवृतत्वाद्गर्भगृहस्य । विस्रब्धमुन्मीलय चक्षुरुन्मृष्टरेणुनिकरम् । (ढि)

**भानुमती**—( सहर्षम् । ) दिट्ठिआ इह दाव उप्पादसमीरणो ण बाधेइ । ( दिष्टयेह तावदुत्पातसमीरणो न बाधते । ) (ढी)

**सखी**—आरोहणसंभमणीसहं पिअसहीए ऊरुजुअलम् । ता कीस दाणिं महाराओ आसणवेदीं ण भूसेदि । ( आरोहणसंभ्रमनिःसहं प्रियसख्या ऊरुयुगलम् । तत्कस्मादिदानीं महाराज आसनवेदीं न भूषयति । ) (ढु)

**राजा**—( देवीमवलोक्य । ) भवति ! अनल्पमेवापकृतं वात्यासंभ्रमेण । तथाहि । (ढू)

रेणुर्बाधां विधत्ते तनुरपि महतीं नेत्रयोरायतत्वा-
दुत्कम्पोऽल्पोऽपि पीनस्तनभरितमुरः क्षिप्तहारं दुनोति ।

---

बन्धनं यस्मिन् कर्मणि तद्यथा तथा मम उरःस्छलं वक्षःप्रदेशं गाढं अत्यन्तं निपीडय । 'गाढबाढदृढानि च' त्यतिमात्रपर्यायेष्वमरः । तथा मे वक्षो गाढं निपीडय यथा तत्र गता ते बाहुलता तस्योपरिबन्धनामिव स्यादिति भावः । द्रुतविलम्बितं वृत्तम् ।

(ढि) रूपयित्वाऽभिनीय । गर्भगृहस्य शयनमन्दिरस्य 'गर्भागारेऽपवरको वासौकः शयनास्पदम् ।' इति हैमः । संवृतत्वाच्छन्नत्वात् नारन्ध्रत्वादित्यर्थः । अलब्धावकाशः अप्राप्तस्थानः । उन्मृष्टः प्रोञ्छितो रेणुनिकरो रजःसमूहो वायुवशात्संलग्नो यस्य तथाभूतम् विस्रब्धं निर्भयं यथा तथा उन्मीलय ।

(ढी) उत्पातसमीरणः उत्पातः अरिष्टसूचकः समीरणो वातः । न बाधत इत्येतदिष्टया हर्षाय ।

(ढु) आरोहणस्य संभ्रमेण त्वरया निःसहं असमर्थम् । अवस्थातुमशक्तमित्यर्थः । ऊरुयुगलम् ऊरुद्वयम् । आसनवेदीं उपवेशनार्थं परिष्कृतां भूमिम् । 'वेदी भूमिः परिष्कृता' इति हैमः । न भूषयति नालङ्करोति । किमर्थं नोपविशतीत्यर्थः ।

(ढू) भवति राज्ञि! । वात्यासंभ्रमेण वात्यायाः संवेगेन 'संभ्रमः साध्वसेऽपि स्यात्संवेगादरयोरपि ।' इति मेदिनी । अनल्पं बहु । अपकृतं अपकारः कृतः।तस्य अनल्पत्वमुपपादयति तथाहीति ।

ऊर्वोर्मन्देऽपि याते पृथुजघनभराद्वेपथुर्वर्धतेऽस्या

बाल्या खेदं मृगाक्ष्याः सुचिरमवयवैर्दत्तहस्ता करोति ॥ २२ ॥

( सर्वे उपविशन्ति । )

**राजा**—तत्किमित्यनास्तीर्णं कठिनशिलातलमध्यास्ते देवी ? । (*)

---

(२२) रेणुरिति । तनुरपि अल्पापि रेणुः धूलिः नेत्रयोर्नयनयोः आयतत्वाद्दीर्घत्वात् महतीं विपुलां बाधां पीडां विधत्ते करोति । कवीनां निरङ्कुशत्वादकर्तृगामिन्यपि क्रियाफले तङ् । नेत्रयोर्दीर्घत्वादल्पाया अपि धूलेः सम्यगवकाशलाभादिति भावः । अल्पोऽपि उत्कम्पः प्रकम्पः कर्ता पीनस्तनभरितं पीनाभ्यां स्थूलाभ्यां स्तनाभ्यां संजातभरम् । तारकादित्वादितच् । क्षिप्तः प्रकम्पवशादुत्क्षिप्तो हारो मुक्तास्रक् येन तथाभूतं दुनोति क्लेशयति । मन्दे अल्पेऽपि याते गमने सति अस्याः पृथुनः विशालस्य जघनस्य श्रोण्याः भरात् हेतुभूतात् । 'काञ्चीपदं कलत्रं जघनं श्रोणी ककुद्मती ज्ञेया ' इति हलायुधः । अत्र जघनं श्रोण्याः पुरोभाग इत्यर्थो न युक्तस्तस्य पृथुत्वभरविशिष्टत्वयोरभावात् । श्रोण्याः पुनः पश्चाद्भगस्य नितम्बत्वेन पृथुत्वं भरवैशिष्ट्यं च संगच्छते । ऊर्वोः वेपथुः कम्पः वर्धते बहुलीभवति । गमनस्याल्पत्वेऽपि प्रथीयान् जघनभारः समधिकं कम्पं जनयतीत्यर्थः । एवं मृगाक्ष्याः मृगनयनतुल्यनयनाया भानुमत्या अवयवैर्नेत्रादिभिरङ्गैः दत्तहस्ता आलम्बनार्थमिति भावः । करप्रदानेनावलम्बिता कृतसाहाय्येत्यर्थः । बाल्या कर्त्री सुचिरमतिदीर्घकालं मृगाक्ष्या इति काकाक्षिगोलकन्यायेन संबध्यते मृगाक्ष्याः खेदं श्रमं करोति जनयति । अत्राल्पानां रेणुप्रभृतीनां कारणानां कार्यस्य महत्त्वेन कार्यकारणगुणानां परस्परविरुद्धतया विषमालङ्कारः । 'गुणौ क्रिये वा यत्स्यातां विरुद्धे हेतुकार्ययोः । यद्वारब्धस्य वैफल्यमनर्थस्य च संभवः । विरूपयोः संघटना या च तद्विषमं मतम् ॥ ' इति लक्षणात् । तुरीये च चरणे वात्यायाः सुचिरं खेदकरणे अवयवैर्दत्तहस्तेति हेतुप्रदर्शनाद्वाक्यगतहेतुकं काव्यलिङ्गमलङ्कारः । स्रग्धरावृत्तम् ।

(*) अनास्तीर्णं नास्ति आस्तीर्णमास्तरणं (आच्छादनं) यस्मिंस्तथाभूतं । आङ्स्तृणातेर्नपुंसके भावेक्तः । यद्वा अनास्तीर्णं वस्त्रादिभिरनाच्छादितम् । स्तृणातेर्निष्ठा । अत एव कठिनं शिलातल पाषाणपृष्ठम् । अधिशीङ्स्थासांकर्मेति कर्मसंज्ञायां द्वितीया । अध्यास्ते अधिवसति ।आस्तरणरहिते शिलातले किमर्थमुपविशतीत्यर्थः ।

लोलांशुकस्य पवनाकुलितांशुकान्तं
त्वद्दृष्टिहारि मम लोचनबान्धवस्य ।
अध्यासितुं तव चिरं जघनस्थलस्य
पर्याप्तमेव करभोरु! ममोरुयुग्मम् ॥ २३ ॥

( प्रविश्य पटाक्षेपेण संभ्रान्तः । ) (ढे)

**कञ्चुकी**—देव! भग्नं भग्नम् । (ढै)

( सर्वे सातङ्कं पश्यन्ति । )

**राजा**—केन? (ढो)

**कञ्चुकी**—भीमेन । (ढौ)

---

(२३) कुत्र तर्ह्युपविशात्वित्याह । लोलेति । हे करभोरु! करभो मणिबन्धमारभ्य कनिष्ठिकाया मूलं यावद्विद्यमानः करस्य प्रदेशः ताविव ( मांसलौ ) ऊरू यस्यास्तथाभूते!, पवनाकुलितांशुकान्तं पवनेन वायुनाऽऽकुलित आकुलीकृतः विषमितइतियावत् अंशुकस्य वस्त्रस्य अन्तः प्रान्तप्रदेशो यस्य तथाभूतम् । त्वद्दृष्टिहारि तव दृष्टिं हर्तुमाकर्षितुं शीलं यस्य तथाभूतम् । मम ऊरुयुग्मं सक्थिद्वयं कर्तृ लोलांशुकस्य पवनवशाचलद्वस्त्रस्य मम लोचनयोः बान्धवस्य सुखप्रदत्वाद्बान्धवसदृशस्य । जघनस्थलस्य जघनप्रदेशस्य । सर्वत्र शेषे षष्ठी । जघनस्थले प्रतीत्यर्थः । अध्यासितुं आत्मनि उपवेशयितुम् । अधिपूर्वादास्तेरन्तर्भावित-ण्यर्थात्तुमुन् । पर्याप्तं समर्थम् । अत्रास्तेरन्तर्भावितण्यर्थतानङ्गीकारे समानकर्तृकत्वाभावात्तुमु-न्नोपपद्यतेति द्रष्टव्यम् । पूर्वार्धगतैर्विशेषणैरुभयोः समानरूपत्वोपवर्णनात्समागमौचित्यं ध्वन्यते। वसन्ततिलकावृत्तम् ॥

(ढे) पटाक्षेपेण जवनिकाक्षेपं विना । संभ्रान्तस्त्वरितः ।

(ढै) भग्नं भग्नमिति संभ्रमे द्विरुक्तिः । अस्य च निष्ठान्ततया प्रथमान्तकर्मसापे-क्षत्वेनोरुयुग्ममिति पदं प्रस्तुतत्वात्संबद्धमिव प्रतिभाति । ततश्च दुर्योधनस्योरुयुग्मं भग्न-मित्यर्थः प्रतीयते । तत एव च सर्वे सातङ्कं सभयं ( 'रुक्तापशङ्कास्वातङ्क' इत्यमरः । शङ्का च भीतिः । ) पश्यन्ति इति उत्तरत्रोक्ता सर्वेषां भीतिः सङ्गच्छते । साकूतमित्यपि क्वचित् ।

(ढो) ऊरुयुग्मं भग्नमित्याशयस्य संभाव्यमानत्वात् कर्तृविषयकः प्रश्नः केनेति ।

(ढौ) भीमेन भयङ्करेण।पाण्डवविशेषेणेति तु दुर्योधनादिभिः संभाव्यमानोऽर्थः । तत एव नोत्तरत्र कस्येत्यवयविविषयकः प्रश्नः ।

**राजा**—कस्य ? (ढं)

**कञ्चुकी**—भवतः । (ढः)

**राजा**—आः ! किं प्रलपसि ? (ण)

**भानुमती**—अज्ज ! किं अणिट्ठं मन्तेसि । (आर्य! किमनिष्टं मन्त्रयसे ।) (णा)

**राजा**—धिक्प्रलापिन् ! वृद्धापसद ! कोऽयमद्य ते व्यामोहः ? (णि)

**कञ्चुकी**—देव ! न खलु कश्चिद्व्यामोहः । सत्यमेव ब्रवीमि ।

भग्नं भीमेन भवतो मरुता रथकेतनम् ।
पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ ॥ २४ ॥

**राजा**—बलवत्समीरणवेगात्कम्पिते भुवने भग्नः स्यन्दनकेतुः । तत्किमित्युद्धतं प्रलपसि भग्नं भग्नमिति ? । (णी)

---

(ढं) कस्येति सबन्धसामान्ये षष्ठी । सबन्धश्चात्रावयवावयविभावः तेन कस्यावयवभूतमूरुयुगं भीमेन भग्नमिति प्रश्नार्थ. ।

(ढः) भवत इति भवतोऽवयवभूतमिति संभाव्यमानोऽर्थः । तत एव च दुर्योधनस्य रोषः ।

(ण) आः इति कोपे । प्रलपसि अनर्थकं ब्रवीषि । 'प्रलापोऽनर्थकं वच' इत्यमरः।

(णा) आर्य कञ्चुकिन् ! आनिष्टमप्रियं किं कस्माद्धेतोः मन्त्रयसे चिन्तयसीत्यर्थः।

(णि) हे प्रलापिन् प्रलपनशील धिक् त्वामिति शेषः । वृद्धापसद वृद्धश्चासावपसदो नीचश्च तथाभूत ! । 'निहीनोऽपसदो जाल्म' इत्यमरः । व्यामोहो भ्रमः ।

(२४) भग्नमिति । भीमेन भयानकेन मरुता वायुना भवतः तव रथकेतनं रथवर्ती ध्वजः 'केतनं ध्वजमस्त्रियाम्' । इत्यमरः। भग्नं सत् किङ्किणीनां ध्वजे बद्धानां क्षुद्रघण्टिकानां क्वाणेन ध्वनिना बद्धः प्रवर्तित आक्रन्दो रोदनं येन तथाभूतमिवेत्युत्प्रेक्षा । क्षितौ भूमौ पातितम् । उत्प्रेक्षालङ्कारः । पथ्यावक्त्रं वृत्तम् ।

(णी) बलवतः प्रबलस्य समीरणस्य वायोर्वेगात । भुवने जगति कम्पिते सति। स्यन्दनकेतुः रथध्वजः । उद्धतमविनयबहुलम् । अत्र 'पर्याप्तमेव करभोरु ममोरुयुग्ममित्यारभ्य बद्धाक्रन्दमिव क्षितावित्यनेन प्रबन्धेनाव्यक्तार्थैः प्रश्नपदैरभिप्रायान्तरबोधनक्षमैश्च प्रतिवचनैरुपेतस्यान्ततश्च ध्वजभङ्गरूपत्वेनविनिश्चितार्थस्यार्थोपक्षकस्योपनिबन्धनात्तृतीयं पता-

**कञ्चुकी**—देव ! न किंचित् । किं तु शमनार्थमस्यानिमित्तस्य विज्ञापयितव्यो देव इति स्वामिभक्तिर्मां मुखरयति । (णु)

**भानुमती**—अज्जउत्त ! अन्तरीअदु एदं पसण्णबम्हणवेदघोसेण । (आर्यपुत्र ! अन्तर्यतामेतत्प्रसन्नब्राह्मणवेदघोषेण । ) (णे)

**राजा**—( सावज्ञम् ) ननु गच्छ । पुरोहितसुमित्राय निवेदय । (णै)

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रान्ता । )

( प्रविश्य । )

**प्रतीहारी**—( सोद्वेगमुपसृत्य । ) जअदि जअदि महाराओ । महाराअ ! महादेवी क्खु एसा सिन्धुराअमादा दुस्सला अ पडिहारभूमीए चिट्ठदि । ( जयति जयति महाराजः । महाराज ! महादेवी खल्वेषा सिन्धुराजमाता दुःशला च प्रतीहारभूमौ तिष्ठति । ) (णो)

---

कास्थानकमुपनिबद्धं भवति । तल्लक्षणं च दर्पणे 'अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् । श्लिष्टप्रत्युत्तरोपेतं तृतीय ( पताकास्थानकं ) मिदमुच्यत इति ।

(णु) न किंचित् किमपि अत्याहितमिति शेषः । किन्तु तथापि अस्य ध्वजभङ्गरूपस्य अनिमित्तस्यापशकुनस्य शमनार्थं शान्तिकरणार्थं विज्ञापयितव्यः प्रार्थनीयः । स्वामिभक्तिः राजभक्तिः । 'राजा स्वामीति देवेति' इति दर्पणोक्तेर्नाटयभाषायां स्वामिपदं राजपरम् । मुखरयति वाचालयति । मुखरशब्दात्तत्करोतीति णिच् ।

(णे) प्रसन्नानां दानादिभिः संतुष्टानां ब्राह्मणानां वेदसंबन्धिना घोषेण ध्वनिना करणभूतेन । अन्तर्यतां दूरीक्रियताम् ।

(णै) सावज्ञम् शान्तिविषयिण्याऽवज्ञया सहितं यथा तथा । पुरोहितो राज्ञां शान्तिकपौष्टिकादिकर्ता ब्राह्मणो यः सुमित्रो नाम तस्मै निवेदय कथय । पुरोहितलक्षणं प्राह चाणक्यः 'वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः । आशीर्वादवचोयुक्त एष राजपुरोहितः ।' इति । 'अयं च वेदविहितं कुर्याच्छान्तिकं पौष्टिकम् ।' इत्यग्निपुराणे ।

(णो) महादेवी महाराज्ञी । सिन्धुराजः सिन्धुदेशाधिपतिर्जयद्रथस्तस्य माता । दुःशला दुर्योधनस्य भगिनी । प्रतिहारभूमौ द्वारप्रदेशे । 'स्याद्द्वाद्वारं प्रतीहारः' इत्यमरः । तिष्ठतीति प्रत्येकं संबध्यते । तत एव च नद्विवचनम् ।

**राजा**—( किंचिद्विचिन्त्यात्मगतम् । ) किं जयद्रथमाता दुःशला चेति ? । कच्चिदभिमन्युवधामर्षितैः पाण्डुपुत्रैर्न किंचिदत्याहितमाचेष्टितं भवेत् । ( प्रकाशम् ) गच्छ । प्रवेशय शीघ्रम् । **( णौ )**

**प्रतीहारी**—जं देवो आणवेदि । ( यद्देव आज्ञापयति । ) ( इति निष्क्रान्तः । )

( ततः प्रविशति संभ्रान्ता जयद्रथमाता दुःशला च । )

( उभे सास्रं दुर्योधनस्य पादयोः पततः । ) **( णं )**

**माता**—परित्ताअदु परित्ताअदु कुमालो । ( परित्रायतां परित्रायतां कुमारः । )

( दुःशला रोदिति । )

**राजा**—( ससंभ्रममुत्थाप्य । ) अम्ब ! समाश्वसिहि समाश्वसिहि । किमत्याहितम् ? अपि कुशलं समराङ्गणेष्वप्रतिरथस्य जयद्रथस्य ? । **( णः )**

**माता**—जाद ! कुदो कुसलम् ? । ( जात कुतः कुशलम् ? ) **( त )**

**राजा**—कथमिव ? **( ता )**

---

**(णौ)** विचिन्त्य तयोरागमनकारणविषये विचारं कृत्वा । अभिमन्योरर्जुनपुत्रस्य वधेनास्मत्कृतेन हननेन अमर्षितैः क्रुद्धैः पाण्डुपुत्रैः पाण्डवैः किंचित् किमपि अत्याहितं महद्भयं तज्जनकं कर्मेति यावत् । न आचेष्टितं न कृतं भवेत् । संभावनायां लिङ् । कच्चिदितीष्टप्रश्ने । 'कच्चित्कामप्रवेदने' इत्यमरः ।

**(णं)** संभ्रान्ता भीता प्रविशतीति प्रत्येकं संबध्यते । उभे दुःशला जयद्रथमाता च । सास्रं अस्रसहितं यथा तथा ।

**(णः)** ससंभ्रमं सत्वरम् । अम्ब मातः ! जयद्रथस्य बन्धुत्वसंभावनात्तन्मातरि मातृत्वव्यवहारः । समाश्वसिहि धीरा भवेत्यर्थः । अत्याहितं महद्भयं किं किंस्वरूपं प्राप्तमिति शेषः । अपीति प्रश्ने । समराङ्गणेषु संग्रामभूमिषु अप्रतिरथस्य निरुपमस्य जयद्रथस्य ।

**(त)** जात वत्स ! पुत्रस्य पुत्रतुल्यानां च वत्सादिवज्जातेत्यपि संबोधनपदम् । कुतः कस्मात् कुशलं भवतु । नास्ति कुशलमित्यर्थः ।

**(ता)** अकुशलस्य स्वरूपं पृच्छति कथमिवेति । कथं किंप्रकारकमिव । अकुशलस्य कः प्रकार इत्यर्थः ।

**माता**—( साशङ्कम् । ) अज्ज क्खु पुत्तवहामरिसिदेण गाण्डीविणा अणत्थमिदे दिवसणाहे तस्स वहो प्पडिण्णादो। ( अद्य खलु पुत्रवधामर्षितेन गाण्डीविनानस्तमिते दिवसनाथे तस्य वधः प्रतिज्ञातः । ) (ति)

**राजा**—( सस्मितम् । ) इदं तदस्रकारणमम्बाया दुःशलायाश्च ? । पुत्रशोकादुन्मत्तस्य किरीटिनः प्रलापैरेवमस्था ?। अहो मुग्धत्वमबलानाम् । अम्ब ! कृतं विषादेन । वत्से दुःशले! अलमश्रुपातेन । कुतश्चायं तस्य धनंजयस्य प्रभावो दुर्योधनबाहुपरिघरक्षितस्य महारथजयद्रथस्य विपत्तिमुत्पादयितुम् । (ती)

**माता**—जाद! ते हि पुत्तबन्धुवहामरिसुद्दीविदकोवाणला अणपेक्खिदसरीरा वीरा परिक्कामन्ति । ( जात! ते हि पुत्रबन्धुवधामर्षोद्दीपितकोपानला अनपेक्षितशरीरा वीराः परिक्रामन्ति । ) (तु)

---

(ति) खलु निश्चये । पुत्रवधामर्षितेन पुत्रस्याभिमन्योर्वधेनामर्षितः क्रुद्धस्तेन । गाण्डीविना गाण्डीवसंज्ञकधनुर्युक्तेनार्जुनेन दिवसनाथे सूर्ये अनस्तमिते अस्तमप्राप्ते सति । सूर्यास्तात्प्रागित्यर्थः । तस्य जयद्रथस्य ।

(ती) सस्मितं यथा तथा।प्रतिज्ञायामवज्ञा स्मिते हेतुः। यदस्रकारणं अश्रुकारणं तदिदमिति प्रश्ने काकुः । पुत्रविषयकाच्छोकात् उन्मत्तस्य उन्मादं प्राप्तस्य । किरीटिनः अर्जुनस्य प्रलापैः अनर्थकवचनैः । एवमीदृशी अवस्था स्थितिः युवयोरिति शेषः । अत्रापि प्रश्नः । मुग्धत्वमज्ञत्वम् । 'मुग्धः सुन्दरमूर्खयो' रित्यमरः । अयं संप्रत्यनुभूयमानः । धनञ्जयस्यार्जुनस्य प्रभावः सामर्थ्यं कर्ता । दुर्योधनस्य बाहुपरिघाभ्यां परिघ ( अर्गला ) सदृशाभ्यां बाहुभ्यां परिरक्षितस्य । दुर्योधन इत्यात्मनामग्रहणं बलावष्टम्भं द्योतयति । महारथ 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः ।' इत्युक्तलक्षणो जयद्रथः तस्य । विपत्तिं पीडाम् 'विपत्तिरपि यातनापदोर्योषित् ।' इति मेदिनी । उत्पादयितुं जनयितुं शकधृषेत्यादिना अस्त्यर्थे तुमुन् । कुतः कस्मात् ।

(तु) पुत्रस्य बन्धूनां च वधस्य योऽमर्षोऽसहनं तेनोद्दीपितः कोपानलः क्रोधाग्निर्येषां ते । ते वीराः शूराः पाण्डवाः । अनपेक्षितशरीरा न अपेक्षितं शरीरं यैस्तथाभूताः सन्तः । शरीरानपेक्षिणः सन्त इत्यर्थः । परिक्रामन्ति संचरन्ति ।

**राजा**—( सोपहासम् । ) एवमेतत् । सर्वजनप्रसिद्धैवामर्षिता पाण्डवानाम् । पश्य । (तू)

हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
पाञ्चाली मम राजचक्रपुरतो गौर्गौरिति व्याहृता ।
तस्मिन्नेव ततज्यगाण्डिवधरो नासीत्पृथानन्दनो
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ? ॥ २५ ॥

**माता**—असमत्तप्पडिण्णाभारस्स अप्पवहो से प्पडिण्णादो । ( असमाप्तप्रतिज्ञाभारेणात्मवधोऽनेन प्रतिज्ञातः । (ते)

---

(तू) एवं यथा वदसि तथा एतत् । जयद्रथवधे चेष्टमानाः पाण्डवा अवश्यं म्रियेरन्दुर्बलत्वात् । तथापि यत्तत्र चेष्टन्ते तेन नास्त्यमीषां स्वशरीरापेक्षेति सत्यमुक्तं त्वयाऽनपेक्षितशरीरा इतीति भावः । अमर्षिता असहिष्णुता कोपनता वा ।

(२५) हस्तेति । मम आज्ञया दुःशासनेन कर्त्रा हस्तेनाकृष्टमत एव च विलोलं चञ्चलं केशवसनं केशा वसनं च यस्यास्तथाभूता पाञ्चाली द्रौपदी राजचक्रस्य राजसमूहस्य पुरतः पुरस्तात् (अग्रभागे) 'पुरःपुरस्तात्पुरतः ' इति हैमः । एतच्च विशेषतोऽवमानं द्योतयति । राजचक्रसमिताविति पाठो युक्तः सुगमश्च । गौर्गौर्धेनुर्धेनुः इति व्याहृता उक्ता । पतिपञ्चकरूपानेकपुरुषभोग्यत्वेन गोसादृश्याद्दीनत्वाद्वा गौर्गौरिति व्याहारः । तस्मिन् आत्मभार्यावज्ञातरि दुशासने एव । पृथानन्दनः पृथायाः कुन्त्या नन्दन आनन्दजनकः पुत्रः । मातुरेवानन्दजनको न तु वीराणामिति भावः । अर्जुनः कर्ता । तता विस्तृता कोटिं प्रापितेत्यर्थः ज्या मौर्वी यस्य तथाभूतं सज्जीकृतमित्यर्थः यत् गाण्डिवं एतन्नामकं धनुः तस्य धरः शरक्षेपार्थं धारकः । 'बीभत्सुः कर्णजित्तस्य गाण्डीवं गाण्डिवं धनुः ।' इत्यभिधानचिन्तामणिः । तत् राजचक्रसमक्षं भार्याया अवमाननं यूनस्तरुणस्य तत्र च क्षत्रियाणां शौर्यैकसाराणां वंशजातस्य तत्रापि च कृतिनः संग्रामे कुशलस्य । 'कृती कुशल इत्यपी ' त्यमरः । क्रोधास्पदं कोपस्थानं कोपजनकमिति यावत् । न किम् ? कोपस्थानमेवेत्यर्थः । सत्यप्येवं यन्नापकृतं तेन दुःशासनस्य ततोऽस्य सामर्थ्याभाव एव प्रतीयते ततश्चानेन प्रतिज्ञातेऽपि जयद्रथवधे न कापि भीतिरितिभावः । शार्दूलविक्रीडितं वृत्तम् ।

(ते) तस्य असमाप्तः पूर्णतां न गमितः प्रतिज्ञाभारो येन तथाभूतस्य सतः आत्मवधः प्रतिज्ञातः अस्ति । तेनेत्यर्थात् ।

**राजा**—यद्येवमलमानन्दस्थानेऽपि ते विषादेन । ननु वक्तव्यमुत्सन्नः सानुजो युधिष्ठिर इति । मातः! का शक्तिरस्ति धनंजयस्यान्यस्य वा कुरुशतपरिवारवार्धितमहिम्नः कृपकर्णद्रोणाश्वत्थामादिमहारथपराक्रमाद्द्विगुणीकृतनिरावरणविक्रमस्य नामापि ग्रहीतुं ते तनयस्य ? । अयि सुतपराक्रमानभिज्ञे! (तै)

> धर्मात्मजं प्रति यमौ च कथैव नास्ति
> मध्ये वृकोदरकिरीटभृतोर्बलेन ।
> एकोऽपि विस्फुरितमण्डलचापचक्रं
> कः सिन्धुराजमभिषेणयितुं समर्थः ? ॥ २६ ॥

---

(तै) आनन्दस्स्थानत्वं विवृणोति नन्विति । ननु निश्चितं वक्तव्यं त्वयेति शेषः । उत्सन्नो विनष्टः । इतीत्यस्य वक्तव्यमित्यनेन संबन्धः । अर्जुनैकावलम्बनत्वात्तस्य । अर्जुनस्य च जयद्रथवधासमर्थतया प्रतिज्ञानुसारेण मरणस्यावश्यम्भावित्वादिति भावः । अर्जुनस्य प्रतिज्ञापूर्तेरसंघटनीयत्वमाह । मातरिति । धनञ्जयस्यार्जुनस्य अन्यस्य तद्भिन्नस्य वा । ते तनयस्य पुत्रस्य जयद्रथस्य नामापि ग्रहीतुं का शक्तिरस्ति न कापीत्यर्थः । नाम्नोऽपि ग्रहणे न शक्तिः कुतः पुनर्वध इतिभावः । कीदृशस्य तनयस्य ? कुरुशतपरिवारवार्धितमहिम्नः कुरूणां कौरवाणां शतमेव परिवारस्तेन वर्धितो महिमा महत्त्वं यस्य तथाभूतस्य कुरुशतस्य परिवार इति वा विग्रहः । परिवारः परिजनः । कृपो द्रोणस्य श्यालः । कर्णोऽङ्गराजः कुन्त्याः कानीनः पुत्रः । द्रोणः प्रथितः कौरवाणां पाण्डवानां चाचार्यः । अश्वत्थामा द्रोणपुत्रः । एते आदयः प्रधाना येषु तेषां महारथानां सहायभूतानां पूर्वोक्तलक्षणविशिष्टानां वीराणां पराक्रमेण द्विगुणीकृतो द्विगुणतां नीतो निरावरणः अप्रच्छन्नः सर्वविश्रुत इतियावत् विक्रमः पराक्रमो यस्य तथाभूतस्य । सुतपराक्रमे पुत्रस्य जयद्रथस्य पराक्रमे अनभिज्ञे अज्ञे अज्ञातपुत्रपराक्रमे इत्यर्थः ।

(२६) पाण्डवेषु न कोऽपिजयद्रथपराभवे शक्त इत्याह धर्मात्मजमिति । धर्मस्यात्मजः पुत्रो युधिष्ठिरस्तं प्रति तद्विषये 'लक्षणेत्थम्भूतेत्यादिना कर्मप्रवचनीयसंज्ञायां कर्मप्रवचनीययुक्त इति द्वितीया । एवमुत्तरत्र । यमौ यमलौ ( युगपदुत्पन्नौ ) नकुलसहदेवौ प्रति तद्विषये च कथैव एते जयद्रथं पराजयेरन्नित्युक्तिरेव नास्ति । दुर्बलत्वादेतयोरिति भावः । वृकोदरो वृकनामाग्निरुदरे यस्य स भीमसेनः किरीटभृत् किरीटधरोऽर्जुनः तयोर्मध्ये

**भानुमती**—अज्जउत्त ! जइवि एव्वं तहवि गुरुकिदप्पडिण्णाभारो ठ्ठाणं क्खु सङ्काए । (आर्यपुत्र ! यद्यप्येवं तथापि गुरुकृतप्रतिज्ञाभारः स्थानं खलु शङ्कायाः ।) (तो)

**माता**—साहु ! कालोइदं भणिदं भाणुमदीए । (साधु ! कालोचितं भणितं भानुमत्या ।

**राजा**—आः ! ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः ? । पश्य । (तौ)

कोदण्डज्याकिणाङ्कैरगणितरिपुभिः कङ्कटोन्मुक्तदेहैः
श्लिष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः ।
रेणुग्रस्तार्कभासां प्रचलदसिलतादन्तुराणां बलाना-
माक्रान्ता भ्रातृभिर्मे दिशि दिशि समरे कोटयः संपतन्ति ॥ २७ ॥

---

एकः अन्यतरः अपि कः कर्ता । विस्फुरितं प्रस्फुरितं मण्डलं परिधिर्यस्य 'मण्डलं परिधौ कोठे ' इति मेदिनी । तथाभूतं चापचक्रं आकर्णकृष्टत्वाद्वलयाकारताम् पन्नतया चक्रसदृशं चापं धनुर्यस्य तथाभूतं आकर्णकृष्टचापमित्यर्थः । सिन्धुराजं सिन्धूनां राजानं जयद्रथम् । राजाहः सखिभ्य इति टच् । बलात् अभिषेणयितुं सेनयाऽभियातुम् । सेनाशब्दात्प्रातिपदिकाद्धात्वर्थे इति णिच् उपसर्गात्सुनोतीत्यादिना षत्वम् । 'अभिषेणनं तु स्यात्सेनयाभिगमो रिपौ ।' इति हेमचन्द्रः । समर्थः शक्तः । न कोपीत्यर्थात् । सेनासहायोऽपि अभिगन्तुमपि न समर्थः किमुतैकाकी निहन्तुमिति भावः । अत्राभिषेणनासामर्थ्यरूपस्यार्थस्याभिधाना द्वधासामर्थ्यमर्थादापद्यत इत्यर्थापत्तिरलङ्कारः । तल्लक्षणं तु ' दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते । ' इति । वसन्ततिलकाख्यं वृत्तम् ।

(तो) आर्यपुत्र भर्तः ! 'भर्तार्यपुत्र ' इति हैमः । गुरुः कृतायाः प्रतिज्ञाया भारो यस्य तथाभूतः कृतगुरुप्रतिज्ञ इत्यर्थः । अर्जुन इत्यर्थात्संबध्यते । शङ्काया भीतेः स्थानं प्रभव इति यावत् ।

(तौ) नाम संभावनायाम् । मम दुर्योधनस्यापि पाण्डवाः शङ्कास्थानं नाम ? नैतत्संभवतीति भावः ।

(२७) आत्मनः सामर्थ्यप्रतिपादनद्वारा पाण्डवानामसामर्थ्यमाह । कोदण्डेति । कोदण्डस्य धनुषो ज्यायाः मौर्व्याः किणानां शुष्काणामाघातजन्यव्रणानामङ्कािश्चिह्नानि

अपि च भानुमति! विज्ञातपाण्डवप्रभावे! किं त्वमप्येवमाशङ्कसे? । पश्य । (तं)

---

येषु ते तथाभूतैः । एतेन शरक्षेपे परिचयातिशयो द्योत्यते । न गणिता आदृता रिपवः शत्रवो यैस्तथाभूतैः । एतेन सामर्थ्यातिशयशालित्वं द्योत्यते । कङ्कटाः (कं शरीरं कटन्त आवृण्वते तथाभूताः) कवचानि आमुक्तानि परिहितानि येषु तथाभूता देहा येषां ते तैः। धृतकवचैरित्यर्थः । 'सन्नाहो वर्म कङ्कटः । जगरः कवचं' इति हैमः । आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । श्लिष्टानि संमर्दातिशयात्परस्परं संलग्नानि यानि आतपत्राणि (आतपात् त्रायन्ते तथाभूतानि) छत्राणि तैः कृत्वा सितानां श्वेतानां कमलानां वनस्य भ्रान्तिं उत्पादयद्भिर्जनयद्भिः । छत्राणां श्वेतत्वाद्भूयस्त्वाच्च सितकमलवनभ्रान्तिसमुद्भवः। मे मम भ्रातृभिः नैकसंख्यैर्बन्धुभिः कर्तृभूतैः समरे संग्रामे आक्रान्ताः कृताक्रमाः । आक्रमश्चाभिक्रमः अभ्याङोस्तुल्यार्थत्वात् । अभिक्रमश्च निर्भीकतया रणे शत्रून्प्रति यानम् । तदाह हेमचन्द्रः 'अभिक्रमो रणे यानमभीतस्य रिपून्प्रति ।' इति । निर्भयं कृताभियाना इत्यर्थः । प्रचलन्तीभिः असिलताभिः विलोलत्वादिना लतासदृशैरसिभिः खड्गैः दन्तुराणां नतोन्नतानाम् । उच्यते खड्ग उन्नतत्वं प्रहरणे च पाते नतत्वमित्युन्नतानतत्वमवबोध्यम् । 'दन्तुरस्तून्नतरदे तथोन्नतनते त्रिषु' इति मेदिनी। रेणुभिः पलायनवशादुत्थिताभिर्धूलिभिः ग्रस्ताः तिरोहिता अर्कस्य सूर्यस्य भासः कान्तयो यैस्तथाभूतानां बलानां शत्रुसैन्यानाम्। अवयवापेक्षया बहुवचनम् । कोटयः शतं लक्षाणि दिशि दिशि प्रतिदिशं संपतन्ति पलायन्त इति यावत् । पतेः प्रयोगश्च पलायनातिशयं द्योतयति । अभिगमनमात्रेण च शत्रुसैन्यानां दिशि दिशि पलायनं विक्रमातिशयशालितां भ्रातॄणां व्यञ्जयति । अत्र ज्याकिणाङ्कैरित्यत्र व्याततज्यैरितिपाठे कोदण्डेषु व्याततः कोटिं प्रापिता ज्या यैस्तथाभूतैः सज्जधनुर्भिरित्यर्थः । कङ्कटामुक्तदेहैरित्यत्र कङ्कटाबद्धदेहैरिति पाठे कङ्कटैराबद्धा आवेष्टिता देहा येषामिति कङ्कटोन्मुक्तदेहैरितिपाठेच कङ्कटैः कवचैरुन्मुक्तास्त्यक्ता देहा येषामित्यर्थः शत्रुकृतप्रहारशङ्काशून्यत्वाद्विनैव कवचधारणं संग्रामार्थं प्रस्थितैरिति भावः । युक्तश्चायमपि पाठः । ध्वस्तार्कभासामिति पाठः सुगमः । द्वितीयचरणे भ्रान्तिमानलङ्कारः 'साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान्प्रतिभोत्थिता ।' इतिलक्षणात् । तृतीये चासेर्लतासादृश्यादुपमा । तयोश्च परस्परानपेक्षतया ऽवस्थानात्संसृष्टिः । 'मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यत' इत्युक्तेः । स्रग्धरा वृत्तम् ।

(तं) विज्ञातो विशेषेण ज्ञातः पाण्डवानां प्रभावः सामर्थ्यं यया तथाभूते! । पाण्डवानां प्रभावस्य यत्पारमार्थिकं तुच्छतमं स्वरूपं तत्ते विदितमेवेति भावः। एवं अर्जुनोऽनिष्ट-

दुःशासनस्य हृदयक्षतजाम्बुपाने
　　दुर्योधनस्य च यथा गदयोरुभङ्गे ।
तेजस्विनां समरमूर्धनि पाण्डवानां
　　ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा ॥ २८ ॥

कः कोऽत्र भोः ? । जैत्रं मे रथमुपकल्पय तावत् । यावदहमपि तस्य प्रगल्भपाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञावैलक्ष्यसंपादितमशस्त्रपूतं मरणमुपदिशामि । **(तः)**

( प्रविश्य )

**कञ्चुकी**—देव !

---

मुत्पादयिष्यतीत्यादि आशङ्कसे संशयं कुरुषे । पाण्डवानामसामर्थ्यस्यानेकशो निश्चितत्वाच्छङ्काऽपि ते न युक्तेति भावः ।

(२८) कृतगुरुप्रतिज्ञतया शङ्कास्थानमिति भानुमतीवचनं निराकरोति । दुःशासनस्येति । समरमूर्धनि रणशिरसि युद्धमध्य इत्यर्थः तेजस्विनां पराक्रमवतामित्युपहासस्तेन विपरीतलक्षणया संग्रामे पराक्रमशून्यानां गेहेनर्दिनामित्यर्थः । पाण्डवानां दुःशासनस्य हृदयस्य संबन्धि क्षतजं रक्तमेवाम्बु जलं तस्य पाने प्राशनविषये । च किं च । गदया करणभूतया दुर्योधनस्य ऊरुभङ्गे ऊर्वोर्भञ्जनविषये यथा यादृशी प्रतिज्ञा तथा तादृश्येव निष्फलेत्यर्थः जयद्रथवधेऽपि जयद्रथहननविषयेऽपि ज्ञेया । इतः पूर्वं कृतयोरनयोः प्रतिज्ञयोर्मिथ्यात्वेनेयमपि मिथ्यैवेति विज्ञातव्येति भावः । वसन्ततिलका वृत्तम् ।

(तः) जैत्रं जयनशीलम् । जेतृशब्दात्प्रज्ञादित्वादण् । उपकल्पय सज्जं कृत्वा समीपमानय । उपपादयेति पाठेऽप्ययमेवार्थः । तावत् त्वरया । यावत् निश्चयेन । प्रगल्भपाण्डवस्य धृष्टस्य पाण्डुपुत्रस्यार्जुनस्य मरणमित्यनेन संबन्धः । 'गल्भ' धाष्ट्र्यं इत्यतः प्रपूर्वात्पचाद्यच् । (प्रकर्षेण गल्भते धाष्ट्र्यं करोतीति प्रगल्भः । ) मिथ्याभूतया प्रतिज्ञया यद्वैलक्ष्यं लज्जा आश्चर्यं वा तेन संपादितं जनितम् । अशस्त्रपूतं शस्त्रेण शस्त्रयोगेन पूतं न भवति तथाभूतम् । संग्रामे शस्त्रप्रहारवशान्मृता वीराः स्वर्गं गच्छन्तीति तथाविधस्य मरणस्य शस्त्रपूतत्वं प्रतिज्ञाया मिथ्यात्वेनोपपादितस्य च तथात्वाभावादशस्त्रपूतत्वम् । उपदिशामि शिक्षयामि ददामीति यावत् । दिश अतिसर्जन इत्यतो वर्तमानसामीप्ये भविष्यति लट् । उपसर्गोऽत्र धात्वर्थानुवर्ती ।

उद्घातक्वणितविलोलहेमघण्टः
प्रालम्बद्विगुणितचामरप्रहासः ।
सज्जोऽयं नियमितवल्गुवल्गिताश्वः
शत्रूणां क्षपितमनोरथो रथस्ते ॥ २९ ॥

**राजा**—देवि ! प्रविश त्वमभ्यन्तरमेव । ( 'यावदहमपि तस्य प्रगल्भपाण्डवस्य' इत्यादि पठन्परिक्रामति । )

( इति निष्क्रान्ताः सर्वे । )

## इति द्वितीयोऽङ्कः ।

---

(२९) उद्घातेति । उद्घातेन नतोन्नतभूमिस्खलनादिजन्येनाघातेन क्वणिता विलोलाश्चञ्चला हेम्नो घण्टा यत्र तथाभूतः । प्रालम्बेन ध्वजे लम्बमानेन माल्येन द्विगुणितः चामराणां चमरसंज्ञकमृगकेशविनिर्मितानां व्यजनानां ध्वजगतानां प्रहासः प्रकृष्टहासतुल्या श्वेतप्रभा यत्र तथाभूतः । चामराणां श्वेतत्वात्प्रालम्बस्य च तथात्वात्कान्तेर्द्वैगुण्यम् । हासश्च श्वेत इति कवीनां समयः: 'धवलता वर्ण्यते हासकीर्त्यो' रित्युक्तेः । 'प्रालम्बमृजुलम्बि (माल्यं) स्यात्' इत्यमरः । नियमिता रश्मिभिर्नियन्त्रिता वल्गुवल्गिता मनोहरगतयोऽश्वा यत्र तथाभूतः 'वल्गुः स्याच्छगले पुंसि सुन्दरे त्वभिधेयवत् ।' इति मेदिनी । वल्गितं च हयानां गतिविशेषः । तल्लक्षणमाह हेमचन्द्रः 'वल्गितं पुनः । अग्रकायसमुल्लासात्कुञ्चितास्यं नतत्रिकम् ।' इति । नियमितवल्गिताकुलाश्व इति पाठे तु नियमितं नियन्त्रितं वल्गितं पूर्वोक्तलक्षणा गतिर्येषां तथाभूता अत एवाकुला अश्वा यत्रेत्यर्थः । शत्रूणां, षष्ठ्या मनोरथेन संबन्धः । क्षपितमनोरथः नाशिताभिलाषः शत्रुपराजयशील इत्यर्थः । अयं ते तव रथः सज्जः अस्तीति शेषः । अत्र रथस्वरूपोपवर्णनात् स्वभावोक्तिः । 'स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ।' इति लक्षणात् । प्रहर्षिणी वृत्तम् । 'त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ।' इति लक्षणात् ।

---

**इति श्रीमत्पण्डितराजवंशावतंसवैयाकरणशेखरश्रीकान्ताचार्यसूरिणां छात्रेण वासिष्ठेन राशिवडेकरोपाह्वेन श्रीसदाशिवविबुधसूनुना श्रीमदप्पाशर्मविद्यावाचस्पतिना प्रणीतायां बालबोधिन्याख्यायां वेणीसंहारव्याख्यायां द्वितीयोऽङ्कः ।**

**श्रीसदाशिवार्पणमस्तु ।**

# वेणीसंहारे

## तृतीयोऽङ्कः ।

( ततः प्रविशति विकृतवेषा राक्षसी । ) (थ)

**राक्षसी**—(विकृतं विहस्य । सपरितोषम् ।) (था)

हदमाणुशमंशभोअणे कुम्भशहश्शं वशाहिं शंचिए ।

अणिशं अ पिवामि शोणिअं वलिशशदं शमले हुवीअदु ॥ १ ॥

---

### श्रीशिवः शरणम् ।

### बालबोधिन्यां नाम वेणीसंहारव्याख्यायां

## तृतीयोऽङ्कः ।

### श्रीगणेशाय नमः ।

**(थ)** दुर्योधननिष्क्रमणोत्तरमिदानीं यावद्वृत्तानामतः परं च वर्तिष्यमाणानां कथांशानामुपसूचनाय प्रवेशकमुपक्षिपति ततः प्रविशतीति । प्रवेशकलक्षणं त्वग्रे वक्ष्यते । ततो दुर्योधननिष्क्रमणानन्तरं विकृतवेषा बीभत्सवेषा 'विकृतं त्रिषु बीभत्स' इति मेदिनी । राक्षसी वसागन्धाख्या राक्षसस्त्री ।

**(था)** विकृतं असंस्कृतं ग्राम्यमितियावत् यथा स्यात्तथा । सपरितोषं यथा तथा विपुलान्नपानलाभात्परितोषः ।

(१) हतेति । अहं अनिशं निरन्तरं हतानां मानुषाणां मांसस्य भोजने भक्षणावसरे वसाभिः मांसस्नेहैः 'शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता ।' इति सुश्रुते । चरबीतिख्यातैः संचितं पूरितमित्यर्थः कुम्भसहस्रं घटसहस्रं । कुम्भसहस्रपरिमितां वसामित्यर्थः । च किंच । शोणितं रक्तं पिबामि । अतः समरो युद्धं वर्षशतं शतं वर्षाणि । 'कालाध्वनोरत्यन्तसंयोग' इति द्वितीया । अविच्छेदेन वर्षशतं भवत्वित्यर्थः । आशिषि लोट् । समरभवनाशंसन चरणत्रयगतस्यार्थस्य हेतुत्वाद्वाक्यगतहेतुकं काव्यलिङ्गमलङ्कारः ।

( नृत्यन्ती सपरितोषम् । ) जइ शिन्धुलाअवहदिअहे विअ दिअहे दिअहे शमलकम्म पडिवज्जइ अज्जुणे तदो पज्जत्तभलिदकोट्ठागाले मंशशोणिएहिं मे गेहे हुवीअदि । ( परिक्रम्य दिशोऽवलोक्य । ) अह कहिं क्खु गदे मे लुहिलप्पिए हुविस्सदि । होदु । शद्दावइश्शं दाव । अले लुहिलप्पिआ लुहिलप्पिआ ! इदो एहि । ( हतमानुषमांसभोजने कुम्भसहस्रं वसाभिः संचितम् । अनिशं च पिबामि शोणितं वर्षशतं समरो भवतु ॥ १ ॥ यदि सिन्धुराजवधदिवस इव दिवसे दिवसे समरकर्म प्रतिपद्यतेऽर्जुनस्तदा पर्याप्तभृतकोष्ठागारं मांसशोणितैर्मे गृहं भविष्यति । अथ क खलु गतो मे रुधिरप्रियो भविष्यति । भवतु । शब्दायिष्ये तावत् । अरे रुधिरप्रिय रुधिरप्रिय ! इत एहि । (थि)

( ततः प्रविशति तथाविधो राक्षसः । ) (थी)

**राक्षसः**—( श्रमं नाटयन् । ) (थु)

---

(थि) नृत्यन्तीति पात्रस्य नीचत्वाद्धर्षातिरेकवशान्नृत्यम् । सिन्धुराजो जयद्रथः । समरकर्म युद्धव्यापारम् । प्रतिपद्यते अङ्गीकरोति । वर्तमानसामीप्ये भविष्यति लट् । तदा तर्हि । मांसशोणितैः मांसै रक्तैश्च करणभूतैः मे गृहं पर्याप्तं अत्यन्तं भृतं पूर्णं कोष्ठागारं मध्यगृहं धान्यादिसंग्रहार्थं वा कृतो गृहप्रदेशविशेषः कोठार इति महाराष्ट्र्यां ख्यातो यत्र तथाभूतम् ‘ कामं प्रकामं पर्याप्तं नितान्तं भृशमुच्यत ’ इति हलायुधः । ‘ कोष्ठः कुसूल आत्मीये मध्ये कुक्षेर्गृहस्य च’ । इति मेदिनी । अत्र पर्याप्तभरितेत्यपि क्वचित् पाठः । तत्र भरितं व्याप्तमित्यर्थः । ‘ भरितं निचितं व्याप्त’ मिति हैमः । एतेन जयद्रथवधरूपो वृत्तः कथांशः सूचितः । दिशोऽवलोक्य दिक्षु दृष्टिं विक्षिप्य । आत्मनः प्रियस्य रुधिरप्रियस्यान्वेषणाय दिशामवलोकनम् । अथ अनन्तरं यदाऽऽवामेकत्र स्थितौ ततः परमित्यर्थः । खलु इति वितर्के । रुधिरप्रिय इति एतस्या भर्तुर्नाम । शब्दायिष्ये शब्दमाह्वानलक्षणं करोमि । शब्दवैरेत्यादिना क्यङ् । आह्वानं करिष्यामीत्यर्थः । अरे इति संबोधने । रुधिरप्रिय रुधिरप्रियेति संभ्रमे द्विर्वचनम् । इतः अत्र । आद्यादित्वात्सप्तम्यर्थे तसिः । एहि आगच्छ । इण् गताविल्यत आङ्पूर्वाल्लोट् ।

(थी) तथाविधः राक्षसीसदृशाकारः ।

(थु) नाटयन् अभिनयन् । श्रमस्थाने भ्रमणमित्यपि क्वचित्पाठः । तत्र श्रमजन्यं भ्रमणमित्यर्थः ।

पच्चग्गहदाणं मंशए जइ उण्हे लुहिले अ लब्भइ ।
ता एशे मह पलिश्शमे क्खणमेत्तं एव्व लहु णश्शइ ॥ २ ॥

( प्रत्यग्रहतानां मांसं यद्युष्णं रुधिरं च लभ्येत । तदैष मम परिश्रमः क्षणमात्रमेव लघु नश्येत् ॥ २ ॥ )

( राक्षसी पुनर्व्याहरति । ) (थू)

**राक्षस**—( आकर्ण्य । ) अले के एशे मं शद्दावेदि । ( विलोक्य । ) कहं पिआ मे वशागन्धा ? । ( उपसृत्य । ) वशागन्धे ! कीश मं शद्दावेशि ? । (थे)

लुहिलाशवपाणमत्तिए लणहिण्डन्तखलन्तगत्तिए ।
शद्दाअशि कीश मं पिए पुलिशशहश्शं हदं शुणीअदि ॥ ३ ॥

---

(२) प्रत्यग्रेति । प्रत्यग्रं अभिनवं सद्य इति यावत्। प्रत्यग्रोऽभिनवो नव्य इत्यमरः। अत्रैतत्क्रियाविशेषणम्।हतानां मांसं रुधिरं रक्तं च यदि लभ्येत प्राप्येत अशितुं पातुं चेत्यर्थात्। तदा एषः अनुभूयमानः मम परिश्रमः लघु सत्वरं 'लघु क्षिप्रमरं द्रुतम् । सत्वर' मित्यमरः । क्षणमात्रं क्षणमेव, कार्यबाहुल्येन पुनः परिश्रमस्य संभवात् । नश्यति नङ्क्ष्यतीत्यर्थः । वर्तमानसामीप्ये लट् ।

(थू) व्याहरति वदति आह्वयतीति यावत् ।

(थे) अरे इति वितर्के । कथमिति विस्मये अवितर्कितमालोकनाद्विस्मयः। शब्दायस आह्वयसि ?

(३) रुधिरेति । रुधिरमेव आसवो मद्यम् ।एतच्चापक्वत इक्षुरसान्निष्पाद्यते । तदाह माधवः 'शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् ' इति । तस्य पानेन मत्तिके मत्ते । रणे संग्रामभूमौ हिण्डनेन गमनेन स्खलन्ति श्रमातिशयवशात्स्रंसमानानीति यावत् गात्राणि अवयवा यस्यास्तथाभूते । यद्वा रणे संग्रामे हिण्डने गमने स्खलत् कबन्धादिसंकुलत्वाद्भूमेः स्खलितं प्राप्नुवत् गात्रं शरीरं यस्यास्तथाभूते । उभयत्रापि स्वार्थे कः । मां कस्माच्छब्दायस आह्वयसि ? पुरुषशतं हतं युद्ध इत्यर्थात् । इति श्रूयते । मयेति शेषः । तेन तत्र मयाऽवश्यं गन्तव्यमिति समयेऽस्मिन्कारणमन्तरा न शक्यमवस्थातुम् । अतः कथयाह्वानकारणमिति भावः । पद्यमिदं बहुष्वेव पुस्तकेषु न दृश्यते न चाप्येतदावश्यकमिव प्रतिभाति ।

(अरे कैषा मां शब्दायते । कथं प्रिया मे वसागन्धा ? । वसागन्धे ! कस्मान्मां शब्दायसे? । रुधिरासवपानमत्तिके ! रणहिण्डनस्खलद्गात्रिके । शब्दायसे कस्मान्मां प्रिये ! पुरुषसहस्रं हतं श्रूयते ॥ ३ ॥)

**राक्षसी**—अले लुहिलप्पिआ ! एदं क्खु मए तुह कालणादो पच्चग्गहदश्श कश्शवि लाएशिणो प्पहूदवशाशिणेहचिक्कणं कोण्हं णवलुहिलं अग्गमंशं अ आणीदम् । ता पिवाहि णम् । ( अरे रुधिरप्रिय ! इदं खलु मया तव कारणात्प्रत्यग्रहतस्य कस्यापि राजर्षेः प्रभूतवसास्नेहचिक्कणं कोष्णं नवरुधिरमग्रमांसं चानीतम् । तत्पिबैनत् । (थै)

**राक्षसः**—( सपरितोषम् । ) वशागन्धे! शुट्ठु । शोहणं तुए किदम् । बलिअह्मि पिवाशिए । ता उवणेहि । ( वसागन्धे ! सुष्ठु । शोभनं त्वया कृतम् । बलवदस्मि पिपासितः । तदुपनय । ) (थो)

---

(थै) प्रत्यग्रहतस्य नवनिहतस्य अव्यवहितपूर्वकाले मारितस्येत्यर्थः । कस्यापि विशिष्टतयाऽविज्ञातस्य । राजर्षेः राजा ऋषिरिव पूज्यत्वाद्राजर्षिः तस्य । मांसमित्यनेन नवरुधिरमित्यनेन च संबन्धः । रुधिरादे राजर्षिजन्यत्वमुपपादयितुं विशेषयति प्रभूतेति । प्रभूतेन प्रचुरेण वसारूपेण स्नेहेन चिक्कणं स्निग्धम् । 'चिक्कणं मसृणं स्निग्धमि' त्यमरः । 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' इति च । नहि वसाप्रचुरत्वमन्यत्र संभवतीति राजर्षेरेवैतदिति संभाव्यत इति भावः । कोष्णं ईषदुष्णम् । 'ईषदर्थे च' इति कोः कादेशः । प्रत्यग्रहतत्वस्य ज्ञापकमेतत् । नवं नवीनं पूर्वमनास्वादितमित्यर्थः । रुधिरं रक्तम् । अग्रमांसं बुक्कापरपर्यायं काळीज इति ख्यातम् । 'बुक्काग्रमांसं हृदय' मित्यमरः । एतत् नवरुधिरं पिब अर्थादेव अग्रमांसमप्यशानेति लभ्यते ।

(थो) सपरितोषं परितोषेण तुष्ट्या सहितं यथा तथा वदतीति शेषः । अभीष्टद्रव्यलाभात्परितोषः । वसागन्धेति राक्षस्या नाम । सुष्ठु साधु इति वसागन्धायाः प्रशंसा । त्वया कर्त्र्या शोभनं साधु नवरुधिरानयनादिकं कर्म कृतम् । कुत इत्याह बलवदिति । बलवत् अत्यन्तं पिपासितः संजाता पिपासा तृषा यस्मिंस्तथा विधः । अस्मि । 'उदन्या तु पिपासा तृट् तृष्णे' त्यमरः । तत् तस्मात् उपनय समीप आनय अर्पयेति यावत् । अत्र तदुपनयेत्यत्र यत्कोष्णं कोष्णं रुधिरमानीतमिति बहुषु पुस्तकेषु संदृश्यते । तन्न युक्तम् । बलवदस्मि पिपासित इत्येतावतैवाकाङ्क्षायाः पूर्णत्वेन यदित्यादिना शोभनत्वस्य विवरणानौचित्यात् ।

**राक्षसी—**अले लुहिलप्पिआ ! एदिशे वि णाम हदणलगअतुलङ्गमशोणिअवशाशमुद्दुश्शंचले शमले पडिब्भमन्ते तुमं पिवाशिएशित्ति अच्चलिअं अच्चलिअम् । ( अरे रुधिरप्रिय ! ईदृशेऽपि नाम हतनरगजतुरङ्गमशोणितवसासमुद्रदुःसंचरे समरे परिभ्रमंस्त्वं पिपासितोऽसीत्याश्चर्यमाश्चर्यम् । ) (थौ)

**राक्षसः—**अइ शुत्थिदे ! णं पुत्तशोअशन्तत्तहिअअं शामिणीं हिडिम्बादेवीं पेक्खिदुं गदह्मि । ( अयि सुस्थिते ! ननु पुत्रशोकसंतप्तहृदयां स्वामिनीं हिडिम्बादेवीं प्रेक्षितुं गतोऽस्मि । ) (थं)

**राक्षसी—**लुहिलप्पिआ! अज्जवि शामिणीए हिडिम्बादेवीए घडुक्कअसोएण उवशमइ ?। ( रुधिरप्रिय ! अद्यापि स्वामिन्या हिडिम्बादेव्या घटोत्कचशोको नोपशाम्यति ? । ) (थः)

---

परेतु 'राक्षसः—वसागन्धे! सुष्ठु त्वया कृतम् । राक्षसी—अरे गृहाणैतद्धस्तिकपालम् । पिब शोणितासवम् । राक्षसः—बलवदस्मि पिपासितस्तदुपनय । ' इत्यन्यथैव पठन्ति । तत्र हस्तिकपालमिति हस्तिनः शिरोस्थि 'शिरोऽस्थनि । कपालकर्परौ तुल्यौ ' इति हैमः । शोणितासवं शोणितरूपं मद्यम् । इत्यर्थः ।

(थौ) नामेति विस्मये । आश्चर्यमाश्चर्यमित्येतदस्यैव विवरणम् । हतानां नराणां गजानां तुरङ्गमाणामश्वानां च शोणितस्य रक्तस्य वसाया मांसस्नेहस्य च समुद्रेण दुःसंचरे दुःखेन संचरितुं शक्ये । ईदृशे एवंविधे समरे समरभूमाविति यावत् । परिभ्रमन् संचरन् । आश्चर्यमाश्चर्यहेतुः । पिपासाप्रशमनोपयुक्तस्य शोणितादेस्तत्र वैपुल्येपि पासितत्वादाश्चर्यम् । अत्यन्ताश्चर्यद्योतनाय द्विरुक्तिः ।

(थं) सुस्थिते शोभनं दुःखसंपर्कशून्यं स्थितमवस्थानं यस्यास्तथाभूते । एतेनात्मनो दुःस्थितत्वं गम्यते । नन्वित्यवधारणे । पुत्रस्य घटोत्कचस्य संबन्धिना शोकेन संतप्तं हृदयं यस्यास्तथाभूतां, स्वामिनीत्यत्र ऋन्नेभ्य इति ङीप् । तां हिडिम्बां नाम राक्षसीम् । अस्यामेव भीमसेनात्पुत्रो घटोत्कचः समुत्पन्नः । प्रेक्षितुं द्रष्टुं तदर्थमेवेत्यर्थः । ननुशब्दस्यावधारणार्थकत्वात् । तदेककर्मणः सान्निहितेऽपि शोणितादौ नासीदादर इति भावः । अस्मीति वर्तमानसामीप्ये भूते लट् । एतेन च वाक्येन घटोत्कचनिधनरूपो वृत्तः कथांशः सूचितः ।

**राक्षसः**—वशागन्धे! कुदो शे उवशमे । केवलं अहिमण्णुशोअशमाणदुक्खाए शुभद्दादेवीए जण्णशेणीए अ कधं कधं वि शमश्शाशीअदि । ( वसागन्धे! कुतोऽस्या उपशमः? । केवलमभिमन्युशोकसमानदुःखया सुभद्रादेव्या याज्ञसेन्या च कथं कथमपि समाश्वास्यते । (द)

**राक्षसी**—लुहिलप्पिआ! गेण्ह एदं हत्थिशिलक्कवालशंचिअं अग्गमंशोवदंशम् । पिवाहि शोणिआशवम् । ( रुधिरप्रिय! गृहाणैतद्धस्तिशिरःकपालसंचितमग्रमांसोपदंशम् । पिब शोणितासवम् । ) (दा)

**राक्षसः**—( तथा कृत्वा । ) वशागन्धे! अह किअप्पहूदं तुए शंचिअं लुहिलं अग्गमंशं अ । ( वसागन्धे! अथ कियत्प्रभूतं त्वया संचितं रुधिरमग्रमांसं च ?। ) (दि)

---

(थः) घटोत्कचशोकः । उद्गताः कचाः केशा अस्मात्स उत्कचः घटे तत्सदृशे शिरसि उत्कचो घटोत्कचः राक्षसविशेषः । अस्य च नाम्नो निरुक्तिर्महाभारत आदिपर्वणि १५६ अध्यायेऽभिहिता यथा—'घटो ह्यस्योत्कच इति माता तं प्रत्यभाषत । अब्रवीत्तेन नामास्य घटोत्कच इति स्मह ॥' इति । घटपदं चात्र तुत्तुल्यत्वाच्छिरःपरम् ।

(द) अस्याः । शोकस्येति शेषः । उपशमः शान्तिः कुतः? अभिमन्योः एतन्नाम्नः स्वपुत्रस्य संबन्धिना शोकेन समानदुःखया तुल्यदुःखया सुभद्रादेव्या एतन्नामयाऽर्जुनभार्यया याज्ञसेन्या द्रौपद्या च कर्त्र्या कथंकथमपि महता कष्टेनेत्यर्थः। केवलं समाश्वास्यते सान्त्व्यते । एतेन चाभिमन्युवधरूपो वृत्तः ( भूतः ) कथांशः सूच्यते ।

(दा) हस्तिनः शिरःकपाले शिरोऽस्थनि संचितं संगृहीतम् । 'शिरसोऽस्थि करोटि स्यात्कपालं शकलं च तत् ।' इति हलायुधः । अत्र कपालशब्दस्य शिरोऽस्थिवाचकत्वेऽपि शिरःशब्दस्य पार्थक्येन विद्यमानत्वादस्थिमात्रपरत्वं विशिष्टवाचकानाभितिन्यायात्। अग्रमांसं काळीज इति महाराष्ट्र्यां ख्यातमेवोपदंशो मद्यपानरोचको भक्ष्यद्रव्यविशेषो विदंश इति ख्यातः तम् । 'उपदंशो विदंशे च' इति मेदिनी । शोणितासवं रक्तरूपमासवम् ।

(दि) तथा यथा राक्षस्योक्तं तथा कृत्वा अग्रमांसमास्वाद्य शोणितासवं च पीत्वेत्यर्थः । अथेति प्रश्ने । 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्येष्वथो अथ ।' इत्यमरः । कियत्प्रभूतम् कियत्प्रचुरम् किंपरिमाणकेन प्राचुर्येण विशिष्टमित्यर्थः । प्रभूतशब्दोऽत्र भावप्रधानः । संचितं संगृहीतम् ।

**राक्षसी**—अले लुहिलप्पिआ ! पुव्वशंचिअं तुमं वि जाणाशि जेव्व । णवशंचिअं शिणु दाव । भअदत्तशोणिएहिं कुम्भे शिन्धुलाअवशाहिं कुम्भे दुवे दुवदमच्छाहिवभूलिश्शवशोमदत्तवल्हीअप्पमुहाणं णलिन्दाणं अण्णाणं वि पाकिदपुलिशाणं लुहिलमंशेहिं पुलिदाइं घडशदाइं अशंक्खाइं शन्ति मह गेहे । ( अरे रुधिरप्रिय ! पूर्वसंचितं त्वमपि जानास्येव । नवसंचितं शृणु तावत् । भगदत्तशोणितैः कुम्भः सिन्धुराजवसाभिः कुम्भौ द्वौ द्रुपदमत्स्याधिपभूरिश्रवःसोमदत्तवाल्हीकप्रमुखाणां नरेन्द्राणामन्येषामपि प्राकृतपुरुषाणां रुधिरमांसैः पूरितानि घटशतान्यसंख्यानि सन्ति मे गेहे । ) ( दी )

**राक्षसः**—( सपरितोषमालिङ्ग्य । ) शाहु शुग्घलिणीए ! शाहु । इमिणा दे शुग्घलिणित्तणेण अज्ज उण शामिणीए हिडिम्बादेवीए शंविहाणेण प्पणट्ठं मे जम्मदालिद्दम् । ( साधु सुगृहिणि ! साधु । अनेन ते सुगृहिणीत्वेनाद्य पुनः स्वामिन्या हिडिम्बादेव्याः संविधानेन प्रनष्टं मे जन्मदारिद्र्यम् । ) ( दु )

---

(दी) तावत् साकल्येन । भगदत्तशोणितैः भगमैश्वर्यं भगवता दत्तमस्मै स भगदत्त एतन्नामा प्राग्ज्योषा (आसाम) धिपतिर्नरकराजपुत्रः तस्य शोणितै रक्तैः । भगवताऽस्यैश्वर्यप्रदानकथा कालिकापुराणे प्रोक्ता यथा–भारावतरणे देवि ! नरकस्य वधः पुरा । त्वयैव प्रार्थितो यस्मात्तेनासौ निहतो मया ॥ पालयिष्येऽस्य सन्तानं देवि! त्वद्वचनादहम् । प्राग्ज्योतिषेऽभिषेक्ष्यामि नप्तारं भगदत्तकम् ॥ पृथव्यां नारदेनैव केशवः सहितस्तदा । भगदत्तं भौम (नरक) सुतं प्राग्ज्योतिषपुरोत्तमे । अभिषिच्य तदा भूपं पुरमध्ये न्यवेशयत् ॥ ' इति पृथिवीं प्रति भगवद्वाक्यम् । सिन्धुराजस्य सिन्धूनां राज्ञो जयद्रथस्य । राजाहः सखिभ्य इति टच् । वसाभिः मेदोभिः । ' मेदस्तु वपा वसा ' त्यमरः । द्वौ कुम्भौ । द्रुपदो द्रौपद्याः पिता मत्स्याधिपो मत्स्यदेशराजो विराटः भूरिश्रवाः (भूरि विपुलं श्रवो यशो यस्य सः) एतन्नामकः सोमदत्तपुत्रश्चन्द्रवंशीयो भूपः । सोमदत्तस्तत्पिता । बाल्हीक एतन्नामा भूपः बाल्हीकदेशाधिपतिर्वा । एते प्रमुखाः प्रधाना यत्र तथाभूतानां नरेन्द्राणां राज्ञाम् । प्राकृतपुरुषाणां पामराणां पुरुषाणाम् ' पामरो नीचः प्राकृतश्च पृथग्जनः ' इत्यमरः । असंख्यानि संख्यातिगानीत्यर्थः

(दु) सुगृहिणि शोभनभार्ये साध्विति प्रशंसायाम् । अनेन मांसरुधिरादिसंग्रहरूपेण सुगृहिणीत्वेन शोभनभार्याकर्मणा । पुनरिति किं चेत्यर्थे स्वामिन्या राज्याः । हिडिम्बादेव्या

**राक्षसी**—लुहिलप्पिआ! केलिशे शामिणीए शंविहाणए किदे ? ( रुधिर-प्रिय! कीदृशं स्वामिन्या संविधानं कृतम् । )

**राक्षसः**—वशागन्धे! आणत्ते क्खु हगे शामिणीए हिडिम्बादेवीए जह लुहिलप्पिआ! अज्जप्पहुदि तुए अज्जउत्तभीमशेणश्श पिदोट्ठऽणुपिट्ठं शमले आहिण्डिदव्वं त्ति । ता तश्श अणुमग्गगामिणो हअमाणुशशोणिअणईदंशणप्पणट्ठबुभुक्खापिवाशश्श इह एव्व मह शग्गलोओ हुवीअदि । तुमं वि वीशद्धा भविअ लुहिलवशाहिं कुम्भशहश्शं शंचेहि । ( वसावन्धे! आज्ञप्तः खल्वहं स्वामिन्या हिडिम्बादेव्या यथा रुधिरप्रिय! अद्यप्रभृति त्वया आर्यपुत्रभीमसेनस्य पृष्ठतोऽनुपृष्ठं समर आहिण्डितव्यमिति । तत्तस्यानुमार्गगामिनो हतमानुषशोणितनदीदर्शनप्रनष्टबुभुक्षापिपासस्येहैव मे स्वर्गलोको भविष्यति । त्वमपि विस्रब्धा भूत्वा रुधिरवसाभिः कुम्भसहस्रं संचिनु । ) (दू)

---

इति कृद्योगे कर्तरि षष्ठी । हिडिम्बादेव्या कृतेनेत्यर्थः । संविधानेन आयोजनेन (योजनया।) प्रनष्टमिति नशेः षान्तस्येतिणत्वनिषेधः । जन्मदारिद्र्यम् अत्र जन्मपदमायुषि लाक्षणिकम् । तत्र गतं दारिद्र्यं दरिद्रता । भावे ष्यञ् । यावदायुरनुवर्तमानं दारिद्र्यं प्रनष्टमिति भावः । अत्र संविधानमिति सम्यग्विधीयतेऽनेन कृतेनेति संविधानं आज्ञेति वा करणव्युत्पत्त्यार्थो बोध्यः । आयोजनमिति तु वाचस्पत्याद्यनुसारेणोक्तम् । संविधानस्थाने संविभाग इति क्वचित्पाठः । तत्र संविभागो नियोगः (आज्ञा) इत्यर्थ इति जगद्धरः ।

(दू) आज्ञप्तः कृताज्ञः । आज्ञायाः स्वरूपमाह यथेति । अद्यप्रभृति वर्तमानं दिवसमारभ्य । आर्यपुत्रस्य पत्युः भीमसेनस्य 'भर्तार्यपुत्र' इतिहैमः । हिडिम्बा हि भीमेन परिणीतेति महाभारते द्रष्टव्यम् । पृष्ठतः पृष्ठप्रदेशे पश्चाद्भाग इत्यर्थः । अनुपृष्ठं पृष्ठमनुलक्ष्य । आहिण्डितव्यम् गन्तव्यम् । यतो यतो भीमसेनो गमिष्यति ततस्ततस्तस्य पश्चात्त्वयाऽपि गन्तव्यमित्यर्थः । इति आज्ञप्त इत्यनेन संवन्धः । एवं भीमस्य पश्चान्मया गन्तव्यमिति देव्या योजना विहितेति भावः । तत् यस्मादाज्ञप्तं तस्मात् । तस्य भीमसेनस्य अनुमार्गगामिनः पश्चाद्भागवर्तिना मार्गेण संचरतः अत एव हतानां मानुषाणां च शोणितनद्याः रक्तमय्या नद्याश्च दर्शनेन प्रनष्टा बुभुक्षा भोक्तुमिच्छा (क्षुधा) पिपासा पातुमिच्छा (तृष्णा) च यस्य तथाभूतस्य । प्रेतराशिदर्शनेन क्षुधा रक्तपूरदर्शनेन च तृषाऽपि मे नङ्क्ष्यतीति भावः । इह अस्मिंल्लोक एव स्वर्गलोको भविष्यति निरतिशयसुखप्राप्त्येति भावः । स्वर्गो हि निर-

**राक्षसी**—लुहिलप्पिआ! किंणिमित्तं कुमालभीमशेणश्श पिट्ठदो आहिण्डीअदि?। (रुधिरप्रिय! किंनिमित्तं कुमारभीमसेनस्य पृष्ठत आहिण्ड्यते?।) (*)

**राक्षसः**—वशागन्धे! तेण हि शामिणा विओदलेण दुश्शाशणश्श लुहिलं पादुं पडिण्णादम्। तं अ अम्हेहिं लख्खशेहिं अनुप्पविशिअ पादव्वम्। (वसागन्धे! तेन हि स्वामिना वृकोदरेण दुःशासनस्य रुधिरं पातुं प्रतिज्ञातम्। तच्चास्माभी राक्षसैरनुप्रविश्य पातव्यम्।) (दे)

**राक्षसी**—(सहर्षम्।) शाहु शामिणीए! शाहु। शुशंविहाणे मे भत्ता किदे। (साधु स्वामिनि! साधु। सुसंविधानो मे भर्ता कृतः।) (दै)

(नेपथ्ये महान्कलकलः।)

**राक्षसी**—(आकर्ण्य। ससंभ्रमम्।) अले लुहिलप्पिआ! किं णु क्खु एशे महन्ते कलअले शुणीअदि?। (अरे रुधिरप्रिय! किं नु खल्वेष महान्कलकलः श्रूयते?।) (दो)

---

तिशयं सुखमेव 'यन्न दुःखेन सभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्।' इत्युक्तेः। विस्रब्धा शान्ता निर्विशङ्केति यावत्। भूत्वा। संचिनु पूरयेति यावत्। विस्रब्धोऽनुद्धटे शान्त' इति हैमः।

(*) किं निमित्तं किमर्थम्। आहिण्डयते गम्यते। हिडि गत्यनादरयोरित्यतो भावे लट्। वर्तिष्यमाणस्य कथांशस्य सूचनोपक्रमायैष प्रश्नः।

(दे) हि यस्मात् तेन स्वामिना वृकोदरेण वृकनामाऽग्निरुदरे यस्य तथाभूतेन भीमेन कर्त्रा पातुं प्राशितुं प्रतिज्ञातं प्रतिज्ञा कृता। तत् दुःशासनरक्तम्। अस्माभिः राक्षसैः कर्तृभिः अनुप्रविश्य भीमसेनशरीरे प्रवेशं कृत्वा पातव्यं प्राशितव्यम्। अत एव तस्य पृष्ठत आहिडयत इति भावः। एतेन वर्तिष्यमाणो दुःशासनहननरूपोऽर्थः सूच्यते।

(दै) सुसंविधानः शोभनं संविधानं योजना यस्य तथाभूतः कृतः। योग्यकर्मणि नियुक्त इत्यर्थः।

(दो) ससंभ्रमं सभयं यथा तथा वदतीति शेषः। महतः कलकलस्य श्रवणाद्भीतिः। 'संभ्रमः साध्वसेऽपि स्यादि'ति मेदिनी। किं किंनिमित्तम्। श्रूयत इत्यनेन संबन्धः। नु वितर्के। खलु वाक्यालङ्कारे।

**राक्षसः**—( दृष्ट्वा । ) वशागन्धे ! एशे क्खु धिट्टज्जुण्णेण दोणे केशेशु आकड्डिअ आशिवत्तेण व्वावादीअदि । ( वसागन्धे ! एष खलु धृष्टद्युम्नेन द्रोणः केशेष्वाकृष्यासिपत्रेण व्यापाद्यते । ) (दौ)

**राक्षसी**—( सहर्षम् । ) लुहिलप्पिआ ! एहि । गच्छिअ दोणश्श लुहिलं पिवम्ह । ( रुधिरप्रिय ! एहि । गत्वा द्रोणस्य रुधिरं पिबावः । )

**राक्षसः**—( सभयम् । ) वशागन्धे ! बम्हणशोणिअं क्खु एदं गलअं दहन्ते दहन्ते प्पविशादि । ता किं एदिणा । ( वसागन्धे ! ब्राह्मणशोणितं खल्वेतद्गलं दहद्दहत्प्रविशाति तत्किमेतेन ? ) (दं)

( नेपथ्ये पुनः कलकलः । )

**राक्षसी**—लुहिलप्पिआ ! पुणोवि एशे महन्ते कलअले शुणीअदि । ( रुधिरप्रिय ! पुनरप्येष महान्कलकलः श्रूयते । ) (दः)

**राक्षसः**—( नेपथ्याभिमुखमवलोक्य । ) वशागन्धे ! एशे क्खु अश्शत्थामे आकड्डिदाशिवत्ते इदो एव्व आअच्छदि । कदावि दुवदशुदलोशेण अम्हेवि व्वावादइश्शइ । ता एहि । अतिक्कमह्म । ( वसागन्धे ! एष खल्वश्वत्थामाकृष्टासिपत्र

---

(दौ) दृष्ट्वा यतः कलकलः श्रुतस्तां दिशं विलोक्येत्यर्थः । कलकलोत्पत्तिज्ञानाय दर्शनम् । धृष्टद्युम्नेन एतन्नामकेन द्रुपदपुत्रेण कर्त्रा । धृष्टद्युम्नपदं चैवं निरुच्यते महाभारते ' धृष्टत्वादतिधृष्णुत्वाद्द्युम्नात्द्युत्संभावदपि । धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति ॥ ' इति । द्रोणो द्रोणाचार्यः केशेषु आकृष्य केशानाकृष्येत्यर्थः । असिपत्रेण खङ्गस्य फलकेन करणभूतेन धाराविशिष्टः खड्गभागः पत्रसदृशत्वात्पत्रमित्युच्यते । व्यापाद्यते हन्यते तत एवैष कलकल इति भावः ।

(दं) सभयं ब्राह्मणशोणितपानस्यातिमात्रं तापकारित्वात्तत्स्मरणतो भयप्रादुर्भावः । गलकं कण्ठं तदन्तर्भागमित्यर्थः । तत् यतः कण्ठं दहत्प्रविशति तस्मात् । एतेन रक्तेन किं किं प्रयोजनम् ? न किमपीत्यर्थः । द्रोणस्य ब्राह्मणत्वात्परित्याज्यं तच्छोणितमिति भावः ।

(दः) पुनरपि द्वितीयवारमपि श्रूयते तत्कुतोऽयमिति भावः ।

इत एवागच्छति । कदाचिपदद्रुसुतरोषेणावामपि व्यापादयिष्यति । तदेहि । अतिक्रमावः ।) (ध)

(इति निष्क्रान्तौ ।)

**इति प्रवेशकः । (धा)**

(ततः प्रविशत्याकृष्टखड्गः कलकलमाकर्णयन्नश्वत्थामा ।) (धि)

**अश्वत्थामा—**

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः ।

---

(ध) अश्वत्थामा अश्वस्येव स्थाम बलं यस्य स एतन्नामा द्रोणपुत्रः । पृषोदरादित्वात्सस्य तः । 'द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ।' इत्यमरः । निरुक्तं चैतदपि नाम महाभारते 'अलभद्गौतमी पुत्रमश्वत्थामानमेव च । स जातमात्रो व्यनदद्यथैवोच्चैःश्रवा हयः । तच्छ्रुत्वान्तर्हितं भूतमन्तारिक्षस्थमब्रवीत् । अश्वस्येवास्य यत् स्थाम नदतः प्रदिशो गतम् । अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति ॥' इति । आकृष्टासिपत्रः आकृष्टं कोशाद्बहिर्निष्कासितमासिपत्रं खङ्गफलकं येन तथाभूतः । द्रुपदसुतरोषेण द्रुपदसुतस्य द्रोणहन्तुर्धृष्टद्युम्नस्य संबन्धी यो रोषः कोपस्तेन हेतुभूतेन । व्यापादयिष्यति हनिष्यति । व्याङ्पूर्वात् पद्यतेर्हिंसार्थाण्णिजन्ताल्लृट् । अतिक्रमावः अपगच्छावः । अत्र 'तदेहि स्वामिन्या हिडिम्बादेव्या आज्ञप्तिं कुर्वः ।' इति क्वचित्पाठः स च सुगमः ।

(धा) **प्रवेशक** इति वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकोऽर्थसंक्षेपहेतू रूपकभागः । तल्लक्षणं यथा दशरूपके 'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः । × × × तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः । प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः ॥' इति । प्रवेश एव प्रवेशकः स्वार्थे कः । अत्र च जयद्रथवधादेर्वृत्तस्य दुःशासनवधादेश्च भाविनोऽर्थस्य सूचनात्तथात्त्वम् । राक्षसराक्षस्योश्च नीचपात्रत्वम् । इतीति समाप्तौ । समाप्तः प्रवेशक इत्यर्थः ।

(धि) आकृष्टखड्गः आकृष्टः कोशादुध्दृतः खड्गस्तरवारिर्येन तथाभूतः । आकर्णयन् शृण्वन् । कलकलस्याकर्णनेन शत्रूणां स्वबलेऽभिपातं संभावयतस्तत्प्रतीकारार्थं खड्गस्य कोशादाकर्षणम् । उत्खातखड्ग इत्यत्राप्ययमेवार्थः । अश्वत्थामा एतन्नामा द्रोणपुत्रः निरुक्तिस्तु प्रदर्शितपूर्वा ।

रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥ ४ ॥

---

(४) **महाप्रलयेति** । अद्य अस्मिन्दिवसे पुरः अस्माकमग्रतः समरोदधेः समरो युद्धमेवोदधिः समुद्रः तस्य अयं श्रूयमाणः । रवः ध्वनिः कुतः कस्मात् हेतोर्भवतीति शेषः । कीदृशो रवः? इत्याह महाप्रलयेति । महाप्रलयस्य महतः कल्पान्तस्य सम्बन्धिभिर्मारुतैर्वायुभिः क्षुभिताः क्षोभं प्राप्ताः संचालिता वा ये पुष्करं जलमासमन्ताद्वर्तयन्ति स्थापयन्ति तथाभूताः पुष्करावर्तका नाम प्रलयकालिका मेघविशेषास्तेषां प्रचण्डं अत्यन्तं भयङ्करं घनं निरंतरं च यद्गर्जितं ध्वनिः तस्य प्रतिरवस्य प्रतिध्वनेरनुकारी सदृशः । पुनः कीदृशः? श्रवणभैरवः श्रवणेन आकर्णनेन भैरवो भीतिजनकः । 'भैरवः शङ्करे भीषणेऽपि च' इति मेदिनी । श्रवणयोः कर्णयो भैरव इति केचित् । तत्र श्रवणयोरात्मत्वारोपान्न दोषः । भीतिर्हि न श्रवणनिष्ठा किन्त्वात्मनिष्ठैवेत्यत एवारोपस्वीकारः । स्थगितं संवृतं ( व्याप्तं ) रोदसी भूम्याकाशावेव कन्दरं दरी येन तथाभूतः भुवं चाकाशं च व्याप्तवानित्यर्थः । स्थगितेति ष्ठगे संवरण इत्यतो निष्ठा। संवरणं च व्याप्तिः । 'भूद्यावौ रोदस्यौ रोदसी च ते' इत्यमरः । पुनः कीदृशः? अभूतपूर्वः पूर्वं न भूतः । महाप्रलयश्च ब्राह्मः प्रलयः तं प्रत्येव मार्कण्डेयपुराणे 'महाप्रलयकाले त्वि' त्यादिषु महाप्रलय इत्युक्तेः । अस्य च स्वरूपं संक्षेपतः प्रदर्शितं पद्मपुराणे 'कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् । दिव्यमेकयुगं ज्ञेयं तस्य या चैकसप्ततिः । मन्वन्तरं तु तज्ज्ञेयं तानि यत्र चतुर्दश । स कल्पो नाम वैकालस्तदन्ते प्रलयस्तु यः । सा ब्रह्मरात्री राजेन्द्र यत्र शेतेऽम्बुजासनः ॥' इति । अत्र चादितः सूर्यैर्जगत्त्रयं ताप्यते ततो वह्निना दह्यते ततश्च पुष्करावर्तकाद्यैर्मेघैर्निरन्तरमभिवृष्य जलेन प्लाव्यत इत्यादिकं विस्तरभियाऽत्रानुक्तं पुराणेषु द्रष्टव्यम् । प्रलयस्य नित्यादिचतुर्विधत्वमपि कौर्मादिषु दृश्यम् । **पुष्करावर्तकास्तु** ब्रह्माण्डे ५८ अध्याये प्रोक्ताः । यथा—( मेघाइत्यनुवर्तमाने ) 'शक्रेण पक्षा यच्छिन्नाः पर्वतानां महात्मनाम् । कामगानां प्रवृत्तानां प्रजानां शिवमिच्छता । **पुष्कवर्तकास्तेन** कारणेनेह कीर्तिताः । नानारूपधराश्चैव **महाघोरस्वनाश्च** ते । **कल्पान्तवृष्टेः स्रष्टारः संवर्ताग्नेर्नियामकाः । वर्षन्ति** ते **युगान्तेषु** तृतीयास्ते ( मेघेषु ) प्रकीर्तिताः ।' इति । 'घनं निरन्तरं सान्द्रमि' ति 'दरी तु कन्दरो वाऽस्त्री' त्यपि चामरः । समर उदधित्वारोपाद्रूपकं ध्वनेर्मेघप्रतिध्वनिसादृश्यप्रतिपादनाच्चोपमालङ्कारः । 'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः ( उपमानोपमेययोः )' इत्युपमालक्षणं साहित्यदर्पणे । 'उपमैव तिरोभूतभेदा रूपकमुच्यते' इति

(विचिन्त्य।) ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यौवनदर्पादतिक्रान्त-मर्यादेन परिकोपितस्तातः समुल्लङ्घ्य शिष्यप्रियतामात्मप्रभावसदृशमाचेष्टते ।

तथाहि । (धी)

यद्दुर्योधनपक्षपातसदृशं युक्तं यदस्त्रग्रहे
रामाल्लब्धसमस्तहेतिगुरुणो वीर्यस्य यत्सांप्रतम् ।
लोके सर्वधनुष्मतामधिपतेर्यच्चानुरूपं रुषः
प्रारब्धं रिपुघस्मरेण नियतं तत्कर्म तातेन मे ॥ ५ ॥

---

रूपकलक्षणं दण्डिना प्रोक्तम् । पृथ्वी वृत्तम् 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ।' इति लक्षणात् ।

(धी ध्रुवं निश्चितं गाण्डीविना गाण्डीवं नाम धनुरस्यास्ति तथाभूतेनार्जुनेन 'पार्थः किरीटी गाण्डीवी' इत्यर्जुनपर्यायेषु त्रिकाण्डशेषः । सात्यकिना एतन्नामकेन पाण्डवपक्ष्येण वीरेण । वृकोदरेण वृकसंज्ञकोऽग्निरुदरे यस्य तथाभूतेन भीमेन 'भीमस्तु मरुत्पुत्रो वृकोदरः' इति हैमः । कर्त्रा । यौवनदर्पात् यूनस्तरुणस्य भावो यौवनं तेन यो दर्पो मदस्तस्मात् हेतु-भूतात् । तारुण्यजन्यान्मदादित्यर्थः । प्राणभृज्जातिवयोवचनेत्यादिना युवछब्दाद्भावेऽञ् । 'दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मद' इत्यमरः । अतिक्रान्तमर्यादेन अतिक्रान्ता उल्लङ्घिता मर्यादा गुरुविषयिण्याः शिष्यवृत्तेः सीमा येन तथाभूतेनेति हेतुगर्भं विशेषणम् । मर्यादाऽतिक्रम एव हि प्रकोपे हेतुः । शिष्यप्रियतां शिष्यविषयकं प्रेम समुल्लङ्घ्य त्यक्त्वे-ति यावत् । आत्मप्रभावसदृशं आत्मनः स्वस्य प्रभावस्य तेजसः शक्तेर्वा सदृशं योग्यं यथा तथा आचेष्टते व्यापारं करोति । 'प्रभावस्तेजसिशक्तौ' इति हैमः । 'सदृशं समे । उचिते च' इति मेदिनी ।

(५) प्रभावोचितमाचेष्टितमाह **यदिति** । रिपूणां शत्रूणां घस्मरेण नाशकेनेति यावत् । घसेर्भक्षणार्थकात्सृघस्यद इति क्मरच् । 'भक्षको घस्मरोऽद्मरः ।' इत्यमरः । मे मम तातेन पित्रा नियतं निश्चितं (नूनं) 'निश्चितं नियतं स्मृतमि' ति हलायुधः । तत्कर्म प्रा-रब्धम् । तत् कीदृशम्? यत् दुर्योधनपक्षपातस्य दुर्योधनपक्षाभिनिवेशस्य सदृशमुचितम् । यत् अस्त्रग्रहे अस्त्रगहणकाले धनुर्विद्याशिक्षणावसर इत्यर्थः लब्धेति समासान्तर्गतेन पदेन संबन्धः । रामात्परशुरामात् लब्धाभिः प्राप्ताभिः शिक्षिताभिरित्यर्थः समस्ताभिः सकलाभिः हेतिभिः आयुधैः गुरोः महतः वीर्यस्य प्रभावस्य युक्तं योग्यम् । 'हेतिः स्यादायुधज्वाला-

( पृष्ठतो विलोक्य । ) तत्कोऽत्र रथमुपनयतु ? अथवालमिदानीं मम रथप्रतीक्षया । सशस्त्र एवास्मि सजलजलधरप्रभाभासुरेण सुप्रग्रहविमलकलधौतत्सरुणामुना खड्गेन । यावत्समरभुवमवतरामि । ( परिक्रम्य । वामाक्षिस्पन्दनं सूचयित्वा । ) अये ! ममापि नामाश्वत्थाम्नः समरमहोत्सवप्रमोदनिर्भरस्य तातविक्रमदर्शनलालसस्यानिमित्तानि समरगमनविघ्नमुत्पादयन्ति । भवतु । गच्छामि । ( सावष्टम्भं परिक्रम्याग्रतो विलोक्य । ) कथमवधीरितक्षात्रधर्माणामुज्झितसत्पुरुषोचितलज्जावगुण्ठनानां विस्मृतस्वामिसत्कारलघुचेतसां द्विरदतुरङ्गमचरणचारिणामगणितकुलयशःसदृशपराक्रमव्रतानां रणभूमेः समन्तादपक्रामतामयं महान्नादो बलानाम् । ( निरूप्य । ) हा धिक्कष्टम् । कथमेते महारथाः कर्णादयोऽपि समरात्पराङ्मुखा भवन्ति । कथं नु तताधिष्ठितानामपि बलानामियमवस्था भवेत् । भवतु संस्तम्भयामि । भो भोः कौरवसेनासमुद्रवेलापरिपालनमहामहीधरा नरपतयः ! कृतं कृतममुना समरपरित्यागसाहसेन । (धु)

---

सूर्यतेजःसु योषिति' इति 'गुरुस्त्रिलिङ्ग्यां महति' इति मेदिनी । 'वीर्यं बले प्रभावे च' इत्यमरः । 'सर्वं समस्तमि' ति हैमः । यत् लोके सर्वेषां धनुष्मतां धनुर्धराणां योधानां अधिपतेः स्वामिनः । सकल धनुर्धरश्रेष्ठस्येत्यर्थः । सांप्रतं योग्यम् । 'युक्तार्थे चाधुनार्थे च सांप्रतम्' इति त्रिकाण्डशेषः । च किं च यत् रुषः क्रोधस्य अनुरूपं योग्यम् । 'रुट्क्रुधौ' स्त्रियामिति क्रोधपर्यायेष्वमरः । अत्र अलब्धं गुरुमित्यपि योजयन्ति केचित् तच्च विभक्तिक्रमभङ्गभीरुभिः परित्याज्यम् । स शाकल्यमपि तत्पक्षस्वीकारे तु अधिपतेरिति षष्ठ्या रुट्पदेनसंबन्धः धनुष्मतामधिपते रुषोऽनुरूपमित्यर्थः । रुष इति ल्यब्लोपे वा पञ्चमी रुषं क्रोधमापद्येत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(धु) **पृष्ठतः** पश्चाद्भागे **विलोक्य** दृष्ट्वा । रथानयनार्थं पुरुषमन्वेष्टुं पृष्ठतो दर्शनम् । **तत्** यस्मात्तातेनैवंविधं कर्मारब्धं तस्मात् **अत्र** अस्मिन्प्रदेशे **रथं** पितृपराक्रमदर्शनगमनसाधनं स्यन्दनम् । **उपनयतु** आनयतु । **अथवेति** पक्षान्तरे । **इदानीं** दुर्लभविक्रमदर्शनहेतावस्मिन् समये । रथप्रतीक्षया रथसम्बन्धिन्याऽपेक्षया । **अलं** साध्यं नास्ति । रथप्रतीक्षावशाद्विलम्बे सति दुर्लभसमयव्यपगमसंभवान्निष्फला रथप्रतीक्षेति भावः ।

यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।

---

अत्र तत्कोऽत्र रथमुपनयत्विति क्वचिन्नास्ति । ननु युद्धोपकरणानां शस्त्राणां रथे स्थितत्वात्त-दर्थमवश्यमपेक्षणीयो रथः । ने त्याह **सशस्त्र इति । सजलस्य** जलविशिष्टस्य जलध-रस्य मेघस्य प्रभेव कान्तिरिव प्रभा तया भासुरेण दीप्तिशीलेन । श्यामलकान्तिनेत्यर्थः भञ्जभासेत्यादिना ताच्छीलिको घुरच् । खड्गस्यानीलतयोपवर्णनं कविसमयसंसिद्धम् । 'अत एव च 'सद्यः करस्पर्शमवाप्य तूर्णं रणे रणे यस्य कृपाणलेखा । तमालनीला शरदिन्दु-पाण्डु यशस्त्रिलोक्याभरणं प्रसूते ।' इत्यादि प्रयुञ्जते महाकवयः । **सुप्रग्रहः** सुखेन प्रग्रहीतुं शक्यो **विमलस्य** शुद्धस्य **कलधौतस्य** सुवर्णस्य **त्सरुर्मुष्टिर्यस्य** तथाभूतेन अ-मुना खड्गेन तरवारिणा । प्रकृत्यादिभ्य उपसंख्यानमिति धान्येन धनवानिति वत्तृतीया । 'कलधौतं रूप्यहेम्नो' रित्यमरः । 'त्सरुरस्य ( खड्गस्य ) मुष्टिः' इति हैमः । **सशस्त्रः** शस्त्रयुक्तः अस्मि । सुप्रग्रह इत्यत्र सुप्रभ इति पाठे स्पष्टोऽर्थः । यावत्सत्वरम् 'यावत्का-त्स्न्र्येऽवधारणे । प्रशंसायां परिच्छेदे मानाधिकारसंभ्रमे ।' इति मेदिनी । तावदितिपाठेऽ प्ययमेवार्थः । समरभुवं युद्धभूमिम् । अवतरामि प्रविशामीति यावत् । **वामस्य** सव्यस्य अक्ष्णो नेत्रस्य स्पन्दनं स्फुरणं सूचयित्वा अभिनीयेति यावत् । अये इति विस्मये शौर्या-तिशयशालिनोऽनिष्टस्यासंभवनीयतया तत्सूचकेन वामाक्षिस्पन्दनेन विस्मयः । ममापि अश्वत्थाम्न इत्युक्तिरात्मनि शौर्यातिशयसंभावनामभिव्यञ्जयति । समरमहोत्सवेन प्रमोदनि-र्भरः आनन्दातिशयो यस्य तथाभूतस्य । **तातविक्रमस्य** पितृपराक्रमस्य दर्शने **लाल-सा** अत्यन्ताभिलाषो यस्य तथाभूतस्य । मम । 'कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः ।' इत्यमरः । अनिमित्तानि दुःशकुना वामाक्षिस्पन्दनादयः कर्तृभूताः । अप्रशस्तं हि वामाङ्गस्फुरणं स्मर्यते 'अङ्गदक्षिणभागे तु प्रशस्तं स्फुरणं भवेत् । अप्रशस्तं तथा वामे' इति मात्स्ये । अप्रशस्तं प्रशस्तविरोधि । दक्षिणाङ्गे यत्प्रशस्ततयोक्तं तद्विपरीतं वामे स्फु-रति संभवतीत्यर्थः । दक्षिणाक्षिमूलस्फुरणे च संग्रामे जयलाभः प्रोक्तः 'दृग्बन्धने संगरे च जयं शीघ्रमवाप्नुयात् ।' इति । तद्विपरीतं च पराजयलक्षणं फलं वामाक्षिस्पन्दनस्येत्य-र्थात्फलितम् । दृग्बन्धनशब्दश्च दृङ्मूलवाचकः 'स्फुरिते दृगादौ । जयः' इति वसन्तराज-शाकुनैकवाक्यत्वात् । इति । **भवतु** अनिमित्तमिति शेषः । नाद्रियं तदिति भावः । **सा-वष्टम्भं** सदर्पम् । **कथमिति** विस्मये । **रणभूमेः** युद्धप्रदेशात् समन्तात् सर्वतः **अ-पक्रामतां** पलायमानानाम् 'पलायनमपयानं संद्रावद्रवविद्रवाः । अपक्रमः' इति हैमः । बलानां

अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वे ? ॥ ६ ॥

---

सैन्यानां महान्नादः शब्दः भवतीति शेषः । कीदृशानां बलानाम् ? **अवधीरितक्षात्रधर्माणां** अवधीरितः अननुष्ठानेनावज्ञातः क्षात्रः क्षत्रसम्बन्धी धर्मः संग्रामादनिवर्तनमित्येतद्रूपो यैस्तेषाम् । 'अवधीरत्क वज्ञाया' मित्यतो निष्ठा । किं च **उज्झितं** त्यक्तं सत्पुरुषोचितं सज्जनयोग्यं लज्जारूपं अवगुण्ठनं प्रावरणं यैस्तेषाम् । उज्झ त्याग इत्यतो निष्ठा । संग्रामत्यागेन भाविनोऽयशसोऽलज्जमानानामित्यर्थः । **विस्मृत**: स्वामिकृतः सत्कारो यैस्तथाभूता अत एव लघु क्षुद्रं चेतो हृदयं येषां तथाभूतानाम् । उदारहृदया हि स्वामिकृतं सत्कारं स्मरन्तो व्यपेतेष्वपि प्राणेषु संग्रामतो नापक्रामेयुः।तद्विपरीतत्वाच्च क्षुद्रहृदयान्येतानीति भावः । **द्विरदै**र्गजैः तुरङ्गमैरश्वैः चरणैश्च चरन्ति गच्छन्ति तच्छीलानाम् । **न गणितं** आदृतं कुलस्यात्मनो वंशस्य संबन्धिनो यशसः कीर्तेः सदृशं योग्यं पराक्रमवतं यैस्तेषाम् आत्मनः कुलस्य कीर्तेः कलङ्कः स्यादित्यप्यतोप्यबिभ्यतामित्यर्थः । **निरूप्य** दृष्ट्वा । निपूर्वाद्रूपयतेर्दर्शनार्थकाल्ल्यप् । **हा धिक्** इत्यव्ययसमुदायो निन्दायाम् । समरात्प्रतिनिवर्तमानान् धिगित्यर्थः । **कष्टं** प्राप्तमिति शेषः । कर्ण एतन्नामा कौरवपक्ष्यो योद्धा आदिर्येषु ते महारथा 'एको दशसहस्राणि योधयेयस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः।' इत्युक्तलक्षणा योधाः । समरात् पराङ्मुखा विमुखाः प्रतिनिवर्तमाना इत्यर्थः । तातेनास्मत्पित्रा द्रोणेन अधिष्ठितानां अध्यक्षितानां अधिपतीभूय पर्यवेक्ष्यमाणानामित्यर्थः । अवस्था दशा । भवतु इयमवस्थेति शेषः । न तां गणयामीति भावः । संस्तम्भयामि प्रतिबन्धयामि । अपक्रमणं प्रतिबध्नामीत्यर्थः । ष्टभि प्रतिबन्ध इत्यतो णिजन्ताल्लट् । प्रतिबन्धायैव वाचमुदीरयति । **भो भो इति । कौरवाणां** सेनैव समुद्रः तस्य वेलाया स्तीरस्य पालने रक्षणे महान्तो महीधराः पर्वता इव । एतेन भवत्स्वेव कौरवसेनारक्षणभार इति प्रशंसा व्यज्यते । अमुना अनेन दृश्यमानेन समरपरित्यागरूपेण साहसेन अविमृश्यकृतेन कर्मणा कृतं अलम् । निष्फलमेतदित्यर्थः । संस्तम्भयामि स्थैर्यं प्रापयामीति वार्थः ।

(६) निष्फलत्वमुपपादयति । यदीति । यदि समरं युद्धं अपास्य विहाय अन्यत्रेति शेषः मृत्योर्मरणात् । भीत्रार्थानामित्यपादनत्वात्पञ्चमी । भयमिति भयं नाम नास्ति । अत्रापासने सत्तायां च भयं कर्तृ । न पुनरपासनक्रियायां नरपतयः कर्तारः । समानकर्तृकत्वाभावप्रसङ्गात् । एवं च ल्यब् न स्यात् । तदेति शेषः अन्यतः अन्यत्र प्रयातुं गन्तुं अर्हार्थयोगात्तुमुन् । युक्तं योग्यम् । यदि समरादन्यत्र मरणभयं नास्ति तदा गम्यतामिति

अपि च । (धू)

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं संभ्रमेण व्रज कृप ! समरं मुञ्च हार्दिक्य ! शङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ? ॥ ७ ॥

---

भावः । अथेतिपक्षान्तरे यदि वक्ष्यमाणः पक्षस्तदेत्यर्थः । पक्षमेवाह जन्तोरिति । जन्तोः प्राणिनः मरणं मृत्युः अवश्यमपरिहार्यम् । तदा यशः कीर्तिं किमिति कस्मात् हेतोः मुधा-वृथैव मलिनं अयुक्ताचरणेन कलङ्कितमित्यर्थः कुरुध्वे कुरुथ । उभयथापि मरणस्यावश्यं भावित्वान्नयुक्तः समरपरित्याग इति भावः । कुरुध्वमित्यपि क्वचित्पाठः । तत्र करोतेर्लोट् । पुष्पिताग्रावृत्तम् । 'अयुजि ( विषमचरणे ) नयुगरेफतो यकारो युजि । ( समपाद ) तु नजौ जरगाश्च पुष्पिताग्रा ॥' इति लक्षणात् ।

(धू) पलायनस्य निष्प्रयोजनत्वं पुनरप्याचष्टे अपि चेति ।

(७) अस्त्रेति । अस्त्राणि ज्वाला अग्निशिखा इवास्त्रज्वालास्ताभिः अवलीढः स्पृष्टो व्याप्त इति यावत् यः प्रतिबलजलधिः जलधितुल्यं प्रतिबलं शत्रुसैन्यं तस्मिन् । अन्तः अभ्यन्तरे । शत्रुसैन्यमध्य इत्यर्थः । और्वायमाणे और्वो वडवानल इवाचरति तथाभूते । वडवानलसदृश इत्यर्थः । उपमानादाचार इति क्यङ् । 'और्वस्तु वाडवो वडवानल' इत्यमरः । सर्वधन्वीश्वराणां सर्वेषां धन्विनां धन्वानि चापाः सन्त्येषां तेषां धनुर्धराणां ईश्वराणामधिपतीनाम् । सर्वेषां योधश्रेष्ठानामित्यर्थः । धन्वगताविल्यतः पचाद्यचि सिद्धो धन्वशब्दोऽकरान्तो धनुर्वाचीति भरतः तत इनिर्मत्वर्थीयः । व्रीह्यादिषुधन्वपदस्य पाठाभावात्तु व्रीह्यादिभ्यश्चेतीनिर्न भवति । गुरौ धनुर्वेदाध्यापके मम अस्मिन्पुरो दृश्यमाने पितरि जनके द्रोणे सेनानाथे सेनाधिपतौ स्थिते सति । हे कर्ण एतन्नामक कौरवपक्षवीर ! संभ्रमेण भीत्या अलम् । कृप एतत्संज्ञक कौरववीर ! समरं व्रज गच्छ । हार्दिक्य हृदिकापुत्र कृतवर्मसंज्ञक कौरवयोध ! शङ्कां भीतिं त्यज । चापद्वितीये चाप एव द्वितीयः सहायो यस्य तथाभूते धनुर्मात्रसहाय इत्यर्थः । ताते द्रोणे रणधुरं युद्धभारं वहति सति । भयस्य भीतेः अवकाशः स्थानं कः । न कोऽपि भीतेरवकाशः साहाय्यमन्तरापि समरकर्मनिर्वहणक्षमत्वात्तातस्येति भावः । 'संभ्रमौ साध्वसादरौ' इति त्रिकाण्डशेषः । 'शङ्का त्रासे वितर्के च ' इति विश्वः ।

( नेपथ्ये । )

कुतोऽद्यापि ते तातः? (धे)

**अश्वत्थामा**—(श्रुत्वा ।) किं ब्रूथ ?–'कुतोऽद्यापि ते तात' इति । ( सरोषम् । ) आः क्षुद्राः ! समरभीरवः ! कथमेवं प्रलपतां वः सहस्रधा न दीर्णमनया जिह्वया ? (धै)

दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः ।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ? ॥ ८ ॥

---

त्रासो भयम् । अत्र प्रथमचरणे लुप्तोपमालङ्कारः । तेन च यथा और्वाग्निः समुद्रं शोषयत्येवं मे पिता प्रतिबलं नाशयिष्यतीति वस्तु व्यज्यते । उत्तरार्धे च निर्दिष्टानां भीतित्यागादीनां कार्याणां पूर्वार्धेन समर्थनात् कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः । 'लुप्ता सामान्यधर्मादेरेकस्य यदि वा द्वयोः । त्रयाणां वाऽनुपादाने ' इति लुप्तोपमालक्षणं दर्पणे । 'सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्यं च कारणेनेदं कार्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः । ' इत्यर्थान्तरन्यासलक्षणमपि तत्रैव । उक्तपूर्वलक्षणं स्रग्धरा वृत्तम् ।

(धे) कुतः कुत्र । आद्यादित्वात्सप्तम्यर्थे तसिः । नास्तीदानीं ते पितेति भावः ।

(धै) इति ब्रूथेत्यनेन संबन्धः । आः इति क्रोधे । क्षुद्रा निकृष्टा घातुका वा । 'क्षुद्रो दारिद्रे कृपणे निकृष्टेऽल्पनृशंसयोः । ' इति हैमः । एवं कुतोऽद्यापि ते तात इति प्रलपतामनर्थकं वदताम् । 'प्रलापोऽ नर्थकं वच' इत्यमरः । सहस्रधा सहस्रप्रकारं यथा तथा न दीर्णं विशीर्णम् । विदरणार्थकाद्दीर्यतेर्भावे निष्ठा । समरभीरवः समराद्युद्धाद्भीरवो भयशीलाः । भियः क्रुक्लुकनाविति क्रुः । अनया एवं वदन्त्येत्यर्थः । एवं मत्पितुरमङ्गलं ब्रुवतां वो जिह्वाविदरणमेव न्याय्यमिति भावः ।

(८) पितुरभावस्यासम्भवनीयतामाह । **दग्धुमिति** । दहनकिरणैः आग्नेयैः किरणैः करणभूतैर्विश्वं जगत् दग्धुं भस्मीकर्तुं द्वादश अर्काः सूर्या न उदिता उदयं प्राप्ताः । प्रलयकाले किल द्वादश सूर्याः समुदित्य युगपद्वह्निमयैः किरणैर्जगच्छोषयन्तीति कालविदः

( प्रविश्य संभ्रान्तः सप्रहारः । ) **(धो)**

**सूतः**—परित्रायतां परित्रायतां कुमारः । ( इति पादयोः पतति । ) **(धौ)**

---

।वा अथवा सप्तधा सप्तभिः प्रकारैर्भिन्ना भेदं प्राप्ताः सप्त । ऊनपञ्चाशदित्यर्थः । वाता मरुतः कर्तारो दिशि दिशि न वाताः संचारं कृतवन्तः । प्रलयकाले हि ऊनपञ्चाशद्वायवो वान्ति । पुष्करावर्तकाद्यैः पुष्करावर्तकप्रभृतिभिः । मेघैरित्यर्थात् । पुष्करावर्तकादयो हि प्रलयकालिका मेघाः । गगनतलं आकाशतलं न च्छन्नमावृतम् । तथापि हे पापाः घातुकाः । 'नृशंसो घातुकः क्रूरः पाप ' इत्यमरः । मम शौर्यराशेः शौर्यस्य शूरताया राशिरिव तस्य पितुः पापं पापजनकं मरणमित्यर्थः । कथं कथयत । प्रलयकालमन्तरा तस्य मरणं न संभवतीत्यर्थः । द्वादशादित्याश्च विष्णुधर्मोत्तरे प्रोक्ता यथा ' धाता मित्रोऽर्यमा रुद्रो वरुणः सूर्य एव च । भगो विवस्वान् पूषा च सविता दशमः स्मृतः । एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते ॥ ' इति । मरुतां च सप्त सप्तकानीत्याहुः पौराणिकाः 'मरुतामपि सर्वेषां विज्ञेयाः सप्त सप्तकाः । ' इति । ऊनपञ्चाशतश्चैषां नामान्याह वह्निपुराणम्—एकज्योतिश्च द्विज्योतिस्त्रिज्योतिर्ज्योतिरेव च । एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः । इन्द्रश्च गत्यदृश्यश्च ततः पतिसकृत्परः । मितश्च संमितश्चैव सुमितश्च महाबलः । ऋतजित्सत्याजिच्चैव सुषेणः सेनजित्तथा । अन्तिमित्रोऽनमित्रश्च पुरुमित्रोऽपराजितः । ऋतश्च ऋतवाहश्च धर्ता च वरुणो ध्रुवः । विधारणो नाम तथा देवदेवो महाबलः । ईदृक्षश्चाप्यदृक्षश्च एते दश मिताशिनः । व्रतिनः प्रसदृक्षश्च सभरश्च महायशाः । धाता दुर्गोऽधितिर्भीमस्त्वभियुक्तस्त्वपात् सहः । द्युतिर्वपुरनाध्योऽथ वासः कामो जयो विराट् । इत्येकोनाश्च पञ्चाशन्मरुतः पूर्वसंभवाः । ' इति । पुष्करावर्तकलक्षणं त्वस्मिन्नेवाङ्के तुरीयश्लोकव्याख्यायां द्रष्टव्यम् । अत्र द्वादशार्कोदयादीनां पितुर्मरणेन साकं सम्बन्धोऽसंभवन् मम पितुर्मरणं प्रलयकालोपनातिसदृशमिति सूचयतीति निदर्शनालङ्कारः । तल्लक्षणं यथा ' संभवन्वस्तुसम्बन्धोऽसंभवन्वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना ॥ ' इति दर्पणे । मन्दाक्रान्ता वृत्तम् ' मन्दाक्रान्ताम्बुधिनगहयैर्मो भनौ तौ गुरू चेत् । ' इति लक्षणात् ।

**(धो)** संभ्रान्तो भीतः । सप्रहारः प्रहारेण शत्रुकृतशस्त्राघातेन युक्त इत्यर्थः । सूत इत्यनेन संबन्धः

**(धौ)** सूतः सारथिः । 'सूतस्तु सारथौ तक्षिण ' इतिमेदिनी । प्रविश्येत्यनुवर्तते। सूतः प्रविश्य वदतीत्यर्थः । परित्रायतां रक्षतु । कुमारः अधिपतेर्द्रोणस्य पुत्रः । अस्माद्द-

**अश्वत्थामा**—( विलोक्य । ) अये कथं! तातस्य सारथिरश्वसेनः ? । आर्य! ननु त्रैलोक्यत्राणक्षमस्य सारथिरसि । किं मत्तः परित्राणमिच्छसि ? । (धं)

**सूतः**—( सकरुणम् । ) कुतोऽद्यापि ते तातः ? (धः)

**अश्वत्थामा**—( सावेगम् । ) किं तातो नामास्तमुपगतः ? । (न)

**सूतः**—अथ किम् ? । (ना)

**अश्वत्थामा**—हा तात! ( इति मोहमुपगतः । ) (नि)

**सूतः**—कुमार! समाश्वसिहि समाश्वसिहि । (नी)

---

यादिति शेषः । यद्यपि कुमारशद्बो राजपुत्रवाची तथापि स्वामिनः पुत्रे प्रयुज्यते भृत्यैः । इति उक्त्वा वदन्निति वा शेषः ।

(धं) अये कथमिति विस्मये । आर्य ! 'कर्तव्यमाचरन् काममकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य इति स्मृतः ॥' इत्युक्तलक्षण साधो ! 'आर्यः साधौ सौविदल्ले ' इति विश्वः । त्रयो लोकाः स्वर्गमृत्युपातालारूपास्त्रैलोक्यं 'चतुर्वर्णादिभ्यः स्वार्थ उपसंख्यान' मिति ष्यञ् । तस्य त्राणे रक्षणेक्षमस्य समर्थस्य मत्पितुरित्यर्थात् । मत्तः मत्सकाशात् । अतः परं शिशुजनादित्यपि क्वचिदधिकः पाठः । तत्र शिशुजनादिति मत्त इत्यस्य विशेषणम् ।

(धः) सकरुणं करुणया सहितं यथा तथा । अत्र सास्रमिति क्वचित्पाठः अस्रैः शोकजन्यैः सहितं यथा तथेत्यर्थः । अयमेव च पाठो युक्तः।करुणायां कारणाभावात् । अस्रप्रवृत्तेश्च स्वामिमरणशोकजन्याया औचित्यात् ।

(न) सावेगं ससंभ्रमं सत्वरमित्यर्थः । 'आवेगस्तु त्वरिस्तूर्णिः संवेगः संभ्रमस्त्वरा ' इति हैमः । किमिति प्रश्ने । नामेति विस्मये । 'नाम कोपेऽभ्युपगमे विस्मये' इति मेदिनी । अस्तं नाशम् । उपगतः प्राप्तः ।

(ना) अथ किम् एवमेतदित्यर्थः । 'अथ किं स्वीक्रियार्थकम्' इति वचनात् ।

(नि) मोहं मूर्छाम् । उमगतः प्राप्तः ।

(नी) समाश्वसिहि सुखीभव दुःखं त्यजेति यावत् । 'आश्वासः स्यात्तु निर्वृतौ' इति हैमः । निर्वृतिः सुखम् ।

**अश्वत्थामा**—( लब्धसंज्ञः सास्रम् । ) हा तात! हा सुतवत्सल! हा लोकत्रयैकधनुर्धर! हा जामदग्न्यास्त्रसर्वस्वप्रतिग्रहप्रणयिन्! क्वासि? । प्रयच्छ मे प्रतिवचनम् । (नु)

**सूतः**—कुमार! अलमत्यन्तशोकावेगेन । वीरपुरुषोचितां विपत्तिमुपगते पितरि त्वमपि तदनुरूपेणैव वीर्येण शोकसागरमुत्तीर्य सुखी भव । (नू)

**अश्वत्थामा**—( अश्रूणि विसृज्य । ) आर्य! कथय कथय, कथं तादृग्भुजवीर्यसागरस्तातोऽपि नामास्तमुपगतः? । (ने)

किं भीमाद्गुरुदक्षिणां गुरुगदां भीमप्रियः प्राप्तवान्? । (नै)

---

(नु) लब्धसंज्ञः प्राप्तचेतनः । 'संज्ञा नामनि गायत्र्यां चेतनारवियोषितोः' इति मेदिनी । हा इति शोके 'हा विषादे च शोके च' ति मेदिनी । लोकत्रयैकधनुर्धर । लोकत्रये त्रैलोक्य एकोऽद्वितीयो धनुर्धरो धनुषो धारको योद्धा तत्संबुद्धौ । जामदग्न्यस्य परशुरामस्य यदस्त्ररूपं सर्वं स्वं द्रव्यं तस्य प्रतिग्रहे तेनेच्छयादत्तस्य स्वीकारे प्रणयः प्रेमास्यास्तीति तथाभूत । प्रतिग्रहशब्दश्च रामादस्त्रग्रहणे पात्रतां द्योतयति । 'स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वाऽत्मीये धनेऽस्त्रियाम् ।' इति मेदिनी । प्रयच्छ देहि । पाघ्रेत्यादिना दाणो यच्छादेशः । प्रतिवचनमुत्तरम् ।

(नू) अत्यन्तशोकावेगन अत्यन्तो यः शोकस्य आसमन्ताद्वेगः प्रसरस्तेन अलं साध्यं नास्तीत्यर्थः । वीरपुरुषोचितां वीरस्य शूरस्य पुरुषस्योचितां योग्यां संग्राममरणरूपां विपत्तिं विपदं उपगते प्राप्तवति सति । तदनुरूपेण तस्य पितुरनुरूपेण योग्येन वीर्येण प्रभावेण करणभूतेन । शोके सागरत्वारोपाद्वीर्ये तरणित्वारोपो गम्यः ।

(ने) तादृगिति । तदिव दृश्यते तादृक् तस्य अनन्यसदृशस्येत्यर्थः भुजयोर्वीर्यस्य सामर्थ्यस्य सागरः समुद्र इव तथाभूतः । कथं केन प्रकारेणास्तमुपगतः? ।

(नै) किमिति । भीमप्रियः प्रियो भीम एतन्नामा पाण्डवो यस्य तथाभूतः 'वा प्रियस्य पूर्वनिपात' इति वार्तिकात्प्रियपदस्योत्तरनिपातः । तात इति कर्तृपदमनुवर्तते । भीमात् गुरुदक्षिणां गुरुप्राप्यां दक्षिणां गुरुदक्षिणात्मिकामित्यर्थः गुरुगदां गुर्वीं गदां प्राप्तवान् किमिति प्रश्नः । भीमेन गदया प्रहृत्य मे पिता निहतः किमिति भावः । गदायां गुरुदक्षिणात्वारोपो भीमस्य द्रोणहननं नितान्तमेवायुक्तमिति सूचयति । असुमेवार्थं

**सूतः**—शान्तं पापम् । (नो)

**अश्वत्थामा**—

अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना ?। (नौ)

**सूतः**—कथमेवं भविष्यति ?। (नं)

**अश्वत्थामा**—

गोविन्देन सुदर्शनस्य निशितं धारापथं प्रापितः ?। (नः)

**सूतः**—एतदपि नास्ति ।

**अश्वत्थामा**—

शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम् ॥ ९ ॥ (प)

---

भीमप्रिय इतिपदं पुष्णाति । प्रणयकारिणि गुरौ प्रहारस्य नितान्तमयुक्तत्वात् । भीमप्रिय इति च प्रणयवशादेव गदां प्राप्तवान्नतु सामर्थ्याभावादिति सूचयति ।

(नो) शान्तं पापं नैवमेतदित्यर्थः ‘ शान्तं पापमनाकाङ्क्ष ’ इतिवचनात् । अ-नाकङ्क्षेऽनङ्गीकारे ।

(नौ) अन्तेवासीति । अन्ते गुरोः समीपे वस्तुं शीलमेषां तेऽन्तेवासिनः शिष्याः। सुप्यजाताविति ताच्छीलिको णिनिः । शयवासवासेति चालुक् । तेषु दयालुर्दयाशीलः स्पृहिगृहीत्यादिना आलुच् । उज्झितनयेन त्यक्तनीतिना जिष्णुना अर्जुनेन आसादित आ-क्रान्तो घातित इति यावत् । प्रश्ने काकुः । गुरौ शिष्यवृत्तिमुल्लङ्घ्यार्जुने वा हत इति प्रश्नः। दयालुरितिदयाशीलत्वादेवायमभिभवो न पुनः पौरुषाभावादिति द्योतयति ।

(नं) एवं उज्झितनयेनार्जुनेन गुरुघातनमिति । नैतदस्तीति भावः ।

(नः) गोविन्देन श्रीकृष्णेन कर्त्रा सुदर्शनस्य एतन्नामकस्य चक्रस्य ‘चक्रं सुदर्श-नम् ’ इत्यमरः । निशितं तेजितं तीक्ष्णमित्यर्थः । धारापथं धारा चक्रस्य मुखं तस्य पन्था धारापथस्तम् । ‘खड्गादेर्निशिते मुखे ’ इति धाराशब्दार्थेषु मेदिनी । ‘ ऋक्पूरि ’ त्या-दिना अः समासान्तः । प्रापितो गमितः।श्रीकृष्णेन सुदर्शनेन प्रहृत्य घातितः किमिति भावः। अत्र निशितमित्यत्र नियतमित्यपि पाठः । नियतं नूनम् । अयमेव च पाठो युक्तः धाराप-देनैव निशितत्वबोधनादिति ।

**सूतः**—कुमार!

एतेऽपि तस्य कुपितस्य महास्त्रपाणेः
किं धूर्जटेरिव तुलामुपयान्ति संख्ये? ।
शोकोपरुद्धहृदयेन यदा तु शस्त्रं
त्यक्तं तदास्य विहितं रिपुणातिघोरम् ॥ १० ॥

**अश्वत्थामा**—किं पुनः कारणं शोकस्यास्त्रपरित्यागस्य वा?

**सूतः**—ननु कुमार एव कारणम् ।

**अश्वत्थामा**—कथमहमेव?

**सूतः**—श्रूयताम् । (अश्रूणि विसृज्य ।) (पा)

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा ।

---

(प) एभ्यो भीमार्जुनश्रीकृष्णेभ्यः अन्यतोऽन्यस्मात् चतुर्थात् गुरोः पितुर्द्रोणस्य आपदं मरणरूपां विपदं न शङ्के न संभावयामीत्यर्थः । त्रीनेतानपहायापरो मे पितरं समरे हनिष्यतीति शङ्कापि मे नास्तीति भावः । किं भीमादित्यारभ्य सूतवाक्यवर्जं पद्यमिदम्।शार्दूल विक्रीडितं वृत्तम् ।

(१०) एत इति । एते भीमार्जुनश्रीकृष्णा अपि संख्ये युद्धे 'युद्धं तु संख्यं कलि' रिति हैमः । कुपितस्य कोपं प्राप्तस्य धूर्जटेः धूर्भारभूता वैपुल्याज्जटिर्जटा यस्य तस्य श्रीशङ्करस्येव।'जटिर्जटा' इति द्विरूपः ।'धूर्जटिर्नीललोहित' इति श्रीशिवपर्यायेष्वमरः । प्रकुपितश्रीशिवसदृशस्येत्यर्थः । तस्य द्रोणस्य तुलां सादृश्यं उपयान्ति किं प्राप्नुवन्ति किं? नैव प्राप्नुवन्तीत्यर्थः । तुलामपि न यान्ति कुतः पुनरतः पौरुषाधिक्यमेतेषामिति भावः । कथं तर्हि मृतो द्रोण इत्याह । शोकेति । तु किन्तु यद्यपि अद्वितीयो वीरो द्रोणाचार्यस्तथापीत्यर्थः । शोकेनोपरुद्धं व्याप्तं हृदयं यस्य तथाभूतेन द्रोणेन यदा शस्त्रमायुधं त्यक्तं तदा रिपुणा शत्रुणा नैव तु शिष्येणेति भावः । अति घोरं द्रोणव्यापादनरूपं कर्मेत्यर्थः विहितं कृतम् । विपूर्वाद्धधातेः क्तः । पूर्वार्धे उपमालङ्कारः । वसन्ततिलकावृत्तम् ।

(पा) अश्रूणीति मरणकालिकद्रोणावस्थास्मरणादश्रुमोक्षः ।

तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥ ११ ॥

**अश्वत्थामा**—हा तात! हा सुतवत्सल! हा वृथामदर्थपरित्यक्तजीवित! हा शौर्यराशे! हा शिष्यप्रिय! हा युधिष्ठिरपक्षपातिन्!। (इति रोदिति ।) (पि)

---

(११) अश्वत्थामेति । सत्यवाचा सत्या वाक् यस्य तथाभूतेनेति सोल्लुण्ठनोक्तिः । पृथासूनुना कुन्तीपुत्रेण युधिष्ठिरेणेत्यर्थः । अनेनास्य सामर्थ्याभावो द्योत्यते । तृतीयाया उक्त्वेत्यनेन संवन्धः । अश्वत्थामा हतो मारित इति उक्त्वा । सामान्यत एवाश्वत्थामपदं प्रयुज्येति भावः । शेषे द्रोणस्य वधे सति स्वैरं स्वच्छन्दं यथा तथा गजो हस्ती अश्वत्थामा संज्ञक इत्यर्थः। इति किल निश्चयेन व्याहृतं उक्तम्। द्रोणवधानन्तरं 'योऽयं हत इति मयोक्तः सोऽश्वत्थामा गज' इत्युक्तमित्यर्थः । 'शेषः संकर्षणे वधे' इति मेदिनी । शेत इति पाठस्तु न युक्तः शयनस्य हननार्थकत्वाभावात् । तत् अश्वत्थामा हत इति वचनं श्रुत्वा । तच्छब्दो यद्यप्यव्यवहितमेव पूर्वं परामृशति तथाप्यत्राव्यवहितपरामर्शस्य प्रकृतानुपयुक्तत्वाद्बुद्धिस्थस्याश्वथामा हत इत्यस्यैव परामर्शः । दयिततनयः दयितः प्रियः पुत्रोऽश्वत्थामा यस्य तथाभूतः असौ द्रोणः कर्ता । तस्य राज्ञो युधिष्ठिरस्य। शेषे षष्ठी। तत्र वर्तमानादित्यर्थः प्रत्ययाद्विश्वासात् हेतोः । 'दयितं वल्लभं प्रियम्' इति 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ।' इति चामरः । आजौ युद्धे शस्त्राणि आयुधानि नयनसलिलं अश्रु पुत्रशोकजन्यमिति भावः । चापीत्यव्ययद्वयं समुच्चये। तुल्यं समकालमेवेत्यर्थः। मुमोच त्यक्तवान् । 'समित्याजिः समिद्युधः' इति युद्धपर्यायेष्वमरः । अत्र सत्यवाचेति विशेषणस्य साभिप्रायत्वात् परिकरालङ्कारः । 'अलङ्कारः परिकरः साभिप्राये विशेषणे ।' इत्युक्तेः । उत्तरत्र च नयनसलिलमोक्षलक्षितस्य शोकस्य शस्त्रत्यागे कारणत्वेन ततः प्राग्भावित्वस्यावश्यकत्वेऽपि तत्समकालिकत्वाभिधानात् कार्यकारणयोः पौर्वापर्यात्ययरूपातिशयोक्तिरलङ्कारः । 'पौर्वापर्यात्ययः कार्यहेत्वो' रित्यतिशयोक्तिभेदेषु विश्वनाथः । 'पौर्वापर्यविपर्ययश्च द्विधा भवति कारणात्प्रथमं कार्यस्य भावे द्वयोः समकालत्वेन च ।' इति तद्विवरणे स एव । अत्राश्वत्थामा हत इति वाक्यस्य व्याजाश्रितत्वात् अभूताहरणं नाम गर्भसन्धेरङ्गम् । तदाह विश्वनाथः 'अत्र व्याजाश्रयं वाक्यमभूताहरणं मतम् ।' इति मन्दाक्रान्तावृत्तम् ।

(पि) वृथा निष्कारणमित्यर्थः । युधिष्ठिरपक्षपातिन् युधिष्ठिरस्य पक्षे पतितुं विष्टुं शीलमस्य तथाभूत । युधिष्ठिरपक्षानुसारिन् इत्यर्थः । एतेन युधिष्ठिरस्य द्रोणप्रताणमत्यन्तमयुक्तमिति व्यज्यते ।

**सूतः**—कुमार! अलमत्यन्तपरिदेवनकार्पण्येन। (पी)

**अश्वत्थामा**—

श्रुत्वा वधं मम मृषा सुतवत्सलेन
तात! त्वया सह शरैरसवो विमुक्ताः।
जीवाम्यहं पुनरहो भवता विनापि
क्रूरेऽपि तन्मयि मुधा तव पक्षपातः॥ १२॥

( इति मोहमुपगतः। ) (पु)

**सूतः**—समाश्वसितु समाश्वसितु कुमारः।

( ततः प्रविशति कृपः। ) (पू)

**कृपः**—( सोद्वेगं निःश्वस्य। ) (पे)

---

**(पी)** अत्यन्तेति। अत्यन्तं परिदेवनं विलाप एव कार्पण्यं कृपणभावो दैन्यं तेन। अलं साध्यं नास्तीत्यर्थः। नायं शोकावसर इति भावः।

(१२) श्रुत्वेति। हे तात पितः सुते पुत्रे वत्सलेन स्नेहयुक्तेन। 'वत्सांसाभ्यां कामबले' इति लच्। ( वत्सादिषु कामोऽभिलाषोऽस्त्यस्येति वत्सल इत्यर्थः। अत एव च स्नेहयुक्तत्वं गम्यते। ) 'स्निग्धस्तु वत्सल' इत्यमरः। त्वया कर्त्रा। मम मृषा असत्यं वधं हननं तद्वार्तामित्यर्थः। श्रुत्वा शरैः बाणैः सह असवः प्राणाः मुक्तास्त्यक्ताः। शरास्त्यक्तास्तत एव च शत्रुभिर्हननात्प्राणास्त्यक्ता इति भावः। 'पुंसि भूम्न्यसवः प्राणा' इत्यमरः। पुनः परंतु अहो अहं कर्ता भवता त्वया विनाऽपि परमार्थत एव त्वयि मृतेऽपीत्यर्थः। जीवामि प्राणान् धारयामि। तत् तस्मात् क्रूरे कठोरान्तःकरणेऽपि मयि तव पक्षपातः अभिनिवेशः प्रणयातिशय इति यावत् मुधा व्यर्थः। अत्रासुभिः सह प्राणत्यागस्योक्त्या प्राणापगमकारणभूतस्य शरत्यागस्य तत्कार्यस्य प्राणापगमस्य च पौर्वापर्यविपर्ययादतिशयोक्तेर्मूलभूतत्वात्सहोक्तिरलङ्कारः। 'सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः। सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत्।' इति दर्पणे। वसन्ततिलकावृत्तम्।

**(पु)** मोहं मूर्छाम्।

**(पू)** कृपः एतन्नामा अश्वत्थाम्नो मातुलः।

**(पे)** सोद्वेगं सविषादम्।

धिक्सानुजं कुरुपतिं धिगजातशत्रुं
धिग्भूपतीन्विफलशस्त्रभृतो धिगस्मान् ।
केशग्रहः खलु तदा द्रुपदात्मजाया
द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः ॥ १३ ॥

तत्कथं नु खलु वत्समद्य द्रक्ष्याम्यश्वत्थामानम् । अथ वा हिमवत्सारगुरुचेतसि ज्ञातलोकस्थितौ तस्मिन्न खलु शोकावेगमहमाशङ्के । किं तु पितुः परिभवमसदृशमुपश्रुत्य न जाने किं व्यवस्यतीति । अथ वा (पै)

---

(१३) धिगिति । सानुजं अनुजैः कनिष्ठभ्रातृभिः सहितं कुरुपतिं कौरवेश्वरं दुर्योधनं धिक् । निन्द्यो दुर्योधन इत्यर्थः । 'धिगुपर्यादिषु त्रिषु' इति द्वितीया । द्रोणे शस्त्रं व्यापारयतोऽपि धृष्टद्युम्नस्योपेक्षणाद्दुर्योधनस्य निन्दार्हत्वम् । सानुजमिति च सहायविशिष्टत्वेऽप्युपेक्षेत्यत्यन्तमयुक्तत्वं द्योतयति । अजातशत्रुं न जात उत्पन्नः शत्रुर्द्वेष्यो यस्य तथाभूतस्य युधिष्ठिरस्य । युधिष्ठिरो हि न कंचिदपि शत्रुं मन्यते स्मेत्यजातशत्रुरित्युच्यते। 'कर्णानुजयुधिष्ठिरौ । अजातशत्रुः' इति त्रिकाण्डशेषः । असत्यभाषित्वात्सोऽपि निन्दार्ह एवेति भावः । भूपतीन् संग्रामोपस्थितान् राज्ञः धिक् । द्रोणवधरूपस्याधर्मस्योपेक्षणादिति भावः । यैः कर्तृभूतैः लिखितैश्चित्रगतैरिव निःस्पन्दैः सद्भिरित्यर्थः तदा तस्मिन् काले द्यूतावसर इत्यर्थः द्रुपदात्मजाया द्रुपदस्य पुत्र्या द्रौपद्याः च अद्य द्रोणस्य केशग्रहः केशाकर्षणमिति यावत् । द्यूतावसरे हि दुःशासनेन द्रौपद्याः केशा गृहीता अस्मिंश्च दिवसे धृष्टद्युम्नेन द्रोणस्येति । वीक्षितो दृष्टः । तानस्मानपि धिक् । वसन्ततिलकावृत्तम् ।

(पै) तत् यस्माद्द्रोणो वधं प्राप्तस्तस्मात् । कथं नु द्रक्ष्यामि । स हि वार्तामिमां श्रुत्वा शोकातिशयं प्रपद्येतेति नोचितं तद्दर्शनमिति भावः । अथवेति पूर्वोक्तस्य प्रतिषेधे । हिमवतो हिमाद्रेः सार इव सारो बलं यस्य तथाभूतमत एव च गुरु गौरवविशिष्टमक्षुद्रमित्यर्थः चेतो हृदयं यस्य तथाभूते । ज्ञातलोकस्थितौ ज्ञाता लोकानां जनानां स्थितिरवस्था मरणस्यावश्यंभावित्वेनैवं रूपा येन तथाभूते तस्मिन् अश्वत्थाम्नि शोकावेगं शोकस्य आसमन्तात्प्रसरं शोकातिशयमित्यर्थः । न आशङ्के न संभावयामि । किन्तु यद्यपि शोकस्य संभवो नास्ति तथापि । असदृशं अयोग्यं पितुः परिभवं अशस्त्रस्य केशेषु गृहीत्वा शिरःकर्तनरूपमवमानं 'अनादरः परिभवः' इत्यमरः । उपश्रुत्य श्रुत्वा । व्यवस्यति करोति करिष्यतीत्यर्थः

एकस्य तावत्पाकोऽयं दारुणो भुवि वर्तते ।
केशग्रहे द्वितीयेऽस्मिन्नूनं निःशेषिताः प्रजाः ॥ १४ ॥

(विलोक्य ।) तदयं वत्सास्तिष्ठति । यावदुपसर्पामि । (उपसृत्य । ससंभ्रमम् ।) वत्स! समाश्वसिहि समाश्वसिहि । (पो)

**अश्वत्थामा**—(संज्ञां लब्ध्वा । सास्रम् ।) हा तात! हा सकलभुवनैकगुरो! (आकाशे) युधिष्ठिर! युधिष्ठिर! (पौ)

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः ।
ताते गुरौ द्विजवरे मम भाग्यदोषा-
त्सर्वं तदेकपद एव कथं निरस्तम्? ॥ १५ ॥

---

। वर्तमानसामीप्ये भविष्यति लट् । कमुद्यमं वैरानिर्यातनाद्यर्थं प्रतिपत्स्यत इति न जान इति भावः । अथवेति न जान इत्यस्य पूर्वोक्तस्य प्रतिषेधार्थम् । किं प्रतिपत्स्यत इति ज्ञायत एवेत्यर्थः ।

(१४) किं तद्व्यवसास्यतीत्याह । एकस्येति । एकस्य द्रौपदीकेशग्रहस्येत्यर्थः अयं कौरवपाण्डवयुद्धेन जनक्षयरूपः । दारुणः भयङ्करः पाकः फलं तावत् आदित इतियावत् भुवि वर्तते । तत्र चास्मिन् द्रोणसम्बधिनि द्वितीये केशग्रहे केशानां ग्रहणे सति नूनं निश्चितं प्रजा लोका निःशेषिताः अवशेषशून्यतां प्राप्ताः । अवश्यं भावितया संभाव्यमानत्वाद्भविष्यति भूतवन्निर्देशः । पितृवधमाकर्ण्य प्रकुपितोऽश्वत्थामा निखिलानपि जनान्संहरिष्यतीति संभाव्यमानत्वाज्ज्ञायत एव तद्व्यवसितमिति भावः । पथ्यावक्त्रं वृत्तम् ।

(पो) ससंभ्रमं सत्वरम् । अश्वत्थाम्नो मूर्छितत्वमवेक्षमाणस्य संभ्रमः ।

(पौ) संज्ञां चेतनाम् । आकाशे दृष्ट्वेति शेषः । अपराधातिशयशालितया स्मृत्युपस्थितस्य युधिष्ठिरस्य प्रत्यक्षायमाणत्वादाकाशे दृष्टिदानम् । न पुनरेतदुक्तपूर्वलक्षणमाकाशभाषितम् । युधिष्ठिर युधिष्ठिर निन्द्य युधिष्ठिरेत्यर्थः । वाक्यादेरामन्त्रितस्यति कुत्सायां द्विर्वचनम् ।

(१५) आजन्मन इति । भवता त्वया कर्त्रा आजन्मनः जन्मनःप्रभृति वितथमसत्यं न किल उक्तं निश्चयेन नोक्तम् । त्वं यत् यतः जनं मं कमपि वा मनुजं न द्वेक्षि-

**सूतः**—कुमार ! एष ते मातुलः शारद्वतः पार्श्वे तिष्ठति । (पं)

**अश्वत्थामा**—(पार्श्वे विलोक्य । सबाष्पम् ।) मातुल !

गतो येनाद्य त्वं सह रणभुवं सैन्यपतिना
 यः एकः शूराणां गुरुसमरकण्डूनिकषणः ।
परीहासाश्चित्राः सततमभवन्येन भवतः
 स्वसुः श्लाघ्यो भर्ता क्व नु खलु स ते मातुल गतः ? ॥ १६ ॥

**कृपः**—वत्स ! परिगतपरिगन्तव्य एव भवान् । तदलमत्यन्तशोकावेगेन । (पः)

---

द्वेषविषयं करोषि । द्विषेर्लट् । अतः त्वं अजातशत्रुः न जातः शत्रुर्द्वेष्यो यस्य तथाभूतः असि । तत् सर्वं उपर्युक्तमाचरितम् त्वयेति शेषः। मम भाग्यदोषात् दैवदोषात् । हेतुभूतात् । गुरावाचार्ये द्विजवरे ब्राह्मणश्रेष्ठे च मम ताते पितुर्द्रोणस्य विषये एकपदे तत्काले युगपदितियावत् । कथं निरस्तं दूरीकृतं त्यक्तमित्यर्थः । सार्वदिकादप्याचरितात्तव भ्रंशो मे भाग्यदोषादेवेति भावः । 'एकपदं तत्काले नपुंसकं' इति मेदिनी । वसन्ततिलका वृत्तम् ।

(पं) मातुलः मातुर्भ्राता । पितृव्यमातुलेतिनिपातनात्साधुः । शारद्वतः शरद्वतो नाम गौतमवंश्यस्य पुरुषस्य पुत्रः कृपाचार्यः । पार्श्वे समीपे ।

(१६) गत इति । हे मातुल त्वं अद्य येन सैन्यपतिना सेनैव सैन्यं । चतुर्वर्णादित्वात्स्वार्थेष्यञ् । तस्या पत्या अधीश्वरेण । पतिः समास एवेति घिसंज्ञा । सह रणभुवं युद्धभूमिं गतः । य एकः अद्वितीयः शूराणां, षष्ठ्याः कण्डूपदेनसंबन्धः । गुर्व्याः महत्याः समररूपाया युद्धक्रियारूपायाः कण्ड्वाः खर्जूयाया निकषणः निर्मूलनकारी । 'कण्डूः खर्जूश्च खर्जूया ' इत्यमरः। वैरिणां बलवती समरवाञ्छा यमेव प्राप्य समूलं प्रशान्ता पराभवितुमशक्यत्वात्तस्येति भावः । येन सह भवतः चित्राः परीहासा नर्मवचनानि । उपसर्गस्यघञी त्यादिना दीर्घः। सततमभवन् । सः ते स्वसुर्भगिन्याः श्लाघ्यः प्रशंसनीयो भर्ता पतिः क्वनु कुत्र नु खल्विति वाक्यालङ्कारे गतः । शिखारिणीवृत्तम् । रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी 'तिलक्षणात् ।

(पः) परिगतेति परिगतं ज्ञातं परिगन्तव्यं ज्ञेयं येन तथाभूतः । अवश्यंभावि

**अश्वत्थामा**—मातुल! परित्यक्तमेव मया परिदेवितम्। एषोऽहं सुत-वत्सलं तातमेवानुगच्छामि। (फ)

**कृपः**—वत्स! अनुपपन्नमीदृशं व्यवसितं भवद्विधानाम्। (फा)

**सूतः**—कुमार! अलमतिसाहसेन।

**अश्वत्थामा**—आर्य शारद्वत! (फि)

मद्वियोगभयात्तातः परलोकमितो गतः।
करोम्यविरहं तस्य वत्सलस्य सदा पितुः॥ १७॥

**कृपः**—वत्स! यावदयं संसारस्तावत्प्रसिद्धैवेयं लोकयात्रा यत्पुत्रैः पितरौ लोकद्वयेऽप्यनुवर्तनीया इति। पश्य। (फी)

---

प्राणिनां मरणमिति विदितमेव ते वेद्यमिति भावः। तत् तस्मादत्यन्तशोकावेगेन अलं साध्यं नास्ति। नातिमात्रं शोकः करणीय इत्यर्थः।

(फ) परिदेवितं परिदेवनं। परिपूर्वाद्देवतेर्नपुंसके भावे क्तः। तातमनुगच्छामि पितुरनुगमनं करोमि। प्राणांस्त्यजामीत्यर्थः।

(फा) भवद्विधानां त्वत्सदृशानां पराक्रमवतां वीराणामिति भावः। एतत्प्राणत्यागरूपं कर्म अनुपपन्नं अयुक्तम्। आर्य साधो। गुरवः किलार्य इति कनीयोभिर्वाच्या इति नाट्यविदः।

(फि) शारद्वत शरद्वतः पुत्र कृप।

(१७) मदिति। तातः पिता द्रोणः। मद्वियोगभयात् मम वियोगाद्यद्भयं तस्माद्धेतुभूतात् इतः अस्माल्लोकात्परलोकं गतः। यदि जीविष्यामि तदाऽश्वत्थाम्नः परलोकं गतत्वाद्वियोग आत्यन्तिकोऽनुभवनीयः स्यात्तेन मृतः परस्मिँल्लोके तेन संगस्य इत्यभिप्रेत्य मद्विरहभीतः प्राणानत्याक्षीदिति भावः। अतः वत्सलस्य स्नेहयुक्तस्य तस्य पितुः सदा निरन्तरं अविरहं विरहाभावं मया समागममित्यर्थः करोमि संपादयामि। स इव मृत्वा परस्मिँल्लोके निरन्तरं तेन साकं वत्स्यामीति भावः। सहि मद्विरहाद्भीतो मत्समागमार्थमेव परलोकं गतवान् अतस्तस्येष्टं मत्समागमं सदातनं संपादयिष्यन्परं लोकं गच्छामीत्याशयः। 'अत्र करोमि विरहं तस्य वत्सलस्य कथं पितुरित्यपि पाठः। स च सुगमः।

निवापाञ्जलिदानेन केतनैः श्राद्धकर्मभिः ।
तस्योपकारे शक्तस्त्वं किं जीवन्किमुतान्यथा ?॥ १८ ॥

---

(फ़ी) संसरन्ति जायन्तेऽस्मिन्प्राणिनः संसार इहलोकः । 'दुखं लोको भवश्चैव संसारः कष्टकारकः । ' इति त्रिकाण्डशेषः । स च यावदस्ति तावत् । सर्वस्मिन्नपि जगतीत्यर्थः । इयं वक्ष्यमाणा लोकयात्रा लोकानां व्यवहारः । 'शरीरयात्राऽपि च त ' इत्यत्र श्रीमद्गीतावचने यात्राशब्दस्य व्यवहारार्थकत्वमभ्युपगतं श्रीमता नीलकण्ठेन । लोकयात्रायाः स्वरूपमाह यदिति । लोकद्वये इहलोके परलोके च । वर्तमाना इति शेषः । पितरः पुत्रैः कर्तृभूतैः अनुवर्तनीयाः सेवनीया इत्यर्थः । जीवन्तो मृता अपि वा पितरस्तदनुकूलेनाचरणेन पुत्रैः सेवनीया इतीदं सर्वत्रापि लोकव्यवहारसिद्धम् । सर्वजनसंमतश्चायमाचारो न भवता परित्यक्तुं युक्तः । 'जीवतो वाक्यकरणात् ( मृते पितरि ) प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता । ' इति स्मृतिः । स्मृतिसिद्धत्वेऽप्यस्य धर्मस्य सकल लोकव्यवहारतयोक्तिः स्मृतेरस्या देशविशेषविषयकत्वमित्याशङ्काया निरासायेति द्रष्टव्यम् ।

(१८) जीवतस्तावत्पितुरनुवर्तनं त्वया विहितं संप्रति पुनर्मृतस्य पितुरनुवर्तनं जीवतैव भवता कर्तुं शक्यं न मृतेनेत्याह । निवापेति । न्युप्यन्ते पितरमुद्दिश्य दीयन्त इति निवापास्ते च ते अञ्जलयः तिलमिश्रोदकाञ्जलयः तेषामेव तर्पणादिषु पितृभ्यो देयत्वात् । तेषां दानेन करणभूतेन । 'पिण्डान्निवपतीत्यादौ निपूर्वस्य वपतेः पित्रुद्देश्यकदानार्थकत्वस्य दर्शनात् ततः कर्मणि घञि निष्पन्नस्य निवापशब्दस्य पित्रुद्देशेन देयमित्यर्थ इति द्रष्टव्यम् । अत एव 'पितृदानं निवापः' स्यादित्यमरः । केतनैः भूरिभोजनार्थं ब्राह्मणानां निमन्त्रणैः करणभूतैः । तत्पूर्वकैर्ब्राह्मणभोजनैरित्यर्थः । प्रत्यब्दं पुत्रैः पितरमुद्दिश्य भूरिभोजनस्यावश्यमनुष्ठेयत्वात् । 'प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् । त्र्यहं न कीर्तयेद्ब्रह्म ।' इत्यादिषु मन्वादिवचनेषु निमन्त्रणवाची केतनशब्दो दृष्टः । केतनैर्वृषाङ्कैस्तदुद्देशेन त्यक्तमठादिभिर्वेति तर्कवाचस्पतिः । वितानैरिति पाठे तननं विस्तरकरणं तानः । भावे घञ् । स विगत एभ्यस्तानि वितानानि विस्तरशून्यानीत्यर्थः । तैः । 'श्राद्धे कुर्यान्न विस्तरम् । ' इति मनूक्तेः । श्राद्धकर्मभिः श्राद्धक्रियाभिः करणभूताभिः । 'वितानैर्यज्ञैः पितृयज्ञैरित्यर्थ' इति तु न साधु । श्राद्धकर्मणामपि पितृयज्ञत्वेन पौनरुक्त्यापातात् । तस्य द्रोणाचार्यस्य उपकारे साहाय्यकरणे त्वं अश्वत्थामा कर्ता किं जीवन् प्राणान् धारयन् शक्तः किमुत किं वा अन्यथा तद्विपरीतं प्रकारं प्राप्तो मृत इत्यर्थः शक्तः इति प्रश्नः । तदेतत्त्वयैव विचार्यमिति भावः । पुत्रैरवश्यं कर्तव्यस्य तर्पणभूरिभोजनश्राद्धादेः कर्मणो जीवतैवानुष्ठानस्य संभवा-

**सूतः**—आयुष्मन्! यथैव मातुलस्ते शारद्वतः कथयति तत्तथा। (फु)

**अश्वत्थामा**—आर्य! सत्यमेवेदम्। किं त्वतिदुर्वहत्वाच्छोकभारस्य न शक्नोमि तातविरहितः क्षणमपि प्राणान्धारयितुम्। तद्गच्छामि तमेवोद्देशं यत्र तथाविधमपि पितरं द्रक्ष्यामि। (उत्तिष्ठन्खड्गमालोक्य। विचिन्त्य।) कृतमद्यापि शस्त्रग्रहणविडम्बनया। भगवन् शस्त्र! (फू)

> गृहीतं येनासीः परिभवभयान्नोचितमपि
> प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः।
> परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
> द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते॥ १९॥

---

दन्यथा चासंभवात्प्राणपरित्यागस्त्वयि नोपपन्न इति भावः। पथ्यावक्त्रं वृत्तम्।

(फु) आयुष्मान्निति। 'अयुष्मन् रथिनं सूतः (वदेत्)' इति दर्पणवचनात् रथिनोऽश्वत्थाम्नः संबुद्धिरियम्।

(फू) अतिदुर्वहत्वात् अत्यन्तं दुखेन वोढुं शक्यत्वात्। अतिदुःसहत्वादित्यर्थः। तत् यतस्तातविरहितः प्राणान्धारयितुं न शक्नोमि तस्मात्। उद्देशं प्रदेशम्। यत्र प्रदेशे तथाविधमपि तादृशमपि मृतमपीत्यर्थः। अद्य अस्मिन् पितृमरणदिवसेऽपि शस्त्रग्रहणरूपा या विडम्बना हास्यजनको व्यापारः तया। कृतं अलम्। गृहीतशस्त्रेऽपि मयि शत्रुणा [illegible]-दनान्निष्फलं विडम्बनामात्रमेव मे शस्त्रग्रहणमिति भावः।

(१९) गृहीतमिति। हे शस्त्र! यतो यस्मात्कारणात्। येन द्रोणेन नोचितमयोग्यमपि। नञर्थकेन न शब्देन समासोऽयं न तु नञा। गृहीतं आसीः अभवः। परिभवभयात् शस्त्रग्रहणाभावे शत्रवः पराभविष्यन्तीति भयात्। 'परापर्यभितो [illegible]' इत्यादिषु हैमादिवचनेषु परिपूर्वस्यापि भवतेः पराभवार्थकत्वं दृष्टम्। शस्त्रग्रहणस्य [illegible] ब्राह्मणानुचितत्वेऽपि 'जिघांसन्तं जिघांसीयात' इत्युक्तजिघांसमानेभ्यः शत्रुभ्यः परिभवो माभूदिति स्वधर्मविरुद्धमपि द्रोणेन स्वीकृतमासीरिति भावः। अस्तेर्लङ्। अस्ति सिचोऽपृक्त इतीट्। यस्य द्रोणस्य प्रभावात्सामर्थ्यात्तेजसो वा हेतुभूतात् कश्चन कोऽपि [illegible] तव विषयः गोचरः न खलु नाभूत् नासीदिति न। सर्वोऽपि प्रतिभटो जनस्ते [illegible] अब-

(इत्युत्सृजति ।) (फे)

(नेपथ्ये ।)

भो भो राजानः! कथमिह भवन्तः सर्वे गुरोर्भारद्वाजस्य परिभवममुना नृशंसेन प्रयुक्तमुपेक्षन्ते? (फै)

**अश्वत्थामा**—(आकर्ण्य । सक्रोधं शनैः शस्त्रं स्पृशन् ।) किं गुरोर्भारद्वाजस्य परिभवः? (फो)

(पुनर्नेपथ्ये ।)

आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोकाद्-
द्रोणस्याजौ नयनसलिलक्षालितार्द्राननस्य ।

---

स्यमासीदित्यर्थः । तेन द्रोणेन सुतशोकात् पुत्रविषयकाच्छोकादेव हेतुभूतात् न तु भयाच्छत्रुजन्याद्धेतोः परित्यक्तमसि । अहमपि त्वां विमोक्ष्ये त्यक्ष्यामि । तत इति शेषः । भवते स्वस्ति तव कल्याणं भवत्वित्यर्थः । 'नमः स्वस्ती' त्यादिना चतुर्थी । 'स्वस्ति स्यान्मङ्गले पुण्य' इति मेदिनी । मङ्गलं कल्याणम् । उभाभ्यामप्यावाभ्यां परित्यक्तत्वादतः परं सुखमास्वेति भावः ।

(फे) उत्सृजति त्यजति ।

(फै) भारद्वाजस्य भरद्वाजपुत्रस्य अमुना नृशंसेन घातुकेन धृष्टद्युम्नेनेत्यर्थः । 'नृशंसो घातुकः क्रूर' इत्यमरः । प्रयुक्तं कृतं परिभवमनादरम् । 'अनादरः परिभवः' इत्यमरः । पराभवमिति वा । उपेक्षन्ते समीपे स्थित्वा पश्यन्ति । औदासीन्यमालम्ब्य पश्यन्तीत्यर्थः । आत्मनो गुरौ शत्रुणा प्रयुक्तस्य परिभवस्य सर्वैरुपेक्षणमन्याय्यमिति भावः । द्रोणस्य भरद्वाजत उत्पत्तिस्तु महाभारतेऽभिहिता । 'गङ्गाद्वारं प्रति महान् बभूव भगवानृषिः । भरद्वाज इति ख्यातः सततं शंसितव्रतः ॥ × × ददर्शाप्सरसं साक्षाद्घृताचीमाप्लुतामृषिः । × × × तत्र संसक्तमनसो भरद्वाजस्य धीमतः । ततोऽस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे । ततः समभवद्द्रोणः कलशे तस्य धीमतः ।' इति ।

(फो) सक्रोधमिति पितुः परिभवश्रवणात् क्रोधः । प्रतिज्ञातपरित्यागस्य शस्त्रस्य पुनर्ग्रहणे मनसः संकोचाच्छनैः स्पर्शनम् ।

मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं
धृष्टद्युम्नः स्वशिबिरमयं याति सर्वैं सहध्वम् ॥ २० ॥

( सक्रोधं सकम्पं च कृपसूतौ दृष्ट्वा । ) किं नामेदम्? ( फौ )

प्रत्यक्षमात्तधनुषां मनुजेश्वराणां
प्रायोपवेशसदृशं विधिमास्थितस्य ।
तातस्य मे पलितमौलिनिरस्तकाशे
व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः ॥ २१ ॥

---

(२०) परिभवमाचष्टे आचार्यस्येति । अयं पुरो दृश्यमानः धृष्टद्युम्न एतन्नामा द्रुपदपुत्रः कर्ता त्रिभुवनगुरोः त्रयाणां भुवनानां समाहारस्त्रिभुवनं स्वर्गमृत्युपातालाख्यास्त्रयो लोकास्तत्र गुरुर्महान् । तस्य त्रिभुनश्रेष्ठस्येत्यर्थः । त्रिभुवनमिति पात्रादित्वात्साधु । आचार्यस्य विद्योपदेष्टुः । आजौ युद्धे शोकात् पुत्रविषयकादिति भावः हेतुभूतात् न्यस्तं अधो निहितं त्यक्तमिति यावत्। शस्त्रं येन तथाभूतस्य। किं च । नयनसलिलैरश्रुभिः क्षालितं धौतं तत एव चार्द्रं आननं मुखं यस्य तथाभूतस्य । पुत्रशोकादश्रूणि मुञ्चत इत्यर्थः । द्रोणस्य पलितधवले पलितेन केशानां पाकेन धवले शुक्लतां प्राप्ते मौलौ चूडायां पाणिं करं न्यस्य निधाय केशग्रहणार्थं व्यापार्येत्यर्थः । 'पलितं शैलजे तापे केशपाके च कर्दमे । ' इति मेदिनी । 'चूडा (शिखा ) किरीटं केशाश्च संयता मौलयस्त्रयः । ' इत्यमरः । नृशंसं क्रौर्यं द्रोणवधरूपं कृत्वा । अत्र नृशंसपदं भावप्रधानम् । स्वशिबिरं आत्मनः सेनानिवेशस्थानं याति गच्छति । सर्वे वीराः सहध्वं क्रौर्यमेतदस्येत्यर्थात् । दुःसहं किलैतदध्यवसितमेतेन । अत्यन्तं चायुक्तमेतत्सहनमिति भावः । उपालम्भोक्तिरियम् । मन्दाक्रान्ता वृत्तम् ।

(फौ) सकम्पं क्रोधावेशात्कम्पः ।

(२१) प्रत्यक्षमिति । प्रायोपवेशसदृशं प्रायाय अनशनमृत्यव उपवेश उपवेशनं प्रायोपवेशस्तत्सदृशं विधिं कर्म आस्थितस्य आश्रितवतः । मरणप्रतीकारमकुर्वत इत्यर्थः । अत एव । अशस्त्रपाणेः नास्ति शस्त्रं पाणौ यस्य तथाभूतस्य। पलितः जराजन्यशुक्लत्वयुक्तः । अर्श आदित्वादच् । यो मौलिः चूडा तेन निरस्तः तिरस्कृतः काशः काशकुसुमानि येन तस्मिन् । जरया शुक्लत्वात्काशपुष्पसदृश इत्यर्थः । पुष्पमूलेषु बहुलमिति पुष्पार्थे प्रत्ययलुप् । मे तातस्य पितुः शिरसि मस्तके, आत्तधनुषां गृहीतधनुषां मनुजेश्वराणां राज्ञां

**कृपः**—वत्स! एवं किल जनः कथयति । (फं)

**अश्मत्थामा**—किं तातस्य दुरात्मना परिमृष्टमभूच्छिरः? । (*)

**सूतः**—(सभयम् ।) कुमार! आसीदयं तस्य तेजोराशेर्देवस्य नवः परिभवावतारः । (फः)

**अश्वत्थामा**—हा तात! हा पुत्रप्रिय! मम मन्दभागधेयस्य कृते शस्त्रपरित्यागात्तथाविधेन क्षुद्रेणात्मा परिभावितः । अथ वा (ब)

परित्यक्ते देहे रणशिरसि शोकान्धमनसा
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत् ।
स्फुरद्दिव्यास्त्रौघद्रविणमदमत्तस्य च रिपो-
र्ममैवायं पादः शिरसि निहितस्तस्य न करः ॥ २२ ॥

---

प्रत्यक्षं समस्तं शस्त्रं व्यापारितम् प्रहृतमित्यर्थः । प्रश्ने काकुः । अत्र विधिमित्यत्र व्रतमिति पाठे व्रतं नियमं मरणाप्रतीकाररूपमित्यर्थः । शममिति पाठे प्रायोपवेशे सदृशमुचितं शमं शान्तिमित्यर्थः । वसन्ततिलकाख्यं वृत्तम् ।

(फं) एवं धृष्टद्युम्नेन शोकाकुलस्य परित्त्यक्तशस्त्रस्य च द्रोणस्य शिरसि शस्त्रं व्यापारितमिति जनः कथयति । नैतन्मया साक्षात्कृतमिति भावः।(*) दुरात्मना दुष्टहृदयेन धृष्टद्युम्नेन परिमृष्टं स्पृष्टम् ।

(फः) सभयमिति अश्वत्थाम्नः कोपातिशयसंभावनाद्भयम् । देवस्य देवतुल्यस्य । नवः अभूतपूर्वः । परिभवावतारः पराभवोत्पत्तिः ।

(ब) हा इति शोके । पुत्रप्रिय प्रियः पुत्रोऽस्य तथाभूत । मन्दभागधेयस्य मन्दं अल्पं भागधेयं दैवं यस्य तथाभूतस्य मम कृते कारणात्।'मूढाल्पापटुनिर्भाग्या मन्दाः' इत्यमरः। क्षुद्रेण अवमेन 'त्रिषु क्रूरेऽधमेऽल्पेपि क्षुद्रम्' इत्यमरः । शस्त्रपरित्यागात् शस्त्रपरित्यागं विधाय आत्मा स्वशरीरं परिभावितः पराभवं नीतः। त्वया कर्तृभूतेनेति शेषः । अथवेति-पूर्वोक्तस्य प्रतिषेधे । नायं पराभव इत्यर्थः ।

(२२) पराभवत्वाभावं समर्थयति । परित्यक्त इति । शोकान्धमनसा शोकेन अन्धं कर्तव्यविचारशून्यं मनो यस्य तथाभूतेन द्रोणेन रणशिरसि संग्राममुखे (युद्धाग्रप्रदेशे)

आः दुरात्मन्पाञ्चालापसद! (बा)

तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां खलु विदधतः पाणिमस्योत्तमाङ्गे ।

---

देहे परित्यक्ते परित्यागं निश्चित्योपेक्षित इत्यर्थः श्वा कुक्कुरः, काकः, द्रुपदतनयो द्रुपदपुत्रो धृष्टद्युम्नो वा कर्ता शिरः मस्तकं परिमृशेत् स्पृशेत् । तेन नायं तस्य परिभव इति भावः । कस्य तर्ह्यसौ पराभव इत्याह । स्फुरतां दिव्यानामस्त्राणामोघः समूह एव द्रविणं द्रव्यं तस्य सम्बन्धिना तज्जन्येनेत्यर्थः मदेन गर्वेण मत्तस्य उन्मत्ततां प्राप्तस्य । 'संघाते प्रकरौघवार-निकरव्यूहाः समूहश्चयः । ' इति हैमः । 'मदो रेतसि कस्तूर्यां गर्वे ' इति मेदिनी । रिपोः शत्रोर्धृष्टद्युम्नस्य अयं यो द्रोणस्य शिरसि निहित इति श्रूयते सः तस्य द्रोणस्य शिरसि करः न निहितः अपितु ममैव शिरसि पादश्चरणो निहितः । परित्यक्तशस्त्रत्वाद्येन केनापि वा परिमार्ष्टुं शक्ये मत्पितुः शिरसि धृष्टद्युम्नेन व्यापारितः पाणिर्ममैवावमानाय न तु द्रोणस्येति भावः । अत्र स्फुरद्दिव्यास्त्रौघेत्यत्र असंख्यातास्त्रौघेति क्वचित्पाठः स च सुगमः । ममै-वेत्यत्र मयैवेति क्वचित्पाठः । तत्र एवेतिभिन्नक्रमं पाद इत्यतः परं योज्यम् । मया अयं पाद एव निहितः निश्चितं निधास्यते न तु तेनेव कर इत्यर्थः । असंख्यातास्त्रौघेत्यनेन प्रतीकारा-वसरं प्रदायेति गम्यते । पूर्व एव पाठो बहुपुस्तकसंवादी स एव च समीचीनः । अन्यथा भग्नक्रमत्वापत्तेः । एवकारस्य च मयेत्यतः परं योजने न कश्चिच्चमत्कारः । च रिपोरि-त्यत्र रिपुणेत्यपि पाठः सोऽप्यनुरूपः । तत्र चासंख्यातेत्यादिविशेषणमश्वत्थाम्नः । वृथै-वायं ममाव्रमद इति भावः । अत्र पूर्वार्धे शुनः काकस्य चाप्रकृतयोः प्रकृतस्य च द्रुपदत-नयस्य शिरःपरिमर्शनरूपस्यैकस्यैव धर्मस्याभिसंबन्धेनौपम्यस्य प्रतीयमानतया दीपकमलङ्कारः । तल्लक्षणं तु साहित्यरत्नाकरे 'प्रकृतानां चेतरेषामौपम्यं गम्यते यदि । समानधर्मसंबन्धा-द्दीपकं तत्तु षड्विधम् । ' इति । उत्तरार्धे च प्रकृतस्य द्रोणशिरसि करव्यापारणस्य प्रतिषेधे-नाश्वत्थाम्नः शिरसि पादार्पणस्य स्थापनादपह्नुतिरलङ्कारः । 'प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः । ' इति विश्वनाथोक्तेः । अपह्नुतिश्चेयं द्रोणस्य शिरसि धृष्टद्युम्नसदृशेन क्षुद्रेण करार्पणं मच्छिरसि पदार्पणेन सदृशमिति ध्वनयति । अन्योन्यनिरपेक्षतयाऽलङ्कारयो-रनयोः संसृष्टिः । शिखरिणी वृत्तम् ।

**(बा)** पाञ्चालापसद पाञ्चालदेशाधिपतिषु अधम । 'निहीनोऽपसदो जाल्म' इत्यधमपर्यायेष्वमरः ।

अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना-
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते ? ॥ २३ ॥

युधिष्ठिर! युधिष्ठिर! अजातशत्रो! अमिथ्यावादिन्! धर्मपुत्र! सानुजस्य ते किमनेनापकृतम्? । अथ वा किमनेनालीकप्रकृतिजिह्मचेतसा । अर्जुन ! सात्यके! बाहुशालिन्वृकोदर! माधव! युक्तं नाम भवतां सुरासुरमनुजलोकैक-धनुर्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलङ्केन मनुजपशुना स्पृश्यमानमुत्तमाङ्गमुपेक्षितुम् ? अथ वा सर्व एवैते पातकिनः । किमेतैः ? । (बि)

---

(२३) तातमिति । तातं मे पितरं द्रोणं शस्त्रग्रहणविमुखं शस्त्रग्रहणतः पराङ्मुखं शस्त्रग्रहणप्रवृत्तिशून्यमित्यर्थः । निश्चयेन उपलभ्य ज्ञात्वा । नायं शस्त्रं ग्रहीष्यतीति निश्चितं ज्ञात्वेत्यर्थः । शङ्कां भीतिं त्यक्त्वा अस्य द्रोणस्य उत्तमाङ्गे शिरसि पाणिमात्मनः करं विदधतः कुर्वतः न्यस्यत इत्यर्थः । 'उत्तमाङ्गं शिरः शीर्षमि' त्यमरः । निदधत इति पाठः स्पष्टार्थः । ते तव स्मृतिमित्यनेन संबन्धः । करधृतधनुः करे धृतं धनुर्येन तथाभूतः रिपुक्षयाय सज्ज इत्यर्थः । पाण्डोः पाण्डवानां पितुः, पाञ्चालानां पाञ्चालदेशाधिपतीनां च सेनैव तूलः कार्पासस्तस्योत्क्षेपे ऊर्ध्वं क्षेपे निर्मूलने इत्यर्थः प्रलयसम्बन्धी पवनो वातः अश्वत्थामा मत्स्वरूपो वीरः स्मृतिं स्मरणं न यातः किम्? । अत्र पाण्डुपाञ्चालसेनयोस्तूलत्वारोपोऽश्वत्थाम्नि प्रलयपवनत्वारोपस्य कारणमिति परम्परितं रूपकमलङ्कारः । 'यत्र कस्यचिदारोपः परारोपणकारणम् । तत्परम्परितम्' इति लक्षणात् । एतेन चालङ्कारेण यथा प्रलयपवनस्य तूलोत्क्षेपे नास्ति श्रमलेशोऽपि एवं विनैव श्रमं पाण्डुपाञ्चालसेनां निर्मूलयिष्यामीति व्यज्यते । मन्दाक्रान्ता वृत्तम् ।

(बि) अलीकप्रकृतिजिह्मचेतसा । अलीकं असत्यवचनमेव प्रकृतिः स्वभावोऽस्य तथाभूतश्चासौ जिह्मं कुटिलं चेतो हृदयं यस्य तथाभूतः तेन । प्रकृत्याऽसत्यवचनशीलेनाऽपि सत्यवचनाडम्बरं नाटयतेत्यर्थः । 'अरालं वृजिनं जिह्म' मिति कुटिलपर्यायेष्वमरः । बाहुशालिन् इति आचार्यवधेऽपि तूष्णीम्भावाद्वृथैव ते बाहुबलमिति व्यज्यते । नामेति प्रश्ने । युक्तं योग्यं किमित्यर्थः । सुराणामसुराणां मनुजानां च लोकेषु भुवनेषु स्वर्गपातालमृत्युसंज्ञेषु एकोऽद्वितीयो निरुपम इत्यर्थः धनुर्धरो योधस्तस्य तत्रापि च द्विजन्मनो

कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ २४ ॥

**कृपः**—वत्स! किं न संभाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्राम कोविदे भवति ? । (वी)

---

मातुरुदरादुपनयनाच्चेति द्वे जन्मनी यस्य तथाभूतस्य । ब्राह्मणस्येत्यर्थः । परिणतवयसो वृद्धस्य । सर्वाचार्यस्य सर्वेषामाचार्यस्य । एतेनात्यन्तमयुक्तं भवत्कृतमुपेक्षणमिति गम्यते । विशेषतो मम विक्रमातिशयशालिनोऽश्वत्थाम्नः पितुः। एतेन मत्तो भीतैरपि तावद्युष्माभिर्नोपेक्षणीयं नृशंसमेतत्कर्मेति व्यज्यते । मनुजः पशुरिव अविमृष्यकारित्वान्मनुजपशुस्तेन स्पृश्यमानम् । एते सर्वे अर्जुनादयः। पातकिनः द्रोणवधेऽप्रतिषेधरूपानुमतिप्रदानात्पातकयुक्ताः । अप्रतिषिद्धं हि परमतमनुमतं भवतीति । अनुमतिश्च पातकमेव । तथा ह्याहुः 'अनुमन्ता विशासिता निहन्ता क्रयविक्रयी । संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ।' इति । एतैः किं? न किमपि नः प्रयोजनमित्यर्थः । 'कथापि ननु पापानामलमश्रेयसे यतः ।' इति भावः ।

(२४) कृतमिति। अयमीदृश्यामवस्थायां वर्तमानः अहं कर्ता यैः निर्मर्यादैर्मर्यादाशून्यैः मनुजपशुभिः पशुसदृशैर्मानुषैः उदायुधैः उद्यतशस्त्रैः भवद्भिः पाण्डवपक्ष्यैर्वीरैः कर्तृभूतैः इदं गुरु महत् पातकं द्रोणवधरूपं कृतं अनुमतमनुमोदितं दृष्टं साक्षात्कृतं वा, सभीमकिरीटिनां भीमेन किरीटिना अर्जुनेन च सह वर्तमानानां नरकरिपुणा नरकासुरस्य शत्रुणा श्रीकृष्णेन सार्धं सह तेषां द्रोणवधस्य कर्तॄणामनुमन्तॄणां द्रष्टॄणां च असृङ्मेदोमांसैः असृग्भिः रक्तैः मेदोभिर्मांसस्नेहैश्चरबी इति महाराष्ट्र्यां ख्यातैः मांसैश्च दिशां दिग्देवतानामित्यर्थः बलिं उपहारं करोमि । 'करोपहारयोः पुंसि बलिः' इत्यमरः । यैर्द्रोणो हतस्तद्धननं वा दृष्टमनुमतं वा तेषां शोणितादिकमस्मिन्नेव क्षणे दिग्देवताभ्य उपहरामीत्यर्थः । अत्र भीमादीन् रिपूनालम्ब्य प्रवृत्तस्तेषां द्रोणवधादिचेष्टाभिरुद्दीपितः संग्रामसंभ्रमादिभिः प्रौढदीप्तो रौद्रो रसः। हरिणीवृत्तम् । 'नसमरसला गः षड्वेदैर्हयैर्हरिणी मता ।' इति लक्षणात् ।

**अश्वत्थामा**—भो भोः पाण्डवमत्स्यसोमकमागधाद्याः क्षत्रियापसदाः! (बु)

पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृतं यद्रामेण श्रुतिमुपगतं तन्न भवताम्? ।
किमद्याश्वत्थामा तदरिरुधिरासारविघसं
न कर्म क्रोधान्धः प्रभवति विधातुं रणमुखे? ॥ २९ ॥

---

(बी) भारद्वाजतुल्ये द्रोणाचार्यसदृशे बाहुशालिनि भुजबलेन शोभमाने दिव्यास्त्रग्रामकोविदे दिव्यानां दिविभवानामस्त्राणामायुधानां ग्रामे समूहे कोविदः पण्डितस्तथाभूते नानाविधदिव्यास्त्रप्रयोगचतुर इत्यर्थः । 'दिव्यं लवङ्गे धात्र्यां स्त्री वल्गौ दिविभवे त्रिषु ।' इति मेदिनी । 'ग्रामो विषयशब्दास्त्रभूतेन्द्रियगुणाद्व्रजे ।' इति हैमः । 'सन्सुधीः कोविदो बुधः ।' इत्यमरः । त्वयि किं न संभाव्यते? सर्वमपि संभाव्यत एव । भीमादीनां शोणितैर्दिशां बलिकरणं त्वयि संभवतीत्यर्थः । अत्र भारद्वाजतुल्यपराक्रम इति प्राचां पाठः । एतेन अनुनयाख्यं नाट्यलक्षणं प्रदर्शितम् । तल्लक्षणं तु दर्पणे 'वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम् ।' इति ।

(बु) पाण्डवाः, मत्स्या मत्स्यदेशाधिपतयो विराटवंश्याः, सोमकाः सोमककुले लब्धजन्मानो द्रुपदवंश्याः, मागधा मगधदेशाधिपतयश्चादयो येषु तथाभूताः क्षत्रियापसदाः क्षत्रियाधमाः ।

(२५) पितुरिति । पितुर्जनकस्य जमदग्नेः मूर्ध्नि मस्तके स्पृष्टे सति कार्तवीर्यार्जुनपुत्रैश्छेदाय कृतस्पर्शे सति ज्वलदनलभास्वत्परशुना ज्वलन्ननलोऽग्निरिव भास्वान् कान्तिशाली परशुः कुठारो यस्य तथाभूतेन रामेण परशुरामेण यत् कृतं तत् कर्म भवतां श्रुतिं श्रवणं न उपगतं प्राप्तमिति प्रश्ने काकुः । परशुरामेणकृतं कर्म भवद्भिर्न श्रुतं किमित्यर्थः । तत् रुधिरासारविघसं रुधिरस्य कुठारच्छिन्नानां क्षत्रियाणां रक्तस्य आसारो धाराभिः संपात एव विघसः पिशाचादीनामाहारो यत्र तथाभूतं कर्म क्रोधान्धः क्रोधेन विलुप्तविचारोऽश्वत्थामा अद्य रणमुखे संग्रामस्याग्रप्रदेशे विधातुं कर्तुं न प्रभवति न समर्थो भवति किम्? । अवश्यं समर्थ इत्यर्थः । 'धारासंपात आसार' इत्यमरः । विघस आहार इति शब्दरत्नावलीति शब्दकल्पद्रुमः । दृश्यते च 'अयि वनप्रिय विस्मृत एव किं बलिभुजो विघसो भवताऽधुना ।' इत्यादिषु विघसशब्दस्याहारार्थत्वम् । पुरा किल परशुरामे द्वेषादवसरं प्रतीक्षमाणैः समिदाहरणार्थं बहिर्गतवति रामे च्छिन्नं शिरस्तत्पितुर्जमदग्नेः क्षत्रियैः कार्तवीर्यार्जुनपुत्रैः,

सूत! गच्छ त्वं सर्वोपकरणैः साङ्ग्रामिकैः सर्वायुधैरुपेतं महाहवलक्षणं नामास्मत्स्यन्दनमुपनय। (बू)

**सूतः**—यदाज्ञापयति कुमारः। (इति निष्क्रान्तः।)

**कृपः**—वत्स! अवश्यप्रतिकर्तव्येऽस्मिन्दारुणे निकाराग्नौ सर्वेषामस्माकं कोऽन्यस्त्वामन्तरेण शक्तः प्रतिकर्तुम्। किं तु— (बे)

**अश्वत्थामा**—किमतः परम्?। (बै)

**कृपः**—सैनापत्येऽभिषिच्य भवन्तमिच्छामि समरभुवमवतारयितुम्।(बो)

---

तच्च दृष्ट्वा प्रतिज्ञातक्षत्रनिर्मूलनः परशुरामस्त्रिःसप्तकृत्वः क्षत्रियान्निर्मूलयामासेति पौराणिकी कथाऽत्रानुसन्धेया। राम इवाहमपि सर्वानपि क्षत्रियानद्यैव निर्मूलयितुं प्रभवामीति भावः। विघसः पित्रादिभुक्तशेष इति भरतः। तन्मतेऽत्र रुधिसार एव पितृभुक्तशेषो यत्र तथाभूतमित्यर्थः। परशुरामेण हि क्षत्रियांश्छित्वा तेषां रक्तैः पितरस्तर्पिता इति पुरावृत्तविदः। शिखरिणी वृत्तम्।

(बू) सांग्रामिकैः संग्रामे युद्धे साधुभिः। गुडादित्वाठ्ञ्। सर्वोपकरणैः सर्वैः साधनैः। सर्वैरायुधैश्च उपेतं युक्तम्। महाहवलक्षण महत आहवस्य युद्धस्य लक्षणं चिह्नभूतः तम्। संज्ञेयमस्य रथस्य। स्यन्दनं रथम्। उपनय आनयेत्यर्थः।

(बे) अस्मिन् दारुणे भीषणे 'दारुणं भीषणं भीष्म' मित्यमरः। निकाराग्नौ शरीरतापकत्वादग्निसदृशे निकारे द्रोण वधरूपे परिभवे। 'निकारः स्यात्परिभवे' इति मेदिनी। अवश्यप्रतिकर्तव्ये अवश्यं प्रतीकारेण योजनीये सति 'अवश्यमः कृत्ये' इत्यवश्यमो मलोपः। शत्रुणा कृतस्यापकारादेर्निर्यातनाय यद्विधीयते स प्रतीकारः। सर्वेषामस्माकं मध्ये। निर्धारणे षष्ठी। त्वामन्तरेण त्वां विना। अन्तरान्तरेणयुक्त इति द्वितीया। अन्यः प्रतिकर्तुं परिभवं निर्यातयितुं कः शक्तः? । न कश्चिदपीत्यर्थः। किन्तु तथापि।

(बै) अतः अस्मात्प्रतिकारकर्मणः परं अन्यत् किं मयाकरणीयमिति प्रश्नः। किन्त्विति वचनस्य सावशेषतया कार्यान्तरानुष्ठानादेशस्य प्रतीयमानत्वाच्चायं विहितः।

(बो) सैनापत्ये सेनापतित्वे सेनापतिपद इति यावत्। अभिषिच्य अभिषेकं कृत्वा भवन्तं समरभुवं युद्धभूमिं अवतारयितुं प्रवेशयितुमिति यावत्। इच्छामि। अत्राभिषेकस्य

**अश्वत्थामा**—मातुल ! परतन्त्रमिदमकिंचित्करं च । (बौ)

**कृपः**—वत्स ! न खलु परतन्त्रं नाकिंचित्करं च । पश्य ।

भवेदभीष्ममद्रोणं धार्तराष्ट्रबलं कथम् ।
यदि तत्तुल्यकक्षोऽत्र भवान्धुरि न युज्यते ॥ २६ ॥

कृतपरिकरस्य भवादृशस्य त्रैलोक्यमपि न क्षमं परिपन्थीभवितुं किं पुनर्यौधिष्ठिरबलम् । तदेवं मन्ये परिकल्पिताभिषेकोपकरणः कौरवराजो न चिरात्त्वामेवाभ्यपेक्षमाणस्तिष्ठतीति । (बं)

---

दुर्योधकर्तृकत्वादभिषेच्येति वक्तव्येऽभिषिच्येति विनैव णिचं प्रयोगो दुर्योधनो न स्तोकमप्युल्लङ्घयिष्यति मे वचनमिति कृपस्याशयमभिद्योतयति ।

(बौ) इदं भवदुक्तं सैनापत्येऽभिषेचनं परतन्त्रं परस्तन्त्रं प्रयोजको यस्य तथाभूतं पराधीनम् । 'परतन्त्रः पराधीन' इत्यमरः । च किंच । अकिंचित्करम् कस्याप्यर्थस्यासाधकम् अनावश्यकमिति यावत् ।

(२६) भवेदिति । अभीष्मं नास्ति भीष्मो यत्र तथाभूतं भीष्मरहितं अद्रोणं द्रोणरहितं च धार्तराष्ट्रबलं धृतराष्ट्रपुत्रस्य दुर्योधस्य सैन्यं कर्तृ । यदि अत्र सैन्ये तत्तुल्यकक्षः तयोर्भीष्मद्रोणयोः तुल्या समाना कक्षा योग्यतासूचकः स्थानविशेषो योग्यतेति यावत् यस्य तथाभूतः । योग्यतया तत्तुल्य इत्यर्थः । भवान् धुरि धुरायां रणभारवाहकपद इत्यर्थः । न युज्यते न नियुज्यते तदेति शेषः । कथं केनप्रकारेण भवेत् आस्तित्वं गच्छेत् ? न केनापि प्रकारेणेति भावः । त्वं चेत्सैनापत्ये न नियोक्ष्यसे तदा भीष्मद्रोणविरहितं दुर्योधनबलं सर्वथा विनङ्क्ष्यतीत्यर्थः । अत्र 'यदि तत्तुल्यकर्माऽत्र भवान्धुर्यो न युज्यते ।' इत्यपि पाठः । तत्र धुर्यः सेनाया भारवाहक इत्यर्थः । 'धूर्वहे धुर्यधौरेये' त्यमरः ।

(बं) कृतपरिकरस्य कृतः परिकरो युद्धस्यारम्भो येन तथाभूतस्य । । 'यत्नारम्भौ परिकरौ' इति त्रिकाण्डशेषः । भवादृशस्य भवानिव दृश्यते भवादृशस्तस्य त्वत्सदृशस्येत्यर्थः । परिपन्थीभवितुं प्रतियोद्धृतां गन्तुं त्रैलोक्यं त्रयो लोकाः । चतुर्वर्णादित्वात्ष्यञ् । न क्षमं समर्थम् । यौधिष्ठिरबलम् युधिष्ठिरस्य सैन्यम् । तत् यस्मात्त्वमेवात्र कर्मणि शक्तस्तस्मात् मन्ये संभावयामीत्यर्थः । परिकल्पिताभिषेकोपकरणः परिकल्पितानि सज्जीकृतान्यभिषेकस्योपकरणानि उपयुक्तद्रव्याणि येन तथाभूतः कौरवराजो दुर्योधनः । न चिरात्सत्वरं त्वामभ्यपे-

**अश्वत्थामा**—यद्येवं, त्वरते मे परिभवानलदह्यमानमिदं चेतस्तत्प्रतीकार-जलावगाहनाय । तदहं गत्वा तातवधविषण्णमानसं कुरुपतिं सैनापत्यस्वयंग्रह-प्रणयसमाश्वासनया मन्दसंतापं करोमि । (ब:)

**कृपः**—वत्स! एवमिदम् । अतस्तमेवोद्देशं गच्छावः । (भ)

(इति परिक्रामतः ।)

(ततः प्रविशतः कर्णदुर्योधनौ ।)

**दुर्योधनः**—अङ्गराज! (भा)

तेजस्वी रिपुहतबन्धुदुःखपारं
वाहुभ्यां व्रजति धृतायुधप्लवाभ्याम् ।
आचार्यः सुतनिधनं निशम्य संख्ये
किं शस्त्रग्रहसमये विशस्त्र आसीत्? ॥ २७ ॥

---

क्षमाणः स्वसमीपे अपेक्षमाणः । इतीत्यस्य मन्य इत्यनेन संबन्धः । भवन्तमुद्वीक्षत इत्यपि पाठः । तत्र सस्पृहमवेक्षत इत्यर्थः । अत्र पक्षे न चिरादित्यनुपयुक्तमिव प्रतिभाति ।

(ब:) परिभवानलदह्यमानं परिभवः पितृवधरूपः पराभवोऽवमानो वा स एवा-नलोऽग्निस्तेन दह्यमानं अतिशयेन ताप्यमानमित्यर्थः । मे चेतः कर्तृ । तत्प्रतीकारजला-वगाहनाय तस्य परिभवस्य प्रतिकारो निर्यातनमेव जलं तत्र अवगाहनाय प्रवेशाय अव-गाहनं कर्तुमित्यर्थः । त्वरते त्वरां करोति । तातवधविषण्णमानसं तातस्य मत्पितुर्द्रोणस्य वधेन विषण्णं खिन्नं मानसं यस्य तथाभूतम् । सैनापत्यस्वयंग्रहप्रणयसमाश्वासनया सैनापत्यस्य सेनापतिभावस्य स्वयंग्रहः विना प्रार्थनां स्वयमेव ग्रहणं तत्र यः प्रणयोऽनुरागस्तेन या समा-श्वासना सान्त्वनं तया । स्वयमेव सेनापतिपदं ग्रहीष्यामीत्यावेदनेन समाश्वास्येत्यर्थः । मन्दसन्तापं अल्पसन्तापं क्षीणतापमित्यर्थः ।

(भ) उद्देशं प्रदेशम् ।

(भा) अङ्गराज अङ्गदेशाधिपते कर्ण । राजाहःसखिभ्य इति टच् ।

(२७) तेजस्वीति । तेजः पराक्रमोऽस्यास्तीति तेजस्वी पराक्रमशाली पुरुषः कर्ता। अ-स्माये त्यादिना विनिः। 'तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः।' इति मेदिनी। धृतायुधप्लवाभ्यां

अथवा सूक्तमिदमभियुक्तैः प्रकृतिर्दुस्त्यजेति । यतः शोकान्धमनसा तेन विमुच्य क्षात्रधर्मकार्कश्यं द्विजातिधर्मसुलभो दैन्यपरिग्रहः कृतः। (भि) :

**कर्णः**—राजन्! न खल्विदमेवम् । (भी)

**दुर्योधनः**—कथं तर्हि ? ।

**कर्णः**—एवं किलास्याभिप्रायो यथाश्वत्थामा मया पृथिवीराज्येऽभिषेक्तव्य इति तस्याभावाद्वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रग्रहणमिति तथा कृतवान् । (भु)

---

धृतः आयुधरूपः प्लवः उडुपापरपर्यायः क्षुद्रनौकाविशेषो याभ्यां तथाभूताभ्यां बाहुभ्यां भुजाभ्यां करणभूताभ्यां रिपुभिः हतानां बन्धूनां संबन्धि यद्दुःखं तस्य पारं परतीरं व्रजति गच्छति । 'परावारे परार्वाची तीरे' इत्यमरः । भुजाभ्यामायुधरूपां नावमालम्ब्य दुःखाम्बुधिं तरतीत्यर्थः । शत्रुभिर्हते बन्धौ तत्प्रतीकारार्थं शस्त्रग्रहणमेव वीराणां धर्म इति भावः । तथापि आचार्यो गुरुर्द्रोणः संख्ये युद्धे 'युद्धं तु संख्यं कलिः ।' इति हैमः । सुतनिधनं पुत्रमरणं निशम्य श्रुत्वा श्रवणानन्तरमित्यर्थः । शस्त्रग्रहसमये शस्त्रग्रहणस्य काले सति किं कस्मात्कारणात् विशस्त्रः विगतं शस्त्रं यस्मात्तथाभूतः त्यक्तशस्त्र इत्यर्थः आसीत् अभवत्? । अस्तेर्लङ् । अस्तिसिच इतीट् । शत्रुभिः पुत्रे हते तत्प्रतीकाराय शस्त्रं गृहीत्वा निर्मूलनीयाः शत्रवः । द्रोणः पुनः शस्त्रं पर्यत्यजत्तत्किमत्र निदानमिति भावः । अत्रायुधे प्लवत्वारोपो वाच्यो दुःखे सागरत्वारोपस्त्वार्थ इत्येकदेशविवर्तिरूपकमलङ्कारः । 'यत्र कस्यचिदार्थत्वमेकदेशविवर्ति तत् ।' इति लक्षणात् ।

(भि) अभियुक्तैः आप्तैः ( प्रामाणिकैः ) सूक्तं शोभनमभिहितम् । प्रकृतिः स्वभावः । दुस्त्यजा दुःखेन त्यक्तुं शक्या। अशक्यत्यागेत्यर्थः । इति सूक्तमित्यनेन संबन्धः। क्षात्रधर्मकार्कश्यं क्षत्रियधर्मोचितं साहसिकत्वम् । 'स्यात्कर्कशः साहसिकः' इत्यमरः । द्विजातिधर्मसुलभः ब्राह्मणधर्मे सुखेन लब्धुं शक्यः दैन्यपरिग्रहः दीनतायाः स्वीकारः । दैन्यं च शोकाकुलत्वादिना नैर्बल्यम् । तदाह विश्वनाथः 'दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत् ।' इति । दैन्यावलम्बनं च ब्राह्मणानां स्वभाव इति सोऽयमालम्बितो दुस्त्यजत्वाद्द्रोणेनेति भावः ।

(भी) खलु निश्चयेन इदं भवदुक्तं द्रोणेन स्वभावस्य दुस्त्यजत्वाद्दैन्यमालम्बितमित्येतत् । एवं न ।

**दुर्योधनः**—( सशिरःकम्पम् । ) एवमिदम् । (भू)

**कर्णः**—एतदर्थं च कौरवपाण्डवपक्षपातप्रवृत्तमहासङ्ग्रामस्य राजकस्य परस्परक्षयमपेक्षमाणेन तेन प्रधानपुरुषवध उपेक्षा कृता । (भे)

**दुर्योधनः**—उपपन्नमिदम् । (भै)

**कर्णः**—अन्यच्च राजन्! द्रुपदेनाप्यस्य बाल्यात्प्रभृत्यभिप्रायवेदिना न स्वराष्ट्रे वासो दत्तः । (भो)

**दुर्योधनः**—साधु अङ्गराज! साधु! निपुणमभिहितम् । (भौ)

---

(भु) मया द्रोणेन न तु कर्णेन उपवर्ण्यमानस्य द्रोणाभिप्रायत्वात् । इतीत्यस्यभिप्राय इत्येन संबन्धः । तस्य अश्वत्थाम्नः । मे द्रोणस्य । वृथा अश्वत्थाम्नः पृथिवीराज्येऽभिषेकस्यासंभवान्निष्फलं इति मन्वान इति शेषः । तथा तादृशं शस्त्रग्रहणसमयेऽपि शस्त्रपरित्यागरूपं कर्म ।

(भू) सशिरःकम्पमिति । कर्णोक्तस्य श्लाघनार्थं शिरःकम्पः ।

(भे) एतदर्थमिति । एतदर्थं अश्वत्थाम्नः पृथिवीराज्येऽभिषेकार्थम् । कौरवाणां पाण्डवानां च पक्षपातेन पक्षेऽभिनिवेशेन प्रवृत्त आरब्धो महान् संग्रामो यत्र तथाभूतस्य । कर्णमते कौरवाणामभ्यर्हितत्वात्कौरवशब्दस्य पूर्वनिपातः । राजकस्य राज्ञां समूहस्य 'गोत्रोक्षोरभ्रे' त्यादिना वुञ् । परस्परक्षयं परस्परैः क्षयः संहारस्तं अन्योन्यकर्तृकं विनाशमित्यर्थः । अपेक्षमाणेन इच्छता । तेन द्रोणेन । प्रधानपुरुषवधे प्रधानानां मुख्यानां पुरुषाणां जयद्रथादीनां वधे सत्यपि उपेक्षा औदासीन्यावलम्ब इति यावत् । वध्यमानेष्वपि प्रधानपुरुषेषु नायं प्रतीकारे प्रवृत्त इत्यर्थः ।

(भै) इदं त्वयोच्यमानं उपपन्नं युक्तियुक्तम् ।

(भो) स्वमतस्य दृढीकरणाय पुनर्हेत्वन्तरमुपन्यस्यति । द्रुपदेन द्रौपद्याः पित्रा कर्तृभूतेन बाल्यात्प्रभृति बाल्यमारभ्य अस्य द्रोणस्य अभिप्रायवेदिना अभिप्रायं जानता स्वराष्ट्रे वासो वसतिस्थानम् । 'अज्ञातकुलशीलस्य वासो देयो न कस्यचित् ।' इत्यादिषु तथाविधार्थदर्शनात् ।

(भौ) निपुणं निपुणतायुक्तं यथा तथा । सूक्ष्मतया तत्त्वमनुसंधाय प्रोक्तमित्यर्थः ।

**कर्णः**—न चायं ममैकस्याभिप्रायः । अन्येऽभियुक्ता अपि नैवेदमन्यथा मन्यन्ते । **(भं)**

**दुर्योधनः**—एवमेतत् । कः संदेहः ? **(भः)**

दत्वाऽभयं सोऽतिरथो वध्यमानं किरीटिना ।
सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा ? ॥ २८ ॥

**कृपः**—( विलोक्य । ) वत्स ! एष दुर्योधनः सूतपुत्रेण सहास्यां न्यग्रोधच्छायायामुपविष्टस्तिष्ठति । तदुपसर्पावः । **(म)**

---

(भं) अन्यमतस्याप्यात्मनोऽनुकूलतां प्रदर्श्य पुनः स्वमतं प्रपोषयति । न चेति । अन्ये मदितरे अभियुक्ता विद्वांसः कर्मणि नियुक्ता वीरा वा एतन्मदुक्तं अन्यथा अन्यविधं असत्यमित्यर्थः न मन्यन्ते । अहमिव तेऽप्येवमेव मन्यन्त इति भावः । अत्र 'अन्येऽप्यत्र योद्धारो नैतदन्यथा मन्यन्त' इत्यपि क्वचित्पाठः । तत्र चात्रेतिपदं व्यर्थमिति नादृतोऽस्माभिः ।

(भः) एवं कर्णजपेन कर्णेनान्यथा ग्राहितो दुर्योधनस्तदीयं मतमनुमत्य समर्थयति एवमिति । अत्र एवमेतत् कः संदेह इत्यत्र साधु अङ्गराज साधु इति दर्पणधृतः पाठः।

(२८) दत्वेति । एवं भवदुक्तप्रकारं न चेत् तर्हि अन्यथा सः अतिरथो महारथो द्रोणः कर्ता अभयं भयस्याभावं दत्त्वा । नास्य भयं, अहं ह्येनं परित्रास्य इति प्रतिज्ञायेत्यर्थः । किरीटिना अर्जुनेन वध्यमानं हन्यमानं सिन्धुराजं सिन्धूनां देशविशेषाणां राजानं जयद्रथं कथमुपेक्षेत औदासीन्यमालम्ब्य त्यजेत् । संभावनायां लिङ् । नैतदन्यथा संभवतीति भवदुक्त एव भूतार्थ इति भावः । अत्र द्रोणेन जयद्रथवधोपेक्षाया वचनेनाश्वत्थाम्नः पृथ्वीराज्येऽभिषेक एवाभिमत एतस्येति स्थिरीकरणादर्थापत्तिर्नाम नाट्यलक्षणम्। तदाह विश्वनाथः 'अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते ।' इति । पथ्यावक्त्रं वृत्तम् ।

(म) वत्सेति कनीयस्त्वादश्वत्थाम्नः संबुद्धिः । सूतपुत्रेण कर्णेन । 'कर्णश्चम्पेशः सूतपुत्रकः' इति त्रिकाण्डशेषः । कर्णः किल कुन्त्यां नाम पाण्डोर्भार्यायां कन्यकावस्थायां सूर्याज्जातः । स च तया परित्यक्तोऽधिरथेन नाम सूतेन पालित इति सूतपुत्रतयैव ख्यातः । एतदुत्पत्यादिकं तु महाभारते द्रष्टव्यम् । न्यग्रोधच्छायायाम् वटच्छायायाम् । 'न्यग्रोधो बहु-

( तथा कृत्वा । )

**उभौ**—विजयतां कौरवेश्वरः । **(मा)**

**दुर्योधनः**—( दृष्ट्वा । ) अये कथं कृपोऽश्वत्थामा च । ( आसनादवतीर्य कृपं प्रति । ) गुरो ! अभिवादये । ( अश्वत्थामानमुद्दिश्य । ) आचार्यपुत्र ! **(मि)**

एह्यस्मदर्थहततात ! परिष्वजस्व
क्लान्तैरिदं मम निरन्तरमङ्गमङ्गैः ।
स्पर्शस्तवैष भुजयोः सदृशः पितुस्ते
शोकेऽपि यो महति निर्वृतिमादधाति ॥ २९ ॥

( इत्यालिङ्ग्य पार्श्वे उपवेशयति । )

---

पादृट' इत्यमरः । तिष्ठति अस्ति । धातूनामनेकार्थत्वात् । अन्यथा तूपवेशनस्थानयोर्विरोधादसंगतत्वं स्यात् ।

(मा) विजयतामभ्युदयं लभताम् । जि जय इत्यतो विपूर्वादाशिषि लोट् । 'विपराभ्यां जेरि' त्यात्मनेपदम् । अत्र विजयतां राजन् इत्यपि पाठः।तत्र भवानिति कर्तृपदमध्याहार्यम् । कौरवेश्वरः दुर्योधनः ।

(मि) अये कथमिति संभ्रमे विस्मये वा । आसनादवतीर्येति कृपस्याचार्यत्वात्तद्बहुमानार्थमश्वत्थाम्नश्च गुरुपुत्रत्वादादरणार्थमासनादवतरणम् । गुरो कृप । अधीता हि कृपादस्त्रविद्या कौरवाद्यैः । तथा ह्युक्तं महाभारते 'सोऽ (कृपः) चिरेणैव कालेन परमाचार्यतां गतः । ततोऽधिजग्मुः सर्वे ते धनुर्वेदं महारथाः । धृतराष्ट्रात्मजाश्चैव पाण्डवाः सह यादवैः ।' इति । अभिवादये नमस्करोमि । आचार्यपुत्र द्रोणपुत्र अश्वत्थामन् ।

(२९) एहीति । हे अस्मदर्थहततात अस्मदर्थमस्मत्कारणात् हतः शत्रुभिर्मारितस्तातः पिता यस्य तथाभूत अश्वत्थामन् । एहि आगच्छ । आङ्पूर्वादिणगतावित्यतो लोट् । किं च इदं तव पुरो विद्यमानं मम अङ्गं शरीरं तव क्लान्तैः दुःखातिशयाद्ग्लानिमापन्नैः अङ्गैः अवयवैः करणभूतैः । 'अङ्गं प्रतीकोऽवयव' इत्यमरः । निरन्तरं निर्गतमन्तरमवकाशो यस्मात्तद्यथा तथा परिष्वजस्व आलिङ्ग । तथाऽऽलिङ्ग यथा परस्परमतिमात्रं संश्लिष्टतया तव मम च गात्राणां मध्येऽन्तरं न स्यादिति भावः । एषः मयानुभूयमानः तव भुजयोः बाह्वोः स्पर्शः ते तव पितुः सदृशः तुल्यः । त्वत्पितृभुजस्पर्शतुल्य-

( अश्वत्थामा बाष्पमुत्सृजति । ) (मी)

**कर्णः**—द्रौणायन! अलमत्यर्थमात्मानं शोकानले प्रक्षिप्य । (मु)

**दुर्योधनः**—आचार्यपुत्र! को विशेष आवयोरस्मिन्व्यसनमहार्णवे ? । पश्य । (मू)

तातस्तव प्रणयवान्स पितुः सखा मे
शस्त्रे यथा तव गुरुः स तथा ममापि ।

---

इत्यर्थः । 'तुल्यार्थैरतुलोपमाभ्या' मिति वा षष्ठी । सादृश्यप्रयोजकं गुणमाह य इति । यः स्पर्शः कर्ता महत्यपि शोके निर्वृतिं सुखं आदधाति करोति जनयतीति यावत् । अत्र क्लान्तैरिदमित्यत्र कान्तैरिभैरित्यपि क्वचित्पाठः तत्र कान्तैः सुन्दरैरित्यर्थः । न चैष पाठः प्रकृतमर्थं पुष्णाति । क्लान्तैरिति तु मदर्थं कृतपरिश्रमतया क्लान्तोऽसीति कृतज्ञतां च प्रणयं च प्रकाशयतीति द्रष्टव्यम् । एवं तवैष इत्यत्र तथैवेति पाठः । नायं संगत इति परित्यक्तः । 'यो महति निर्वृतिमादधाती'त्यत्र च 'नो विकृतिमेति तनूरुहेषु ' इति बहुषु पुस्तकेषु संदृश्यते पाठः । स चासंगतत्वाक्लिष्टत्वाच्चार्थस्य परित्यक्तः । न हि स्पर्शस्तनूरुहेषु विकृतिमेति किन्तर्हि स्पर्शेन तनूरुहेषु विकृतिर्जायते । एतेरन्तर्भावितण्यर्थताङ्गीकारोऽप्यगतिकगतिरेवेति सति सरलतमे पाठान्तरे नाद्रियते । वसन्ततिलकाख्यं वृत्तम् ।

(मी) बाष्पं पितृशोकजन्यं नयनजलम् । उत्सृजति त्यजति ।

(मु) द्रौणायनः द्रोणस्य गोत्रापत्यं पुमान् । द्रोणपर्वतेत्यादिना फक् (आयनः)।अत्र च द्रोणपदं न अश्वत्थामपितुर्द्रोणाचार्यस्य वाचकमपि तु तद्वंशकूटस्थस्यानादेः कस्यापि।अत एव च तद्गोत्रत्वात्फक् । 'अश्वत्थामा तु कृपीसुतः।द्रौणायन' इति त्रिकाण्डशेषः। 'द्रौणायने' इत्यपि क्वचित्पाठः तत्रापत्यार्थे वा फिञ् (आयनिः) इति तर्कवाचस्पतिः।तच्चिन्त्यम्। आत्मानं स्वं शोकानले शोकरूपे वह्नौ अत्यर्थमत्तिमात्रं प्रक्षिप्यालम् । न त्वया प्रक्षेपणीयः शोकानल आत्मेत्यर्थः । 'अलं खल्वोः प्रतिषेध ' इति क्त्वा तस्य च ल्यप् । अत्र प्रक्षेप्तुमित्येव बहुत्र पाठो दृष्टः । स च न युक्तः । पर्याप्तिवचनेष्वित्यादिना कृते तुमुनि प्रतिषेधवाचित्वायोगात् । अत्र ' अलमत्यन्तावेगेनात्मानं शोकसागरे प्रक्षेप्तुमि'त्यपि क्वचित्पाठः । तत्रावेगेन संभ्रमेणेत्यर्थः ।

(मू) आचार्यपुत्र द्रोणपुत्र । अस्मिन् द्रोणमरणजन्ये शोकमहार्णवे शोकरूपे महासागरे । आवयोः तव मम च । विशेषो भेदः । समानमेवात्रावयोर्दुःखमिति भावः ।

किं तस्य देहनिधने कथयामि दुःखं
जानीहि तद्गुरुशुचा मनसा त्वमेव ॥ ३० ॥

**कृपः**—वत्स! यथाह कुरुपतिस्तथैवैतत् । (मे)

**अश्वत्थामा**—राजन्! एवं पक्षपातिनि त्वयि युक्तमेव शोकभारं लघू-कर्तुम् । किं तु (मै)

मयि जीवति मत्तातः केशग्रहमवाप्तवान् ।
कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहाम् ?॥ ३१ ॥

---

(३०) तात इति । सः द्रोणः तव तातः पिता मे मम पितुः प्रणयवान् प्रेमसंपन्नः सखा मित्रम् । तत एव च ममापि पितृतुल्य एवेति भावः । शस्त्रे। जातावेकवचनम्। शस्त्रेषु विषये धनुर्विद्यायामिति यावत् । सः यथा तव गुरुः उपदेष्टा तथा ममापि गुरुः । तेनावयोः समान एव द्रोणेन साकं संबन्ध इत्यर्थः।तस्य देहनिधने शरीरस्य नाशे सति यद्दुःखं तत्किं कथयामि? अनुभवमात्रसंवेद्यमिदं शर्करामाधुर्यादिवदशक्यं कथयितुमिति भावः । कथं तर्हि तदवबोध्यमित्याह जानीहीति । तत् दुःखं त्वमेव स्वयमित्यर्थः गुरुशुचा गुर्वी शुक् शोको यत्र तथाभूतेन मनसा आत्मनो हृदयेन साधनभूतेन जानीहि बुध्यस्व । अत्र यद् दुःखं तदिति यत्तच्छब्दौ विनापि प्रयोगं प्रतीयेते । सामर्थ्यात् । यथा 'न मे शमयिता कोऽपि भारस्येत्युर्वि! मा शुचः । नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः ॥' इत्यादौ योऽस्ति स ते भारं शमयिष्यतीत्येवमत्रापि । तदाह विश्वनाथः 'क्वचिदनुपात्तयोर्द्वयोरपि (यत्तदोः) सामर्थ्यादवगमः ।' इति । अत्र गुरुशुचा स्वमनसाऽश्वत्थाम्नो दुर्योधनेनानुभूयमानस्य दुःखस्यावबोधोऽसंभवन्नश्वत्थामदुर्योधनदुःखयोः सादृश्यमवबोधयतीति निदर्शनालङ्कारः । वसन्ततिलका वृत्तम् ।

(मे) वत्सेति । कुरुपतिर्दुर्योधनः यथा आह ब्रवीति । त्वत्समानमेवास्य दुःखमित्येतत्सत्यमेवेत्यर्थः ।

(मै) पक्षपातिनि मत्पक्षाभिनिवेशयुक्ते सति । शोकभारं लघूकर्तुं युक्तमेव मयेति शेषः । भवतो मयि पक्षपातेन मे शोको लघुः स्यादिति भावः । शोकभारमित्यनेन शत्रुविषयकस्तु क्रोधो न प्रशमिष्यतीति द्योत्यते ।

(३१) मयीति ।मयि निरतिशयशौर्यविशिष्टेऽश्वत्थाम्नि जीवति सति मत्तातःमे पिता द्रोणः केशग्रहं शत्रुकृतं केशग्रहणमाप्तवान् प्राप्तवान् । अतः अन्ये येषां न मादृशः प्रतीकारक्षमः

**कर्णः**—द्रौणायन! किमत्र क्रियते? यदा तेनैव सर्वपरिभवपरित्राणहेतुना शस्त्रमुत्सृजता तादृशीमवस्थामात्मा नीतः । (मो)

**अश्वत्थामा**—अङ्गराज! किमाह भवान्किमत्र क्रियत? इति । श्रूयतां यत्क्रियते । (मौ)

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥ ३२ ॥

---

पुत्रस्ते द्रोणभिन्नाः पुत्रिणः पुत्रयुक्ताः पुरुषाः पुत्रेभ्यः पुत्राणां सकाशात् स्पृहामाशां, पुत्रेभ्योऽस्माक मनोरथः फलिष्यतीत्येवंरूपामाशामित्यर्थः । कथं करिष्यन्ति? मादृशा अपि चेत्पितुर्वधप्रतीकारे न प्रवर्तेरंस्तदा कृतं 'पुत्रा नो मनारथं पूरयेयुरि'त्याशयेत्येवापरे पुत्रिणो मन्येरन्निति भावः । ततश्चावश्यं मया शत्रुकुलक्षये प्रवर्तनीयमिति द्योत्यते । यद्वात्र पुत्रपदं पुत्राणामस्तित्वे लाक्षणिकम् । स्पृहेरीप्सित इति संप्रदानत्वाच्चतुर्थी । पुत्राणामस्तित्वविषयिणीं स्पृहां कथं कुर्युरित्यर्थः । अलं पुत्रैरनुपकारकत्वात्तेषामित्येव मन्येरन् इति भावः।अत्र अपुत्रिण इत्यपि क्वचित्पाठः । तत्र अन्ये इति पदं न सांगत्यं भजते । द्रोणस्यापुत्रत्वाभावेन तद्भिन्ना अपुत्रिण इत्यर्थकरणस्यायोग्यत्वात् । अत एव चोपेक्षितोऽयं पाठः ।

(मो) द्रौणायन अश्वत्थामन् । यदा यदि सर्वपरिभवपरित्राणहेतुना सर्वेषामपि परिभवेभ्यः परित्राणे हेतुः तेन । सर्वानपि पराभवात् परित्रातु शक्तेनेत्यर्थः तेनैव कर्त्रा स्वयमेवेत्यर्थः । शस्त्रं उत्सृजता त्यजता तादृशीं तथाविधां केशग्रहणयोग्यामित्यर्थः । अवस्थां दशां आत्मा नीतः प्रापितः । तदा अत्र केशग्रहे किं क्रियेत न किंचित्कर्तुं शक्यमित्यर्थः । 'आत्मकृतानां हि दोषाणां फलमेतदवश्यमात्मनानुभविभव्यामि' ति भावः ।

(मौ) अङ्गराज ! अङ्गदेशाधिपते कर्ण !

(३२) यो य इति । पाण्डवीनां पाण्डुसम्बधिनीनाम्।पाण्डुशद्वात्तस्येदमित्यण्।पाण्डुपुत्रत्वाच्च पाण्डवानां तत्संबन्धिनीनामिति गम्यते । पाण्डवशद्वात्तु वृद्धाच्छ इति च्छः स्यात् । प्रयुक्तं च 'पाण्डुपाञ्चालसेनातूलोत्क्षेपप्रलयपवन ' इत्यत्र पाण्डुपदमेव प्राक्। चमूनां सैन्यानां मध्ये । अवयवापेक्षया बहुवचनम् । निर्धारणे षष्ठी । स्वभुजगुरुमदः स्वस्य भुजयोर्बाह्वोः

अपि च । भो जामदग्न्यशिष्य कर्ण ! (मं)

देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षत्रादव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहतशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रौणायनः क्रोधनः ॥ ३३ ॥

---

संबन्धी गुरुर्महान् मदो दर्पः ममैव बलवत्तमौ बाहू इत्येवंरूपो यस्य तथाभूतो यो यः अर्जुनादिः पुरुषः शस्त्रं बिभर्ति । पाञ्चालानां पञ्चालदेशाधिपतीनां द्रुपदादीनां गोत्रे कुले । 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयाः । ' इत्यमरः । यो यः शिशुर्बालः अधिकवयाः अधिकं शिशुत्वापेक्षयाधिकं वयो यस्य तथाभूतः । युवा वृद्धो वेत्यर्थः । वा अथवा गर्भशय्यां मातुरुदरवर्तिगर्भवासस्थानं गतः प्रविष्टो गर्भात्मनाऽवस्थित इत्यर्थः । 'शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ता सा प्रकीर्तिता । तस्यास्तृतीये त्वावर्ते गर्भशय्या प्रतिष्ठिता ॥ ' इति भावप्रकाशः । एतेन पाञ्चालगोत्रे क्रोधातिशयो व्यज्यते । स च पाञ्चालगोत्रोत्पन्नेन धृष्टद्युम्नेन हतो द्रोण इति । यो यः पुरुषः तत्कर्मसाक्षी तस्य द्रोणवधरूपस्य कर्मणः साक्षाद्द्रष्टा । साक्षाद्द्रष्टरिसंज्ञायामिति इनिः । च किं च मयि रणे संग्रामभूमौ चरति सति यो यः प्रतीपः प्रतिकूलाचारः तस्य तस्य जगतां त्रयाणां भुवनानां अन्तकस्य संहारकर्तुरपि क्रोधान्धः क्रोधेन विलुप्तविवेकः अहं स्वयं अन्तकः संहारकर्ता अस्मि । साक्षादन्तकमप्येवं निर्मूलयिष्यामि किमुत पाण्डवादीनिति भावः । अत्र गुरुमद इत्यत्र गुरुबल इति क्वचित्पाठः । स च न युक्तः । अश्वत्थाम्नाऽपरेषां भुजबलस्य गुरुत्वस्वीकारासंभवात् । प्रतीप इत्यत्र प्रतीपमित्यपि ध्वन्यालोकलोचनादिधृतः पाठः । तत्र रणे यश्च यश्च मयि प्रतीपं प्रतिकूलं चरति आचरिष्यतीत्यर्थः । एवं स्वयमपीत्यत्र स्वयमिहेत्यपि दर्पणादिषु पाठः । स च न्यूनपदत्वदोषापत्तिभयात्परित्याज्यः । अपिर्हि अवश्यमत्रापेक्ष्यत इति । अत्र चोत्तरोत्तरं क्रोधस्योत्कर्षदर्शनादुदाहरणं नाम गर्भसन्धेरङ्गम् । तदाह विश्वनाथः 'उदाहरणमुत्कर्षयुक्तं वचनमुच्यत ' इति । स्रग्धरा वृत्तम् ।

(मं) जामदग्न्यशिष्य जामदग्न्यस्य जमदग्निपुत्रस्य परशुरामस्य शिष्य ! जमदग्नौ गोत्रत्वारोपाद्गर्गादित्वाद्यञ् । एतेन परिचितमेव ते परशुरामकृतं कर्मेति व्यज्यते ।

(३३) देश इति । यस्मिन् अरातिशोणितजलैः अरातीनां शत्रूणां शोणितानि रक्तान्येव जलानि तैः करणभूतैः ह्रदा डोह इति महाराष्ट्रभाषया ख्याताः अगाधजलप्रदेशाः

**दुर्योधनः**—आचार्यपुत्र! तस्य तथाविधस्यानन्यसाधारणस्य ते वीरभावस्य किमन्यत्सदृशम्? । (मः)

**कृपः**—राजन्! सुमहान्खलु द्रोणपुत्रेण वोढुमध्यवसितः समरभरः । तदहमेवं मन्ये, भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः । किं पुनर्युधिष्ठिरबलम्! । अतोऽभिषिच्यतां सैनापत्ये । (य)

---

पूरिताः पूर्णतां नीताः परशुरामेणेत्यर्थात् । सः अयमस्माभिरधिष्ठितो देशः अस्तीति शेषः । परशुरामेण हि सर्वानपि क्षत्रियानुच्छिद्य तेषां शोणितैः स्यमन्तपञ्चकनाम्नि देशे पञ्च ह्रदाः पूरिता इति महाभारतगता कथाऽत्रानुसन्धेया । तातस्य पितुर्द्रोणस्य केशग्रहः केशग्रहणरूपः केशग्रहणपूर्वकवधरूप इत्यर्थः परिभवोऽपि तथाविधः यादृशः परशुरामपितुस्तादृश एव क्षत्रात् क्षत्रियस्य सकाशात्सजातः । मम भास्वन्ति दीप्तिमन्ति अस्त्राण्यपि आहितशस्त्रघस्मरगुरूणि आहितं मत्पितरि निहितं शस्त्रं येन तस्य घस्मराणि अदनशीलानि समूलं नाशकानीत्यर्थः । सृघस्यद इति क्मरच् । अत एव च गुरूणि महान्ति । तानि यानि परशुरामस्य तान्येवेत्यर्थः । अतः क्रोधनः क्रोधशीलो द्रौणायनो द्रोणपुत्रोऽश्वत्थामा कर्ता यद्रामेण परशुरामेण कृतं तदेव निखिलक्षत्रसंहरणरूपं कर्म कुरुते । अत्र तान्येवाहितहेतिघस्मरेत्यादिरपि क्वचित्पाठः । तत्र हेतिरायुधम् । द्रौणयनिरित्यपि क्वचित् तत्र किञ्चिन्त्यः । द्रोणात्मज इत्यपि क्वचित् । अत्राख्यानं नामनाख्यालङ्कारः 'आख्यानं पूर्ववृत्तोक्ति' रिति लक्षणात् । शार्दूलविक्रीडितम् ।

(मः) तथाविधस्य तादृशस्य निरुपमस्येत्यर्थः । अनन्यसाधारणस्य अन्येषां त्वदितरेषां साधारणः सामान्यो न भवति तथाभूतः तस्य । वीरभावस्य वीरत्वस्य अन्यत् त्वदुक्ताद्भिन्नं किं सदृशं योग्यम् । न किंचिदप्यन्यत्केवलं तु भवदुक्तमेव योग्यमित्यर्थः ।

(य) द्रोणपुत्रेण अश्वत्थाम्ना । द्रोणपुत्रपदं च द्रोणतुल्यपराक्रमशालित्वमभिव्यञ्जयति । समरभरः युद्धकर्मभारः वोढुं धारयितुम् । आत्मनः शिरसि कर्तुमित्यर्थः । वहेस्तुमुन् । सहिवहोरित्योत् । अध्यवसितो निश्चितः । गुरुतरं समरभारमुद्वक्ष्यामीत्यश्वत्थाम्ना निश्चितमित्यर्थः । एवं वक्ष्यमाणप्रकारं मन्ये अभिप्रैमि । मतमेवाह **भवतेति** । भवता त्वया कृतपरिकरः कृतसाहाय्य इत्यर्थः । परिकरशब्दो हि सहकारिवाचीत्याहुः । यथा सामान्यनिरुक्तौ जगदीशः 'परिकरः सहकारी ।' इति । सहाकारी च साहाय्यकृत् । अत्र च प-

**दुर्योधनः**—सुष्ठु, युज्यमानमभिहितं युष्माभिः। किं तु प्राक्प्रतिपन्नोऽय-मर्थोऽङ्गराजस्य। (या)

**कृपः**—राजन्! असदृशपरिभवशोकसागरे निमज्जन्तमेनमङ्गराजस्यार्थे ने-वोपेक्षितुं युक्तम्। अस्यापि तदेवारिकुलमनुशासनीयम्। अतः किमस्य पीडा न भविष्यति?। (यि)

**अश्वत्थामा**—राजन्! किमद्यापि युक्तायुक्तविचारणया?। (यी)

---

रिकरशब्दो भावप्रधानः। इति। यद्वा कृतः साहाय्यदानेन संपादितः परिकरः कार्यारम्भो यस्य तथाभूतः। 'सज्जारम्भौ परिकरौ' इति त्रिकाण्डशेषः। उच्छेत्तुं निमूर्लयितुम्। सैना-पत्ये सेनापतित्वे सेनापतिपद इत्यर्थः। यौधिष्ठिरबलमिति पाठे तद्धितो निरर्थक एव।

(या) सुष्ठु प्रशस्तमेवं करणमित्यर्थः। युष्माभिरिति गौरवे बहुवचनम्। युज्य-मानं योग्यं भवत्। अभिहितं उक्तम्। योग्यमुक्तमित्यर्थः। अयं सैनापत्यरूपोऽर्थः। प्राक् इतः पूर्वमेव अङ्गराजस्य कर्णस्य कर्णायेत्यर्थः। शेषे षष्ठी। प्रतिपन्नः प्रतिपादितो दत्त इत्यर्थः। अन्तर्भावितण्यर्थात्प्रतिपूर्वात्पद्यतेर्दानार्थकान्निष्ठा। रदाभ्यामिति नः। 'स्पर्शनं प्रतिदानम्।' इति दानपर्यायेष्वमरः।

(यि) असदृशपरिभवशोकसागरे असदृशे अनुपमे अयोग्ये वा परिभवशोकयोः सागरे। एनमश्वत्थामानम्। अङ्गराजस्यार्थे कर्णस्य कृते। उपेक्षितुं त्यक्तुम्। तदेव यस्तव तदेवेत्यर्थः। अरिकुलं शत्रुसमूहः अनुशासनीयं शासनेन योजनीयम्। अस्तीति शेषः। अस्येति शेषे षष्ठी अनेनेत्यर्थः। अतः यतोऽरिकुलं शासनीयं तस्मात्। अस्य पीडा न भविष्यति किम्? त्वया न दत्ते सैनापत्ये साहाय्यशून्यतया एकाकिनोऽस्यारिकुलानुशासने क्लेशः स्यादिति भावः। **अतः परं** राजा (चिन्तां नाटयति)' इत्यनेन पाठेन भवितव्य-मिति प्रतीयते। अन्यथा हि किमद्यापि युक्तायुक्तविचारणयेत्यश्वत्थामोक्तिर्न संगच्छेत। प्राक्प्रतिपन्नोऽयमर्थोऽङ्गराजस्येति प्रागेव स्पष्टमेवाभिहितत्वाद्युक्तायुक्तविचारणायाः प्रस-ङ्गाभावात्। चिन्तां नाटयतीति पाठे तु चिन्ता युक्तायुक्तविषयिणीति सर्वमनवद्यम्।

(यी) अद्यापि इदानीमपीत्यर्थः। अप्युत्तरं ह्ययपदमिदानीमित्यर्थे द्रष्टम्। युक्ता-युक्तविचारणया युक्तं वा कृपेणोक्तमयुक्तं वेति विचारेण। किं किं फलम्। निष्फलोऽयं विचारो युक्तमेव ह्येतेनोक्तमितीति भावः।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाद्य दोःशालिना
व्यपैति नृपकाननातिगुरुरद्य भारो भुवः ॥ ३४ ॥

**कर्णः**—(विहस्य ।) द्रोणात्मज ! वक्तुं सुकरमिदं दुष्करमध्यवसितुम् । बहवः कौरवबलेऽस्य कर्मणः शक्ताः (यु)

---

(६४) आत्मनः सामर्थ्योपवर्णनमुखेन कृपोक्तेर्युक्ततां समर्थयति । प्रयत्नेति । अद्य वर्तमाने दिवसे स्तुतिभिर्बन्दिजनकृताभिः प्रशंसाभिः करणभूताभिः प्रयत्नेन गाढं प्रसुप्तत्वात्प्रयासेन परिबोधितो जागरित्वं गमितः त्वं निशां सर्वामपि रात्रिमभिव्याप्येत्यर्थः। कालाध्वनोरत्यन्तसंयोग इति द्वितीया । शेषे निद्रामनुभविष्यसि।शीङो वर्तमानसामीप्ये भविष्यति लट् । अद्य भुवनं जगत् अकेशवं केशवेन कृष्णेन रहितम् । अपाण्डवं पाण्डवशून्यम् । निःसोमकं सोमकाः सोमकस्य राज्ञः कुले संजाता धृष्टद्युम्नादयो निर्गता यस्मात्तथाभूतम् । द्रुपदवंशशून्यमित्यर्थः । भवतीति शेषः । भविष्यतीत्यर्थः । एतेषामशेषाणामपि मया निश्चितं निहनिष्यमाणत्वादितिभावः । एतेषां च नाशे चिन्ताया अभावेन सकलां रात्रिमभिव्याप्य गाढं स्वप्स्यसीत्यभिप्रायः । दोःशालिना बाहुशालिना । शूरेणेत्यर्थः । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । मया अद्य इयं अस्यामवस्थायां वर्तमानैव रणकथा संग्रामसंबन्धिनी कथा परिसमाप्यते निरवशेषतां नीयते । परिसमाप्स्यत इत्यर्थः । अस्मिन्नेव क्षणे निहत्यशत्रूंस्तथा करिष्यामि यथा वार्तामात्रेणापि संग्रामो नावशिष्येतेति भावः । अद्य नृपकाननातिगुरुः नृपा राजान एव काननानि वनानि तैः अतिगुरुरतिमहान् भुवो भारः व्यपैति व्यपैष्यतीत्यर्थः । अत्र व्यपैत्विति बहुपुस्तकानुसारी पाठः । प्रत्ययक्रमभङ्गभिया तु नादृतोऽयमस्माभिः । 'दोःशालिना' इत्यत्र दोःशालिनामित्यपि क्वचित् पाठः । तत्र दोःशालिनां वीराणां रणकथा परिसमाप्यते निःशेषतां गमिष्यतीत्यर्थः । कर्मकर्तरि यक् । वर्तमानसामीप्ये लट् । अत्र प्रथमपादगते गाढप्रस्वापरूपेऽर्थे चरणत्रयगतस्यार्थस्य हेतुत्वाद्वाक्यार्थगतहेतुकं काव्यलिङ्गमलङ्कारः । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात् । पृथ्वीवृत्तम् ।

(य) इदं अकेशवमपाण्डवमित्यादि भवदुक्तम् । वक्तुं सुकरं शक्यमिति यावत् । अध्यवसितुं कर्तुं दुष्करमशक्यमिति यावत् । अस्य भवदुक्तस्य कर्मणः । शेषे षष्ठी । अत्र

**अश्वत्थामा**—अङ्गराज! एवमिदम्। बहवः कौरवबलेऽत्र शक्ताः। किं तु दुःखोपहतः शोकावेगवशाद्ब्रवीमि न पुनर्वीरजनाविक्षेपेण। (यू)

**कर्णः**—मूढ! दुःखितस्याश्रुपातः कुपितस्य चायुधद्वितीयस्य सङ्ग्रामावतरणमुचितं, नैवंविधाः प्रलापाः। (ये)

**अश्वत्थामा**—(सक्रोधम्) अरे रे राधागर्भभारभूत! सूतापसद! ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियामुपदिशसि न शस्त्रेण?। पश्य। (यै)

निर्वीर्यं गुरुशापभाषितवशात्किं मे तवेवायुधं?
संप्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा।?
जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले?
क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्रेण नास्त्रेण यत्॥ ३५॥

---

कर्मणीत्यर्थः। कौरवबले कौरवसैन्यमध्ये बहवः शक्ताः।

(यू) दुःखोपहतः दुःखेनाभिभूतः शोकावेगवशात् शोकप्रसराधीनत्वात्। अहं हि शोकप्रसरस्याधीनः संवृत्तोऽस्मि ततो ब्रवीमीत्यर्थः। वीरजनाधिक्षेपेण वीरपुरुषनिन्दया। हेतौ तृतीया। निन्दाहेतोरित्यर्थः न ब्रवीमि।

(ये) दुःखितस्य अश्रुपातः रुदितं उचित इति लिङ्गविपरिणामेन संबध्यते। आयुधद्वितीयस्य आयुधमात्रसहायस्य संग्रामावतरणं युद्धे प्रवेशः। एवंविधाः प्रलापा निरर्थिका उक्तयः न उचिता इति संबध्यते।

(यै) अरेरे इति सक्रोधाह्वाने। राधाया एतन्नाम्न्याः सूतभार्यायाः गर्भे भारभूत। पराक्रमशून्यतया जन्मनो निष्फलत्वादिति भावः। सूतापसद सूताधम। मम अश्वत्थाम्नोऽपि नामेत्यात्मनो लोकोत्तरपराक्रमशालित्वद्योतनाय स्व नामग्रहणम्। अश्रुभिः करणभूतैः प्रतिक्रियां वैरनिर्यातनम् उपदिशसि। शस्त्रेण करणभूतेन न प्रतिक्रियामुपदिशसि? सस्त्रेणैव प्रतिकारे क्षमोऽहमिति भावः।

(३५) भवदपेक्षया श्रेष्ठत्वादस्त्रेणैव प्रतीकारे समर्थोऽहं त्वमेव तु दुःखितोऽश्रुभिः प्रतिकरिष्यसीत्याह। **निर्वीर्यमिति**। तव इव मे मम अस्त्रं गुरुशापभाषितवशात् गुरोः

**कर्णः**—( सक्रोधम् ) अरे रे वाचाट! वृथाशस्त्रग्रहणदुर्विदग्ध! बटो! **(यो)**

---

अध्यापकस्य यच्छापरूपं भाषितं वचनं तद्वशात् । गुरुकृतशापयोगादित्यर्थः । निर्वीर्यं प्रभावशून्यं किम् । नैवेति भावः । परशुरामः किल विविधदिव्यास्त्रनिपुणः क्षत्रियेषु बद्धवैरो नैव धनुर्वेदं क्षत्रियानुपदेक्ष्यामीति प्रतिजज्ञे । ततस्तस्मादेव तं वेदमधिगन्तुकामः कर्णो ब्राह्मणवेषेण प्रच्छन्नो भूत्वा परशुरामस्य शिष्यतामापन्नो धनुर्वेदमधीयानः समभूत् । अथ कदाचित् कर्णस्योरुमुपधानीकृत्य प्रसुप्ते रामे कृकलासरूपेणागत इन्द्रः कर्णस्योरु समदशत् । स तु गुरोः स्वापभङ्गभिया व्रणितेऽप्यूरौ न चचाल । प्रबुद्धस्तु रामस्तदवेक्ष्य क्षत्रियं ज्ञात्वा कर्णं शशाप 'सूतोपधावाप्तमिदं तवास्त्रं न कर्मकाले प्रतिभास्यति त्वाम् ।' इति । तत एव च निर्वीर्यं कर्णस्यास्त्रं समभूदिति महाभारतगता कथाऽत्रानुसन्धेया। आस्तामेतदतीतं परा यत्तं च शूरः पुनरहमस्म्येवेति चेत्तदपि नेत्याह **संप्रत्येवेति** । संप्रत्येव इदानीमेव भयात् शत्रवो मां हन्युरितिभीतेः । हेतौ पञ्चमी । समरं युद्धं विहाय त्यक्त्वा यथा त्वं प्राप्तस्तथाऽहं प्राप्तोऽस्मि किम्? एतदपि नास्तीत्यर्थः । आस्तां नाम गुरुप्राप्ताया विद्याया अनुपयुक्तत्वं भवतु च समयविशेषे भीतिः कुलक्रमागतं मे शौर्यं चास्ति विद्या चेति चेत्तदपि नास्त्येवेत्याह। जातोऽहमिति । यथा त्वमित्यनुवर्तते।यथा त्वं स्तुतिवंशकीर्तनविदां स्तुतिं नृपादीनां प्रशंसां च वंशकीर्तनं वंशोच्चारणं वंशगतपुरुषनामोच्चारणमित्यर्थः विदन्ति जानन्ति तेषाम्। तदेव जानतां न पुनरस्त्रविद्यामवगच्छतामिति भावः। सारथीनां कुले जातः तथाऽहंजातोऽस्मि किं न जातोऽस्मीत्यर्थः। यत् यस्मात् क्षुद्रारातिकृताप्रियं क्षुद्रैर्महत्त्वशून्यैरारातिभिः शत्रुभिः कृतमप्रियं अनिष्टमपकारमित्यर्थः अस्त्रेण अश्रुणा प्रतिकरोमि निर्यातयिष्यामि न तु अस्त्रेण । वर्तमानसामीप्ये लट् । अस्त्रादीनां निर्वीर्यत्वादिना तवैवास्त्रेण प्रतीकारो युक्तो मम पुनस्तदभावादस्त्रेणैवेति भावः । अत्र कर्णस्य भर्त्सनार्थं दूषणानामुद्घोषणाद्गर्हणं नाम नाट्यलक्षणम्। 'दूषणोद्घोषणायां तु भर्त्सना गर्हणं मतम् ।' इति दर्पणवचनात्। अत्र यदित्यत्र किमित्यपि पाठः स च सुगमः । शार्दूलविक्रीडितं वृत्तम् ।

**(यो)** अरेरे इति क्रोधेनामन्त्रणे । वाचाट बहुकुत्सितभाषिन् । आलजाटचौ बहुभाषिणीति सूत्रे कुत्सित इति वक्तव्यमिति वार्तिकात् वाक्शब्दादाटच् । 'वाचाटो बहुगर्ह्यवाक्' इति हेमः । वृथाशस्त्रग्रहणदुर्विदग्ध वृथा निष्फलं यच्छस्त्रग्रहणं शस्त्रस्वीकारः शस्त्रविद्याज्ञानं वा तेन दुर्विदग्धो दुष्टो विदग्धश्चतुरो गर्वित इत्यर्थः । 'ग्रहणं तूपलब्धौ (ज्ञाने) स्यादादरे ग्रहणे करे । ' इति विश्वः । 'दुर्विदग्धो गर्वित' इति वाचस्पत्यम् । बटो ब्रह्मचारिन् असमाप्ताध्ययनेत्यर्थः । अधिक्षेपे प्रयुज्यतेऽयं शब्दः केवलः सपूर्वो वा ।

निर्वीर्यं वा सवीर्यं वा मया नोत्सृष्टमायुधम् ।
यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना ॥ ३६ ॥

अपि च ।

सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम् ।
दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ॥ ३७ ॥

**अश्वत्थामा**—(सक्रोधम् ।) अरे रे रथकारकुलकलङ्क! राधागर्भभारभूत! आयुधानभिज्ञ! तातमप्यधिक्षिपसि ? । अथ वा (यौ)

---

(३६) अश्वत्थामोक्तं प्रतिवदति निर्वीर्यमिति । यथा बाहुशालिना बाहुभ्यां शोभमानेन बाहुपदमत्र बाहुबलपरं बाहुबलशालिनेत्यर्थः । स्तुतिरियं निन्दां गमयति । पाञ्चालभीतेन पाञ्चालवंशोत्पन्नात्धृष्टद्युम्नाद्भीतेन ते तव पित्रा द्रोणेन, तथा मया निर्वीर्यं प्रभावशून्यं सवीर्यं प्रभावयुक्तं वा । तस्य निर्वीर्यत्वं सवीर्यत्वं वाऽहमेवजानामीति भावः आयुधं शस्त्रं न उत्सृष्टं त्यक्तम् । अत्र बाहुशालिनेति स्तुत्या वाच्यया निन्दाया गम्यमानत्वाद्व्याजस्तुतिरलङ्कारः । यदुक्तं विश्वनाथेन 'उक्ता व्याजस्तुतिः पुनः । निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः । ' इति । पथ्यावक्त्रं वृत्तम् ।

(३७) कुलक्रमागतत्वं शौर्यस्य प्रत्याचष्टे । सूत इति । अहं सूतः सारथिः सारथ्यकर्मकृदित्यर्थः । वा अथवा सूतपुत्रः सारथिपुत्रः सूतकुलोत्पन्न इत्यर्थः । सारथिकुलोत्पन्नत्वाद्वा तत्कर्मकरत्वाद्वा भवतु मयि सूतत्वमिति भावः । वा अथवा यः को वा यस्यां कस्यामपि भवदभीष्टायां जातावुत्पन्न इत्यर्थः । भवामि अस्मि । न किल ततः कोपि दोष इति भावः। यतः कुले जन्म दैवायत्तं दैवाधीनम्। 'अधीनो निघ्न आयत्त' इत्यमरः। पौरुषं शौर्यं तु मदायत्तं मदधीनम् । अतो दैवायत्ते वस्तुनि दोषारोपस्यान्याय्यत्वात्पौरुषस्य च मयि अधीनतया विद्यमानत्वान्न मयि दोषः । अत्रास्य च मया निर्वीर्यत्वेऽपि वाऽपरित्यागात्त्वत्पित्रैव च त्यागात् तव पितुरेव पाञ्चालतो भीतत्वाच्च पितैव ते निन्द्यो नाहमिति भावः । दैवायत्तं कुले जन्मेति ब्राह्मणकुलजन्मनापि ते न कश्चिद्गुण इति व्यज्यते। यो वा स्यो वेत्यपि क्वचित्पाठः। तत्र स्य इति तच्छब्दसमानार्थस्य त्यच्छब्दस्य रूपम् । यः कोपि वेत्यर्थे तु यः स्योऽपि वा यः सोऽपि वेति च न प्रयुञ्जते कवय इति परित्यक्तोऽयं पाठः।पथ्यावक्त्रं वृत्तम्।

(यौ) रथकारकुलकलङ्क सारथिवंशलाञ्छन विमलस्य सारथिकुलस्य दूषकेत्यर्थः। आयुधानभिज्ञ आयुधज्ञानशून्य । तातमपि मत्पितरं द्रोणमपि अधिक्षिपसि निन्दसि ।

स भीरुः शूरो वा प्रथितभुजसारस्त्रिभुवने
कृतं यत्तेनाजौ प्रतिदिनमियं वेत्ति वसुधा ।
परित्यक्तं शस्त्रं कथमिति स सत्यव्रतधरः
पृथासूनुः साक्षी त्वमसि रणभीरो ! क्व नु तदा ? ॥ ३८ ॥

**कर्णः**—(विहस्य ।) एवं, भीरुरहम् । त्वं पुनर्विक्रमैकरसं स्वपितरमनुस्मृत्य न जाने किं करिष्यसीति । महान्मे संशयो जातः । अपि च रे मूढ ! (यं)

---

(३८) ताताधिक्षेपे नास्त्येव तवाधिकार इत्याह । स इति । भीरुः भयशीलो भवन्मतेनेति भावः । वा अथवा शूरः परमार्थत इत्यभिप्रायः । स मे पिता द्रोणः । त्रिभुवने त्रैलोक्ये प्रथितभुजसारः प्रथितः प्रख्यातो भुजसारो बाहुबलं यस्य तथाभूतः अस्ति । जगत्त्रयविदितस्यार्थस्य त्वयाऽपलापेऽपि न कश्चिद्दोष इति भावः । 'सारो बले स्थिरांशे' चेत्यमरः । तेन द्रोणेन कर्त्रा प्रतिदिनं दिने दिने । वीप्सायामव्ययीभावः । पञ्चदश दिनानि हि चकार युद्धं द्रोणः । यत्कृतं तदित्यर्थात्संबध्यते । तत्पौरुषमित्यर्थः । इयं वसुधा पृथ्वी वेत्ति जानाति । भूभारभूतानामनेकेषां रिपूणामुच्छेदाल्लघूकृतभारा पृथिवी जानातीत्यर्थः । यद्वा द्रोणेन निहतानां संख्यातिगामिनां पुरुषाणां भूमौ पतितत्वात्सैव जानातीत्यर्थः । तेनेति कर्तृपदं तृतीयेऽपि चरणेऽनुकृष्यते । तेन कर्त्रा शस्त्रं कथं केन प्रकारेण भयाद्वा शोकाद्वा इति । अत्रेति शेषः । सत्यव्रतधरः सत्यरूपस्य व्रतस्य धरो धारकः सत्यैकनिष्ठ इत्यर्थः । सः प्रसिद्धः अश्वत्थामा हत इति वदन्वा पृथासूनुः कुन्तीपुत्रो युधिष्ठिरः साक्षी साक्षाद्द्रष्टेति प्रमाणभूत इत्यर्थः । तव तु नायं विदितोऽर्थ इति भावः । हे रणभीरो युद्धभीरो तदा यदा तेन शस्त्रं परित्यक्तं तस्मिन्नवसरे त्वं क्व नु कुत्र नु असि आसीरित्यर्थः । भीत्या संग्रामतः पलायितस्त्वं तच्छस्त्रत्यागकारणं न जानासीति तद्विषये सत्यनिष्ठं साक्षाद्द्रष्टारं युधिष्ठिरमेव पृच्छेत्यर्थः । अविदितपरमार्थस्यैव तवायं प्रलाप इति भावः । अत्र सत्यव्रतधन इत्यपि पाठः । तत्र सत्यव्रतमेव धनं द्रव्यवत्परिरक्षणीयं यस्येत्यर्थः । शिखरिणी वृत्तम् ।

(यं) विहस्य हसित्वा । अश्वत्थाम्नोऽनादरार्थं हासः । स्तुत्या निन्दति एवमिति । एवं भवदुक्तप्रकारमेवास्तीत्यर्थः । अहं भीरुर्भयशीलः । विक्रमैकरसं विक्रमः पराक्रम एवैकः प्रधानो रसो यत्र तथाभूतं स्वपितरं अनुस्मृत्य स्मृत्वा किं करिष्यसीति न जाने न निश्चिनोमीत्यर्थः । पितापि ते विक्रमैकरसः त्वमपि विक्रमातिशयशालीति न ज्ञायते किंवा

यदि शस्त्रमुज्झितमशस्त्रपाणयो
न निवारयन्ति किमरीनुदायुधान् ।
यदनेन मौलिदलनेऽप्युदासितं
सुचिरं स्त्रियेव नृपचक्रसंनिधौ ॥ ३९ ॥

**अश्वत्थामा—**( सक्रोधं सकम्पं च । ) दुरात्मन् ! राजवल्लभप्रगल्भ ! सूतापसद ! असंबद्धप्रलापिन् ! (यः)

---

करिष्यसीति भावः । संशयः एतद्वा करिष्यसि तद्वा करिष्यसीत्येवमनवधारणरूपः । सर्वस्यापि त्वया कर्तुं शक्यत्वादिति भावः । अत्र त्वं पुनर्विक्रमैकरसः । तव पितरमनुस्मृत्य महान्मे संशयो जात इति क्वचित्पाठः । न चायमनुरूपः न मे पिता भीरुः किं तु त्वमेवेत्यश्वत्थाम्नोक्ते पितैव ते भीरुरिति वक्तव्ये त्वमेव भीरुरिति वचनस्यायुक्तत्वात् । इति । अत्र च अश्वत्थाम्नः प्रशंसया निन्दायाः भीरुरहमित्यात्मनो निन्दया च प्रशंसाया गम्यमानत्वादुक्तपूर्वलक्षणो व्याजस्तुतिरलङ्कारः ।

(३९) पुनर्द्रोणमधिक्षिपति । यदीति । यत् यस्मात् अनेन द्रोणेन स्त्रिया इव नृपचक्रसन्निधौ नृपाणां स्वपक्षीयराजानां चक्रस्य स्वाधिष्ठितस्य सैन्यस्य च सान्निधौ सामीप्ये सति । 'चक्रः कोके व्रजे पुंसि, क्लीबे सैन्यरथाङ्गयोः ।' इति त्रिकाण्डशेषः । मौलिदलने मस्तकच्छेदेऽपि उदासितं उदासीनतया स्थितम् । तदिति शेषः । यत्तदोर्नित्यसंबन्धात् । तत् तस्मात् । यदि शस्त्रमुज्झितं त्यक्तं तदा अशस्त्रपाणयः नास्ति शस्त्रं पाणौ येषां तथाभूताः शस्त्रशून्या वीरा इत्यर्थः । उदायुधान् उद्यतशस्त्रान् प्रहर्तुमुद्युक्तानित्यर्थः । अरीन् शत्रून् न निवारयन्ति किम् ? इति प्रश्नः । परित्यक्ते शस्त्रे प्रहर्तुमुद्यता अपि शत्रवो न निवारणीया इति किमु रीतिरेवेयं विद्यते वीराणां येन शिरसश्छेदेऽप्युदासीनस्ते पितेति प्रश्नाभिप्रायः । सेनापतेरस्य सन्निहितं सैन्यमादिश्यापि शक्यं शत्रुं निवारयितुं तथापि यदनेनोदासितं तेन भीरुरेवायं संनिहिते शत्रौ भयादप्रतिभातकर्तव्यः पर्यत्यजच्छस्त्रमिति भावः । 'उत्तमाङ्गं शिरो मूर्धा मौलि' रिति हैमः । मञ्जुभाषिणी वृत्तम् । 'सजसा जगौ च यदि मञ्जुभाषिणी' तिलक्षणात् ।

(यः) सकम्पमिति क्रोधातिशयवशात्कम्पः । दुरात्मन् दुष्टहृदय । राजवल्लभप्रगल्भ राज्ञो दुर्योधनस्य वल्लभः प्रियश्चासौ प्रगल्भो धृष्टश्च तथाभूत । राजप्रियत्वाद्धृष्ट

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम् ॥ ४० ॥

( इति तथा कर्तुमुत्तिष्ठति । ) (र)

**कृपदुर्योधनौ**—गुरुपुत्र! मर्षय मर्षय । (इति निवारयतः । ) (रा)

( अश्वत्थामा चरणप्रहारं नाटयति । ) (रि)

---

इत्यर्थः । असंबद्धप्रलापिन् असंबद्धं संबन्धशून्यं यथा तथा प्रलपितुं निरर्थकं वक्तुं शीलं यस्य तथाभूत ।

(४०) कथमपीति । तेन यं त्वमधिक्षिपसि तेन मम पित्रा। अद्य, दुःखिना । परमार्थतया प्रधानत्वाद् दुःखिनेत्यस्य पूर्वं विनिवेशः। वा अथवा । भीरुणेत्यस्य चापरमार्थतयाऽप्रधानत्वात्परस्ताद्विनिवेशः । दुःखिना भीरुणा वा सता कथमपि तवाविदितेन केनापि प्रकारेणेत्यर्थः । द्रुपदतनयपाणिः द्रुपदपुत्रस्य धृष्टद्युम्नस्य हस्तः केशग्रहणार्थं शिरसि निहितो न निषिद्धो न वारितः । तदेतदास्तां नामेति भावः। मयेति कर्तृपदमध्याह्रियते। भुजबलदर्पाध्मायमानस्य भुजबलस्य संबन्धिना दर्पेण वृथाभिमानेनाध्मायमानस्य पूर्यमाणस्य व्याप्यमानस्येत्यर्थः । तव शिरसि एषः तव पुरो विद्यमानः वामः सव्यः । तस्यैव पुंसां शरीरे निकृष्टत्वादिति भावः । चरणः पादः न्यस्यते । एनं वारय दूरीकुरु । किं मे परलोकं गतस्य पितुः शौर्याशौर्यविचारणया ममैव तु विक्रमं पश्येति भावः । मालिनी वृत्तम् । 'ननमयययुतेयं मालिनीभोगिलोकैः' इति लक्षणात् ।

(र) इति उक्त्वेति शेषः । तथा उक्तप्रकारं कर्तुं उत्तिष्ठति वामं चरणं कर्णस्य शिरसि निधातुमुत्तिष्ठतीत्यर्थः । अत्र क्वचित् 'इत्युत्तिष्ठती' त्येतावानेव पाठः । तत्र तथाकर्तुमित्यर्थादेव प्रतीयते ।

(रा) मर्षय सहस्व । अत्र गुरुपुत्रेत्यत्र वत्सेत्यपि पाठः । स च कृपदुर्योधनयोः समुच्चित्य वक्तृत्वान्न युक्तः । दुर्योधनो हि वत्सेति न ब्रूयादश्वत्थामानम् ।

(रि) चरणप्रहारं चरणेन कर्णं प्रहरणं नाटयति अभिनयति ।

**कर्णः**—( सक्रोधमुत्थाय । खड्गमाकृष्य । ) अरे दुरात्मन्! ब्रह्मबन्धो ! आत्मश्लाविन् ! (री)

जात्या काममवध्योऽसि चरणं त्विदमुद्धृतम् ।
अनेन लूनं खड्गेन पतितं वेत्स्यसि क्षितौ ॥ ४१ ॥

**अश्वत्थामा**—अरे मूढ! जात्या चेदवध्योऽहम्, इयं सा जातिः परित्यक्ता । ( इति यज्ञोपवीतं छिनत्ति । पुनश्च सक्रोधम् । ) (रु)

अद्य मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते मया ।
शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम् ॥ ४२ ॥

---

(री) ब्रह्मबन्धो निन्द्यब्राह्मण 'ब्रह्मबन्धुरधिक्षेपे' इति विश्वः । यः किलः स्वयं ब्राह्मणोचिताचारशून्यः सदाचाराणां ब्राह्मणानां बन्धुरित्येव ब्राह्मण इत्याख्यायते स ब्रह्मबन्धुरित्यु च्यते । ब्रह्म ब्राह्मणजातिर्बन्धुरस्येति ।

(४१) जात्येति । त्वं जात्या ब्राह्मणत्वरूपया हेतुभूतया काममत्यन्तं अवध्यो वधानर्हः असि । 'न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम् ।' इति स्मृतेरिति भावः। चरणं पदं तु इदं एतदवस्थमेवेत्यर्थः। उद्धृतम् । अत्र चरणमिति क्लीबतया निर्देशः सुकरोद्धारतां चरणस्य बोधयति। इदमिति पदं च अस्मिन्नेव समय उद्धृतं नात्र विलम्बापेक्षेति ध्वनयति। तच्च असि त्वम्। असीति विभक्तिप्रतिरूपकमव्ययं त्वमित्यर्थे। अनेन पुरो दृश्यमानेन खड्गेन मे तरवारिणा लूनं छिन्नम्। ल्वादिभ्य इति निष्ठातस्य नः। तत एव च क्षितौ भूमौ पतितं वेत्सि ज्ञास्यसीत्यर्थः । वर्तमानसामीप्ये भविष्यति लट् । अत्र वेत्स्यसीत्यत्र द्रक्ष्यसीत्यपि क्वचित्पाठः । प्राचां पुनर्वामनादीनां प्रबन्धेषु वेत्स्यसीत्येव संदृष्ट इत्यसौ परित्यक्तः । वेत्स्यसीति भविष्यत्कालिकं रूपं स्वीकुर्वाणः श्रीतारानाथतर्कवाचस्पतिर्भ्रान्तः । वेत्तेरिडभावात्। काममित्यत्र तावदित्यपि क्वचित्। मयि पदं प्रहरतस्तव वध एव न्याय्यः किन्तु ब्राह्मणत्वेनावध्यतया चरणमेव ते छिनद्मीति भावः । पथ्यावक्त्रं वृत्तम् ।

(रु) जातिः जातिसूचकं यज्ञोपवीतमित्यर्थः । अयज्ञोपवीतस्य ब्राह्मणत्वाभाद्विजत्वचिह्नार्थं हि यज्ञोपवीतं धार्यते । यज्ञोपवीतं यज्ञसूत्रं द्विजातिधार्यम् ।

अद्येति । त्वं शस्त्रं वा गृहाण मया सह युद्धार्थं स्वीकुरु। तत्त्यक्त्वा मौलौ कुलीकृतं पाणिद्वयं वा रचय कुरु निधेहीति यावत्। क्षमाप्रार्थनार्थं मां

( उभावपि खड्गमाकृष्यान्योन्यं प्रहर्तुमुद्यतौ । कृपदुर्योधनौ निवारयतः । ) (रू)

**दुर्योधनः**—आचार्यपुत्र ! शस्त्रग्रहणेनालम् ।

**कृपः**—वत्स ! सूतपुत्र ! शस्त्रग्रहणेनालम् ।

**अश्वत्थामा**—मातुल ! मातुल ! किं निवारयसि ? । अयमपि ताततनिन्दा-प्रगल्भः सूतापसदो धृष्टद्युम्नपक्षपात्येव । (रे)

**कर्णः**—राजन् ! न खल्वहं निवारयितव्यः ।

उपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया ।
अत्रासितानां क्रोधान्धैर्भवत्येषा विकत्थना ॥ ४३ ॥

**अश्वत्थामा**—राजन् ! मुञ्च मुञ्चैनम् । आसादयतु मद्भुजान्तरनिष्पेष-सुलभमसूनामवसादनम् । अन्यच्च राजन् ! स्नेहेन वा कार्येण वा यत्त्वमेनं ताताधिक्षेपकारिणं दुरात्मानं मत्तः परिरक्षितुमिच्छसि तदुभयमपि वृथैव ते । पश्य । (रै)

---

प्रणन्तुमिति भावः । तथापि अद्य मया कर्त्रा असौ प्रथितः किरीटी अर्जुनः मिथ्याप्रतिज्ञः मिथ्याभूता मयैव ते निहतत्वादसत्यतां प्राप्ता प्रतिज्ञा कर्णवधरूपा यस्य तथाविधः क्रियते । युध्यमानं वा प्रणमन्तमपि वा त्वामद्याहमेव हन्मीत्यर्थः । पथ्यावक्त्रं वृत्तम् ।

(रू) खड्गं आकृष्य कोषादुद्धृत्य ।

(रे) किं कस्मात् । नाहं निवारणीय इत्यर्थः । कुत इत्याह । अयमपीति । तातस्य मत्पितुर्द्रोणस्य निन्दायां प्रगल्भः अत एव धृष्टद्युम्नस्य द्रोणहन्तुर्द्रुपदपुत्रस्य पक्षपाती पक्षाभिनिवेश्येव । तत एव च वध्य इति भावः ।

(४३) उपेक्षितानामिति । धीरसत्त्वैः धीरस्वभावैः धीरचित्तैर्वा । 'सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वे व्यवसायासुचित्तेषु' इति मेदिनी । अवज्ञया अनादरेण उपेक्षितानां त्यक्तानां अकृतशासनानामित्यर्थः । क्रोधान्धैः क्रोधेन कर्तव्यविचारशून्यतां यातैः अत्रासितानां भीतिमप्रापितानां च मन्दानां मूर्खाणां एषा अश्वत्थामकृता विकत्थना मिथ्याऽऽत्मश्लाघा भवति जायते । मूर्खा एतेऽनुचिता नो द्वेषस्येत्यव-

पापप्रियस्तव कथं गुणिनः सखाऽयं
सूतान्वयः शशधरान्वयसंभवस्य ? ।
हन्ता किरीटिनमयं? नृप! मुञ्च कुर्यां
क्रोधादकर्णमपृथात्मजमद्य लोकम् ॥ ४४ ॥

( इति प्रहर्तुमिच्छति )

---

ज्ञायादण्डिता अभीषिताश्च मूढा एवमात्मश्लाघया वल्गन्तीत्यतोऽवश्यं शासनीया एते । तत एव च नाहं निवारयितव्य इति भावः । पथ्यावक्त्रं वृत्तम् ।

(४३) मद्भुजान्तरनिष्पेषसुलभं मम भुजयोरन्तरे मध्ये यो निष्पेषः शरीरस्य चूर्णीभावः तेन सुलभं सुप्रापम् । असूनां प्राणानाम् । 'पुंसि भूम्न्यसवः प्राणा' इत्यमरः । अवसादनं क्षयं नाशमित्यर्थः । आसादयतु प्राप्नोतु । तथाऽहमेनं भुजयोरन्तरे गृहीत्वा निष्पिनष्मि यथाऽयं चूर्णीभूतो म्रियेतेति भावः । स्नेहेन सख्येन हेतुभूतेन । 'स्नेहः स्यात्पुंसि तैलादिरसद्रव्ये च सौहृदे ।' इति मेदिनी । कार्येण स्वकार्यापेक्षया वा । ताताधिक्षेपकारिणं मत्पितुर्निन्दायाः कर्तारम् । मत्तः मत्सकाशात् । तत् उभयं स्नेहेन रक्षणं कार्येण रक्षणं चेति द्वयम् । वृथा निष्फलम् । अत्र सौहृदस्यायुक्तत्वात् अर्जुनहननस्य चैतेन कर्तुमशक्यत्वादिति भावः एतदेवोपपादयति पद्येन ।

(४४ तत्र स्नेहस्यानुचितत्वमाह पापेति । हे नृप! शशधरान्वयसम्भवस्य चन्द्रवंशे जातस्य । शशधरपदं नैर्मल्यमभिव्यञ्जयति । गुणिनः प्रशस्तगुणशालिनः तव सूतान्वयः सूतस्य सारथेरन्वयो वंशजः । सारथिकुलोद्भूत इत्यर्थः । 'मातुर्दुहितराऽभावे दुहितॄणां तदन्वयः ।' इति नारदस्मृत्यादिष्वन्वयशब्दस्य वंशजार्थकत्वदर्शनात् । पापप्रियः पापं प्रियं यस्य तथाभूतः । दुर्गुण इत्यर्थः । अयं कर्णः सखा मित्रं कथम्? न कथमपि भवति । यो हि समानो गुणादिभिः ख्यायते स एव सखा भवति । अयं तु गुणैर्वंशेन च तवासमान इति समानतया ख्यातुमशक्यत्वान्न सखेति भावः । समाने ख्यः स चोदात्त इत्युणादिसूत्रेण समानपूर्वात्ख्यातेरिणि समानस्य सभावे च निष्पन्नः सखिशब्दः । एवमसमानत्वात्स्नेहापेक्षया परिरक्षणस्य वृथात्वं प्रतिपाद्य कार्यापेक्षयापि तस्य वृथात्वमाह । हन्तेति अयं ईदृग्गुणविशिष्टः कर्णः किरीटिनमर्जुनं हन्ता हनिष्यतीति प्रश्ने काकुः । भविष्यत्यनद्यतने लुट् । नैव हन्तेति भावः । अत एव च कार्यापेक्षयाऽप्यस्य परिरक्षणं वृथैवेति भावः । अतः मुञ्च एनमिति शेषः । अद्य अस्मिन्नेव दिवसे क्रोधात् लोकं जगत् अकर्णं आदितः कर्णशून्यं ततश्च अपृथात्मजं पृथायाः कुन्त्या आत्मजैः पुत्रैः पाण्डवैश्च शून्यं कुर्याम् । विधौ लिङ् । अपृथात्मजमिति मातृनाम्नाभिधानाजघन्यत्वं पाण्डवानां व्यज्यते ।

**कर्णः**—( खड्गमुद्यम्य । ) अरे वाचाट! ब्राह्मणाधम! अयं न भवसि । राजन्! मुञ्च मुञ्च । न खल्वहं वारयितव्यः । (इति हन्तुमिच्छति । ) **(रो)**

( दुर्योधनकृपौ निवारयतः )

**दुर्योधनः**—कर्ण! गुरुपुत्र! कोऽयमद्य युवयोर्व्यामोहः ?। **(रौ)**

**कृपः**—वत्स! अन्यदेत्र प्रस्तुतमन्यत्रावेग इति कोऽयं व्यामोहः? । स्वबलव्यसनं चेदमस्मिन्काले राजकुलस्यास्य युष्मत्त एव भवतीति वामः पन्थाः । **(रं)**

**अश्वत्थामा**—मातुल! न लभ्यतेऽस्य कटुप्रलापिनो रथकारकुलकलङ्कस्य दर्पः शातयितुम् । **(रः)**

**कृपः**—वत्स! अकालः खलु स्वबलप्रधानविरोधस्य । **(ल)**

---

(रो) अयं एतदवस्थ एव। आस्मिन्क्षण एवेति गम्यते । न भवसि सत्तां न प्राप्नोषि असत्त्वं व्रजसि नश्यसीत्यर्थः । अस्मिन्नेव क्षणे त्वां हन्मीति भावः । मुञ्च मुञ्च मामिति शेषः ।

(रौ) व्यामोहः विशेषेण आसमन्तान्मोहः भ्रमः सर्वथा कर्तव्यविस्मरणमितियावत्।

(रं) अन्यत् एव प्रस्तुतं आरब्धम् । प्रपूर्वकः स्तौतिरारम्भार्थः । अन्यत्र प्रस्तुतभिन्नविषये आवेगः त्वरा । ' आवेगस्तु त्वरिस्तूर्णिः संवेगः संभ्रमस्त्वरा । ' इति हैमः । व्यामोहः कर्तव्यविस्मृतिरूपो भ्रम इत्यर्थः । अस्य राजकुलस्य कुरुराजवंशस्य स्वबलव्यसनं आत्मीयसैन्यविपत्तिः युष्मत्तः युवयोः सकाशात् भवति उत्पद्यत इत्येषः पन्था भवतामाचरणमार्गः वामो विरुद्धः। विरुद्धत्वादेव च न युक्तः समाश्रयितुमिति भावः । युवामेवेदानीं समरकर्मनिर्वहणे क्षमौ तौ चेदन्योन्यं प्रहृत्य नश्यतस्तर्हि समापतितैव विपद्राज्ञः स्वबले । सा चेयमस्मिन्नवसरे न युक्तेति त्यज्यतां विप्रतीपोऽयं मार्ग इत्याशयः । 'वामं सव्ये प्रतीपे च' इति विश्वः ।

(रः) कटुप्रलापिनः कटु तीक्ष्णं प्रलपितुं शीलं यस्य तथाभूतस्य । 'कटुः सुगन्धे तीक्ष्णे स्यात् । ' इति विश्वः। रथकारकुलकलङ्कस्य सारथिवंशे कलङ्कायमानस्य अस्य कर्णस्य दर्पः शातयितुं छेत्तुं निर्मूलयितुमित्यर्थः। अत्र णिजन्तस्य शदेश्छेदनार्थकत्वात् 'शदेरगतो तः ' इति तः । शादयितुमिति पाठस्तु न समीचीनः शदेर्गत्यर्थत्वापत्तेः । तस्य च प्रकृतेऽनुपयोगादिति । तत्संप्रति लब्धावसरः शातयामि दर्पमेतस्येति भावः । यद्वाऽत्र प्रश्ने काकुः । न लभ्यते वर्तमाने समये न प्राप्यते किमित्यर्थः ।

**अश्वत्थामा**—मातुल! यद्येवम्—

अयं पापो यावन्न निधनमुपेयादरिशरैः
परित्यक्तं तावत्प्रियमपि मयास्त्रं रणमुखे।
बलानां नाथेऽस्मिन्परिकुपितभीमार्जुनभये
समुत्पन्ने राजा प्रियसखबलं वेत्तु समरे॥ ४९॥

(इति खड्गमुत्सृजति।) (ला)

**कर्णः**—(विहस्य।) कुलक्रमागतमेवैतद्भवादृशां यदस्त्रपरित्यागो नाम। (लि)

**अश्वत्थामा**—ननु रे! अपरित्यक्तमपि भवादृशैरायुधं चिरपरित्यक्तमेव निष्फलत्वात्। (ली)

---

(ल) स्वबलप्रधानविरोधस्य स्वबले स्वीयसैन्ये यः प्रधानो मुख्यस्तेन विरोधो वैरं तस्य। 'वैरं विरोधो विद्वेषः।' इत्यमरः। अकालः कालो नास्तीत्यर्थः। तन्नेदानीं दर्पशातने प्रवर्तितव्यमिति भावः।

(४५) अयमिति। यावत् अयं पापो दुष्टः कर्णः आरिशरैः शत्रूणां बाणैः निधनं मरणं न उपेयात् प्राप्नुयात् तावत् मया रणमुखे संग्रामाग्रप्रदेशे तत्रैव युद्धस्य तुमुलत्वात्, प्रियमपि अस्त्रं परित्यक्तम्। यावन्नायं म्रियते तावन्नाहं संग्रामेऽग्रतो भूत्वा प्रियमपि शस्त्रं ग्रहीष्यामीत्यर्थः। अस्मिन्कर्णे बलानां नाथे सेनापतौ सति परिकुपिताभ्यां अतिशयेन क्रुद्धाभ्यां भीमार्जुनाभ्यां भीमादर्जुनाच्च यद्भयं तस्मिन् समुत्पन्ने सति राजा दुर्योधनः समरे संग्रामे प्रियसखबलं प्रियस्य सख्युः कर्णस्य सामर्थ्यम्। राजाहःसखिभ्य इति टच्। वेत्तु जानातु। तदा किल जानीयाद्दुर्योधनो निर्बलत्वमेतस्येति भावः। अत्र प्रियसखममुमित्यपि क्वचित्पाठः। तत्रामुमिति सत्यन्तात्पुनः प्रयुक्तं न शोभामावहतीति द्रष्टव्यम्। तत्स्वीकारे तु वेत्तु बलाबलविशिष्टतया जानात्वित्यर्थः। शिखरिणी वृत्तम्।

(ला) उत्सृजति त्यजति।

(लि) विहस्य अश्वत्थाम्नः कृतावनादरप्रदर्शनार्थं हसित्वा। यत् अस्त्रपरित्यागो नाम तदेतत् भवादृशानां त्वत्सदृशानां कुलक्रमागतं कुलक्रमेण वंशपरम्परया प्राप्तमेव कर्म। तव पित्राप्येवं परित्यक्तत्वादिति भावः।

(ली) ननु रे इति कोपेनामन्त्रणे। चिरपरित्यक्तं चिरं परित्यक्तसदृशमित्यर्थः। परित्यक्तसादृश्ये हेतुर्निष्फलत्वादिति।

**कर्णः**—अरे मूढ !

धृतायुधो यावदहं तावदन्यैः किमायुधैः ? ।
यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ? ॥ ४६ ॥

(नेपथ्ये ।)

आः दुरात्मन् ! द्रौपदीकेशाम्बराकर्षणमहापातकिन् ! धार्तराष्ट्रापसद ! चिरस्य खलु कालस्य मत्संमुखीनमागतोऽसि । क्षुद्र पशो ! क्वेदानीं गम्यते ? । अपि च । भो भो राधेयदुर्योधनसौबलप्रभृतयः पाण्डवविद्वेषिणश्चापपाणयो मानधनाः ! शृण्वन्तु भवन्तः । (लु)

---

(४६) धृतायुध इति । यावत् यत्कालपर्यन्तं अहं धृतायुधः गृहीतशस्त्रः अस्मि तावत् तत्कालपर्यन्तं अन्यैः इतरैः आयुधैः आयुधानि सन्ति येषां तैः गृहीतायुधैः पुरुषैरित्यर्थः किम् । मयैव कार्यानुष्ठानाद्विफलैवापरेषां सशस्त्रतेति भावः । आयुधैरित्यर्शआदित्वादच् । अत्रात्मनश्चात्मनोऽस्त्रस्य च सर्वोत्तरत्वप्रतिपादनात्प्रथमार्धे चात्मनः सर्वोत्तरत्वप्रतिपादनपर एवंविध एवार्थो युक्तः । अन्यथा तु उत्तरार्धे पुनरप्यस्त्रस्य सर्वोत्तरत्ववचनं पौनरुक्त्यमावक्ष्यतीति द्रष्टव्यम् । वा इति किं चेत्यर्थे । यन्मम अस्त्रेण करणभूतेन न सिद्धं न संपन्नं तत् कार्यं केन करणभूतेनास्त्रेण सेत्स्यति संपत्स्यते । सिध्यतेर्लृट् । अहं च सर्वोत्तरो मदीयमस्त्रं च सर्वोत्तरमिति भावः । पथ्यावक्त्रं वृत्तम् ।

(लु) नेपथ्ये भीमो वदतीति बोध्यम् । दुःशासनमुद्दिश्योक्तिरियम् । दुरात्मन् दुष्टहृदय । द्रौपदीकेशाम्बराकर्षणमहापातकिन् द्रौपद्याः केशानामम्बरस्य परिधानीयवस्त्रस्य च कर्षणमेव महापातकं तदस्यास्ति तथाभूत । धार्तराष्ट्रापसद धृतराष्ट्रपुत्रेष्वधम । चिरस्येत्यव्ययम् । कालस्य सतः । बहुना कालेनेत्यर्थः । मत्संमुखीनं मम संमुखीनं अभिमुखं यथा तथा आगतोऽसि प्राप्तोऽसि । चिरेण मे गोचरे पतितोऽसीति भावः । क्षुद्र लघो ! एतेन सुखसाध्यत्वमस्य वधस्य द्योत्यते । पशो पशुतुल्य । एतच्च कर्तव्याकर्तव्यविवेकशून्यतां वध्यतां चाभिव्यञ्जयति । इदानीं मत्सन्निधानावसर इत्यर्थः । क्व गम्यते न क्वापि गन्तुं शक्यं अहं हि त्वां यत्र कुत्रापि विद्यमानं व्यापादयिष्यामीति भावः । भो भो इति । राधेयः राधायाः पुत्रः कर्णः । स्त्रीभ्यो ढक् इति ढक् । दुर्योधनः, सौबलः सुबलाया नाम स्त्रियाः पुत्रः शकुनिः । अनृष्यानन्तर्ये... नदीमानुषीभ्यस्तन्नामिकाभ्य इत्यणम् । एते प्रभृतयो यत्र ते । पाण्डवविद्वेषिणः पाण्डवद्वेषशीलाः । चापपाणयः चापो धनुः पाणौ येषां ते धनुर्धराः । शृण्वन्तु वक्ष्यमाणं वचनमित्यर्थात् ।

क्रुष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवा-
न्सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवः ॥ ४७ ॥

( सर्वे आकर्णयन्ति । )

**अश्वत्थामा**—( सोत्प्रासम् ) अङ्गराज! सेनापते! जामदग्न्यशिष्य! द्रोणोपहासिन्! भुजबलपरिरक्षितसकललोक! ( धृतायुधः (३।४६) इति पठित्वा । ) इदं तदासन्नतरमेव संवृत्तम् । रक्षैनं सांप्रतं भीमाद्दुःशासनम् । (ऌ)

---

(४७) श्रोतव्यमाह । नृपशुना ना मनुजश्चासौ पशुश्च तेन आकृत्या नरेणापि आचारे पशुतुल्येनेत्यर्थः । येन दुःशासनेन । पाञ्चालराजात्मजा पाञ्चालानां देशविशेषाणां राज्ञो द्रुपदस्यात्मजा पुत्री द्रौपदी शिरोरुहे केशेषु । जातावेकवचनम् । गृहीत्वेति शेषः । क्रुष्टा आकृष्टा । येन राज्ञां गुरूणां पित्रादीनां च पुरः अग्रतः अस्या द्रौपद्याः परिधानम- धोवस्त्रं अपीत्यपराधातिशयो व्यज्यते । अपहृतं आच्छिद्य गृहीतमित्यर्थः । 'गुरू गीष्प- तिपित्राद्यौ' इति 'परिधानान्यधोंशुके' इति चामरः । यस्य उरःस्थलशोणितासव हृदयप्रदेश- संबन्धि रक्तरूपं मद्यं पातुं अहं प्रतिज्ञातवान् प्रतिज्ञां कृतवान् । सः अत्र पुरोवर्तमानः मद्भुज- पञ्जरे मम भुजावेव पञ्जरं निरोधगृह (पञ्जयते निरुध्यतेऽत्र पक्ष्यादिरिति पञ्जरं, पजि निरोधे अरन् ) निपतितः केनाप्यप्रवर्त्यमानः स्वयमेव पतित इत्यर्थः । कौरवः कुरुकुलोत्पन्नो दुःशा- सनः संरक्ष्यतां भवद्भिरिति शेषः । अत्र क्रुष्टेत्यत्र स्पृष्टेति पाठो नातिचमत्कारीति नादृतः । शिरोरुहे नृपशुनेत्यत्र च शिरोरुहेषु पशुनेति क्वचित् । सुगमोऽयं पाठः सरसश्च । अस्म- दुद्धृत एव तु पाठो बहुपुस्तकसंवादी । गुरूणामित्यत्र च कुरूणामिति पाठः । स च परि- त्याज्यस्तदा बहूनां कुरुराजानामभावात् । पञ्जर इत्यत्र च गोचर इति पाठः।तत्र मद्भुजाभ्यां ग्रहीतुं शक्ये प्रदेश इत्यर्थः । एतदपेक्षया च पञ्जरपदमेवात्र शोभामावहति । निरोधस्य तद्- द्वारा च प्रतिगन्तुमशक्यत्वस्य गम्यमानत्वादिति।कौरव इत्यत्र च कौरवा इति क्वापि । तदपि त्याज्यम् । आमन्त्रणस्य प्रागेव विहितत्वात् । शार्दूलविक्रीडितं वृत्तम् ।

(ऌ) सोत्प्रासं सोपहासं 'स्मृताः सोल्लुण्ठनोत्प्रासशोपहासाः समाश्रयः ।' इति हलायुधः । अङ्गराज अङ्गानामेतन्नामकदेशविशेषाणां राजन् । अङ्गदेशपालयितः । सेनापते कौरवसैन्यनायक । जामदग्न्यशिष्य परशुरामशिष्य । द्रोणोपहासिन् द्रोणमुपहसितुं शीलं यस्य

**कर्णः**—आः, का शक्तिर्वृकोदरस्य मयि जीवति दुःशासनस्य च्छायामप्याक्रमितुम्? । युवराज! न भेतव्यं न भेतव्यम्। अयमहमागतोऽस्मि। ( इति निष्क्रान्तः ) (ले)

**अश्वत्थामा**—राजन्कौरवनाथ! अभीष्मद्रोणं संप्रति कौरवबलमालोडयन्तौ भीमार्जुनौ राधेयेनैवंविधेनान्येन वा न शक्येते निवारयितुम् । अतः स्वयमेव भ्रातुः प्रतीकारपरो भव । (लै)

**दुर्योधनः**—आः का शक्तिर्दुरात्मनः पवनतनयस्यान्यस्य वा मयि जीवति शस्त्रपाणौ वत्सस्य च्छायामप्याक्रमितुम्? । वत्स! न भेतव्यं न भेतव्यम् । कः कोऽत्र भोः । रथमुपनय । ( इति निष्क्रान्तः । ) (लो)

---

तथाभूत। भुजबलपरिरक्षितसकललोक आत्मनो भुजबलेन बाह्वोः सामर्थ्येन परिरक्षिताः सर्वे लोका येन तथाभूत । तत् यदुक्तं भवता धृतायुधो यावदहमित्यादि तत् । तवायुधसामर्थ्यपरीक्षणावसर इत्यर्थः ।इदं आसन्नतरमेव अत्यन्तं समीपमुपगतमेव संवृत्तं जातम्। अत्यन्तं सन्निहित इदानीं तवायुधसामर्थ्यपरीक्षणावसर इत्यर्थः । सांप्रतमिदानीं भीमात् दुःशासनं रक्ष त्रायस्व । भीत्रार्थानां भयहेतुरिति भीमशब्दात्पञ्चमी । अत्र चाङ्गराजादीनि पदानि वृथैवायं ते दर्प इत्यभिप्रायेणोपहासतया प्रयुक्तानीति साभिप्रायत्वादेषां विशेषणानां परिकरालङ्कारः 'उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः ।' इति दर्पणोक्तेः ।

(ले) आः इति क्रोधे। मयि जीवति सति दुःशासनस्य च्छायामपि आक्रमितुमुपरिगमनेन व्याप्तुं वृकोदरस्य भीमस्य का शक्तिः? छायाया अपि उपरिगमने नास्ति शक्तिरेतस्य कुतः पुनः साक्षाद्दुःशासनव्यापादने? अहं हि यावज्जीवं दुःशासनं परित्रास्य इति भावः । युवराज दुःशासन। अयमेतदवस्थ एवाहमागतोऽस्मि भवत्परित्राणार्थमित्यर्थात् । अहीनकालमिदानीमेवेत्येतद्वक्तव्ये वाक्यस्यारम्भत इदमियमयमेष इत्यादीनि विशेषणान्येव वा प्रयुज्यन्ते। ततश्च वर्तमान एव क्षणे न तु कालान्तर इति गम्यते ।

(लै) अभीष्मद्रोणं भीष्मद्रोणाभ्यां रहितमिति सैन्यस्यालोडने प्रतिबन्धकाभावं सूचयति । भीष्मद्रोणावेव हि पाण्डवानां बलवत्तरत्वात् प्रतिबन्धकाविति । आलोडयन्तौ मथ्नन्तौ मथनसदृशं क्लेशातिशयमनुप्रापयन्तावित्यर्थः । राधेयेन राधायाः पुत्रेण कर्णेनेति नैर्बल्यमभिव्यञ्जयति । एवंविधेन कर्णसदृशेन । प्रतीकारपरः विपन्निवारणनिष्ठः ।

( नेपथ्ये कलकलः । ) (लौ)

**अश्वत्थामा**—( अग्रतो विलोक्य । ) मातुल ! कष्टं कष्टम् । एष भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं दुर्योधनराधेयौ शरवर्षैरभिद्रवति । सर्वथा पीतं दुःशासनशोणितं भीमेन । न खलु विषहे दुर्योधनानुजस्यैनां विपत्तिमवलोकयितुम् । अनृतमनुमतं नाम । मातुल ! शस्त्रं शस्त्रम् । (लं)

सत्यादप्यनृतं श्रेयो धिक्स्वर्गं नरकोऽस्तु मे ।
भीमाद्दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम् ॥ ४८ ॥

---

(लो) शस्त्रपाणौ शस्त्रं पाणौ हस्ते यस्य तथाभूते । अहं हि यावज्जीवं शस्त्रेण प्रतिकरिष्यामीति गम्यते । वत्सस्य अनुजस्य दुःशासनस्य । 'वत्सपुत्रकतातेति नाम्ना गोत्रेण वा सुतः । शिष्योऽनुजश्च वक्तव्य' इत्युक्तेः । पवनतनयस्य वायुपुत्रस्य भीमस्य । उपनय आनय । अत्र का शक्तिरित्यत्र शक्तिरस्तीत्यपि पाठः । स च नीरसत्वादुपेक्ष्यः ।

(लौ) कलकलः दुःशासनाक्रमणदर्शनजन्यः कर्णदुर्योधनयोरुपर्यर्जुनेन क्रियमाणेन शरवर्षेण भीतत्वाद्वा सेनायाः समुत्पन्नः ।

(लं) अग्रतः विलोक्येत्यत्र ससंभ्रममित्यपि क्वचित्पाठः । तत्र ससंभ्रमं सत्वरम्। द्वितयमप्यत्रावश्यकमिति प्रतिभाति । कलकलश्रवणेनाग्रतोऽवलोकनं ततश्च कर्णदुर्योधनयोरर्जुनशरैरभिव्याप्तत्वमवेक्ष्य दुःशासनस्य निधनं निश्चिन्वतः संभ्रम इति । मातुल कृप । एषः पुरो दृश्यमानः भ्रातुर्भीमस्य प्रतिज्ञाभङ्गभीरुः दुःशासनरुधिरपानरूपायाः प्रतिज्ञाया भङ्गात् कर्णदुर्योधनयोरुपस्थितत्वे संभाव्यमानात् भीरुः बिभ्यदित्यर्थः । किरीटी अर्जुनः कर्ता । दुर्योधनराधेयौ दुर्योधनकर्णौ । राधेयशब्दस्याल्पाच्तरत्वेऽपि दुर्योधनस्याभ्यर्हितत्वात् 'अभ्यर्हितं च' ति पूर्वं निपातः । समं युगपत् । शरवर्षैः शरवृष्टिभिः उपलक्षणे तृतीया । अभिद्रवति वेगेनाभिगच्छति । युगपदेव दुर्योधने कर्णे च शरान्वर्षन्ननयोर्वेगेनाभिमुखं गच्छतीत्यर्थः । सर्वथा सर्वप्रकारैः । दुःशासनरक्षण उपायान्तरस्याभावादिति भावः। पीतं निश्चयेन पास्यत इत्यर्थः । दुर्योधनानुजस्य दुर्योधनस्य कनिष्ठभ्रातुः । एतच्च सहनाभावे हेतुमभिद्योतयति । विपत्तिं मरणरूपां विपदम् । अनृतं असत्यं यावत्कर्णो जीवति तावत्परित्यक्तं मया शस्त्रमिति प्रतिज्ञातत्त्वात्संप्रति तद्भङ्गेनासत्यमपि अनुमतं नाम । नामेत्यभ्युपगमे अनुमतं ममासत्यमिति स्वीकारोमीत्यर्थः । शस्त्रं शस्त्रमिति संभ्रमे द्विर्वचनम् । उपनीयतामिति शेषः ।

(इति खड्गं ग्रहीतुमिच्छति ।)

( नेपथ्ये )

महात्मन् ! भारद्वाजसूनो ! न खलु सत्यवचनमुल्लङ्घयितुमर्हसि । ( लः )

**कृपः**—वत्स ! अशरीरिणी भारती भवन्तमनृतादभिरक्षति । ( व )

**अश्वत्थामा**—कथमियममानुषी वाङ्नानुमनुते सङ्ग्रामावतरणं मम ? । आः पक्षपातिनो देवा अपि पाण्डवानाम् । सर्वथा पीतं दुःशासनशोणितं भीमेन । भोः, कष्टं कष्टम् । ( वा )

दुःशासनस्य रुधिरे पीयमानेऽप्युदासितम् ।
दुर्योधनस्य कर्तास्मि किमन्यत्प्रियमाहवे ॥ ४९ ॥

---

(४८) सत्यादिति । सत्यात् अपि अनृतं असत्यं श्रेयः इदानीं श्रेष्ठम् । स्वर्गं सत्यपरिपालनजन्यं धिक् । धिग्योगे द्वितीया । मे मत्यं नरकः असत्यवचनरूपपापाचरणजन्यः अस्तु । ततो न क्षतिरिति भावः । त्यक्तमपि मयेति शेषः । आयुधं शस्त्रं कर्मभूतं भीमात् दुःशासनं त्रातुं रक्षितुं दुःशासनरक्षणकर्मणीत्यर्थः । न त्यक्तम् । अविगणय्यापि प्रतिज्ञाभङ्गं गृहीत्वा शस्त्रं भीमाद्दुःशासनं परित्रास्य इति भावः । पथ्यावक्त्रं वृत्तम् ।

(लः) महात्मन्निति महान् पूज्य आत्मा यस्य तथाभूतेति सत्यवचनानुल्लङ्घने हेतुमभिद्योतयति । महात्मानो हि नैव सत्यमुल्लङ्घयन्तीति । भारद्वाजसूनो द्रोणपुत्र । भारद्वाजेति ऋषिनाम्नोल्लेखश्च कुलस्यापि ते न युक्तं सत्योल्लङ्घनमिति द्योतयति ।

(व) अशरीरिणी शरीरसंबन्धशून्या आकाशोद्भूता दैवी वागित्यर्थः ।

(वा) कथमिति विस्मये । । अमानुषी दैवी । संग्रामावतरणं संग्रामे प्रवेशं नानुमनुते नानुमोदते ? । आः इति संतापे । 'कोपसंतापयोरपि' इत्याःशब्दार्थेषु मेदिनी । आः पक्षपातिन इत्यत्र सर्वथा पाण्डवपक्षपातिनो देवा इत्यपि क्वचित्पाठः। स च नैवं चारुतामावहतीत्युपेक्षितः ।

(४९) दुःशासनस्येति । भीमेनेति मयेति चाध्याह्रियते । भीमेन कर्त्रा दुःशासनस्य रुधिरे रक्ते पीयमाने सत्यपि मया उदासितं तटस्थतया स्थितम् । तस्मात् आहवे युद्धे दुर्योधनस्य अन्यत् किं प्रियं कर्तास्मि करिष्यामि । करोतेर्भविष्यति लुट् । अवश्यमनुष्ठेयमपि चेत्प्रियं नानुष्ठितं तदाऽन्यत्प्रियं करिष्यामीति सुदूरापेतमिदमिति धिङ्मां कृतघ्नमिति भावः । पथ्यावक्त्रं वृत्तम् ।

मातुल! राधेयक्रोधवशादनार्यमस्माभिराचरितम्। अतस्त्वमपि तावदस्य राज्ञः पार्श्ववर्ती भव। (वि)

**कृपः**—गच्छाम्यहमत्र प्रतिविधातुम्। भवानपि शिबिरसंनिवेशमेव प्रतिष्ठताम्। (वी)

(परिक्रम्य निष्क्रान्तौ।)

## इति तृतीयोऽङ्कः। (वु)

---

(वि) राधेयक्रोधवशात् कर्णविषयकक्रोधाधीनत्वात् अस्माभिः 'अस्मदो द्वयोश्चे' ति बहुवचनं मयेत्यर्थः। अनार्यं असाधु कर्म शस्त्रपरित्यागप्रतिज्ञारूपं आचरितम्। तावत्सत्वरम्। त्वमपि यद्यपि नाहं प्रभवामि तथापि त्वं वेत्यर्थः। राज्ञः दुर्योधनस्य पार्श्ववर्ती पार्श्वे समीपे वर्तते तथाभूतः। साहाय्याधानार्थं समीपस्थ इत्यर्थः भव।

(वी) अत्र दुःशासनवधे प्रतिविधातुं प्रतीकारं कर्तुं गच्छामि। शिबिरसंनिवेशं सेनानिवेशस्थानम्। प्रतिष्ठतां प्रयातु। 'समवप्रविभ्यः स्थ' इत्यात्मनेपदम्।

(वु) अयमङ्कोऽश्वत्थामाङ्क इत्युच्यते साहित्यदर्पणकारादिभिः।

अस्य चाङ्कस्यान्तेऽश्वत्थामवचनेन दुर्योधनस्यार्जुनबाणवर्षगोचरत्वं भीमकृतं च दुःशासनरुधिरपानं संसूचितम्। तत एव चातः परमविभक्त इव चतुर्थोऽङ्कोऽवतरति। तदेतदङ्कावतारसंज्ञमर्थोपक्षेपकम्। यदाह विश्वनाथकविराजः 'अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः। यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः॥' इति। अत एव च चतुर्थाङ्कस्यादौ भूतभाव्यर्थसूचको विष्कम्भकः प्रवेशकोऽपि वा नोपनिबद्धः कविनेति शिवम्।

**इति श्रीमत्पण्डितराजवंशावतंसवैयाकरणशेखरश्रीकान्ताचार्यसूरिणां छात्रेण श्रीमत्सदाशिवबुधेन्द्रतनुजन्मना राशिवडेकरोपाह्वेन श्रीअप्पाशर्मविद्यावाचस्पतिविद्यालङ्कारमहोपदेशकेन प्रणीतायां बालबोधिन्याख्यायां वेणीसंहारव्याख्यायां तृतीयोऽङ्कः। श्रीसदाशिवार्पणमस्तु॥**

---

# वेणीसंहारे

## चतुर्थोऽङ्कः ।

( ततः प्रविशति प्रहारमूर्छितं रथस्थं दुर्योधनमपहरन्सूतः । )

( सूतः ससंभ्रमं परिक्रामति । ) (बू)

( नेपथ्ये । ) (वे)

भो भो ! बाहुबलावलेपप्रवर्तितमहासमरदोहदाः कौरवपक्षपातपणीकृतप्राणद्रविणसंचया नरपतयः! संस्तभ्यन्तां निहतदुःशासनपीतावशेषशोणितस्नपितबीभत्सवेषवृकोदरदर्शनभयपरिस्खलत्प्रहरणानि रणात्प्रद्रवन्ति बलानि । (वै)

---

## श्रीशिवः शरणम् ।

### बालबोधिन्याख्यायां वेणीसंहारव्याख्यायां

### चतुर्थोऽङ्कः ।

(बू) अर्थोपक्षेपकस्याङ्कावतारसंज्ञकस्य तृतीयाङ्कावसान एव विहितत्वाद्विनैवार्थोपक्षेपकं चतुर्थाङ्कार्थमुपक्षिपाति । तत इति । ततस्तृतीयाङ्कसमाप्त्यनन्तरम् । प्रहारमूर्छितं शत्रुकृतेन शस्त्राघातेन मोहं प्राप्तं रथस्थं दुर्योधनं अपहरन् संग्रामादपवाहयन् सूतो दुर्योधनसारथिः प्रविशति ।

(वे) नेपथ्ये कृपो वदतीति शेषः ।

(वै) भो भो इति । बाहुबलावलेपप्रवर्तितमहासमरदोहदाः बाह्वोः बलस्य संबन्धिनोऽवलेपेन अहंकारेण प्रवर्तितः महासमरो महद्युद्धमेव दोहदं मनोरथो मनोरथविषयीभूतोऽर्थ इति यावत् यैस्तथाभूताः । 'अथ दोहदम् । इच्छा कांक्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः ।' इत्यमरः । एतेन यद्यवसरेऽस्मिन्संग्रामादपगम्येत तदा वृथैव युष्माकं बाहुबलावलेप इति धिग्युष्मान्विकत्थनानिति गम्यते।कौरवपक्षपातपणीकृतप्राणद्रविणसंचयाः कौरवेषु पक्षपातेन पणीकृतः युद्धरूपद्यूते पराजये सति जेत्रे प्रदेयतया न्यस्तः प्रागरूपो

**सूतः**—(विलोक्य ।) कथम् ! एष धवलचपलचामरचुम्बितकनककमण्डलुना शिखरावबद्धवैजयन्तीसूचितेन हतगजवाजिनरकलेवरसहस्रसंमर्दविषमोद्घातकृत-कलकलकिङ्किणीजालमालिना रथेन शरवर्षस्तम्भितपरचक्रपराक्रमप्रसरः प्रद्रुत-मात्मबलमाश्वासयन्कृपः किरीटिनाभियुक्तमङ्गराजमनुसरति । हन्त ! जातमस्म-द्बलानामवलम्बनम् । (वो)

---

द्रविणसंचयो द्रव्यसंग्रहो यैस्तथाभूताः । आत्मनः प्राणानप्यविगणय्य युद्धे प्रवर्तमाना इत्यर्थः । एतेन प्राणापगमप्रसङ्गेऽपि न युक्तं पलायनमिति द्योत्यते । 'पणो द्यूतादिषू-त्सृष्टे' इत्यमरः । अत एव च समरे द्यूतत्वारोपो गम्यते । नरपतयो राजानः । एतेन बलानां स्थिरीकरणे सामर्थ्यमभिव्यज्यते । **निहतेति** । निहतो मारितो यो दुःशासनस्तस्ये-ति शोणितेन संबन्धः । पीतावशेषः पीतादवावशिष्टभूतं पानोत्तरमवशिष्टमित्यर्थः यच्छोणितं रक्तं तेन कर्तृभूतेन करणभूतेन वा स्नपितः स्नानं प्रापितः कृतस्नानवदवभासमान इत्यर्थः। तत एव च बीभत्सो जुगुप्साजनको वेषो यस्य तस्य वृकोदरस्य भीमस्य दर्शनाद्यद्भयं तेन हेतुभूतेन परिस्खलन्ति हस्ताद्विगलन्ति प्रहरणानि आयुधानि येषां तथाभूतानि । स्नपित इति ष्णा शौच इत्यतो णिचि ग्लास्नावनुवमां चेति वैकल्पिके मित्त्वे मितां ह्रस्व इत्युपाधाया ह्रस्वः । ततः क्तः । रणात्संग्रामात् प्रद्रवन्ति पलायमानानि बलानि सैन्यानि संस्तभ्यन्तां स्थिरीक्रि-यन्ताम् । युष्माभिरिति शेषः ।

(वो) विलोक्येति । कोऽयं ब्रवीतीति विज्ञातुं विलोकनम् । कथमिति हर्षे 'कथं हर्षे च गर्हायाम्' इति मेदिनी । विषमतमेऽस्मिन्समये कृपस्योपगमनाद्धर्षः । शराणां वर्षेण वृष्ट्या संस्तम्भितः प्रतिबद्धः परचक्रस्य शत्रुसैन्यस्य पराक्रमप्रसरो विक्रमप्रसरणं येन तथाभूतः 'अभिघातिपरारातिं' इति शत्रुपर्यायेष्वमरः । 'अनीकं कटकं सैन्यं चक्रम् ।' इति शारदानाममाला । एषः पुरोदृश्यमानः कृपः कर्ता प्रद्रुतं पलायितमात्मबलं निजसैन्यमा-श्वासयन् धैर्येण योजयन् **धवलेन** श्वेतेन चपलेन चञ्चलेन च चामरेण चमरमृगकेशजन्मना व्यजनेन चवरीति महाराष्ट्र्यां ख्यातेन चुम्बिता अग्रभागेन अतिशयेन संश्लिष्टाः कनकस्य सुवर्णस्य कमण्डलवो यत्र तथाभूतेन । चुबि वक्त्रसंयोगे । वक्त्रं च मुखं तच्च चामरादिष्वग्र-मेव । कमण्डलवः पुनः कलशवत्प्रतिष्ठाप्यन्ते स्म स्यन्दने प्राचीनैरिति प्रवादः। अत्र चपलपदाच्चारुपदं क्वचिदधिकं क्वचित्पुनः पाठे चपलपदं नास्त्येव । शिखरे (रथस्य) शिरसि अवबद्धया वैजयन्त्या पताकया संसूचितो ज्ञापितस्तेन । 'वैजयन्ती पुनः केतुः

(नेपथ्ये कलकलानन्तरम् ।) (वौ)

भो भो अस्मद्दर्शनभयस्खलितकार्मुककृपाणतोमरशक्तयः कौरवचमूभटाः! पाण्डवपक्षपातिनश्च योधाः! न भेतव्यं न भेतव्यम्। अयमहं निहतदुःशासनपीवरोरःस्थलक्षतजासवपानमदोद्धतो रभसगामी स्तोकावशिष्टप्रतिज्ञामहोत्सवः कौरवराजस्य द्यूतनिर्जितो दासः पार्थमध्यमो भीमसेनः सर्वान्भवतः साक्षीकरोमि । श्रूयताम् । (वं)

---

पताके'ति हेमचन्द्रः । **हतानां** गजानां वाजिनां नराणां च यानि कलेवरसहस्राणि देहसहस्राणि असंख्याता देहा इत्यर्थः तेषां यः संमर्दः नीरन्ध्रतयावास्थितत्वात्परस्परं संश्लेषः तेन विषमेषु निम्नोन्नतत्वमापन्नेषु प्रदेशेषु य उद्घातः स्खलनं तेन कृतः कलकलो याभिस्तासां किङ्किणीनां क्षुद्रघण्टिकानां जालेन मालते शोभतेऽसौ तेन । 'अथ कलेवरम् । गात्रं वपुः संहननम्' इत्यमरः । 'उद्घातस्तु पुमान् पादस्खलने समुपक्रमे' इति मेदिनी । पादस्खलनवाच्यपि सोऽयं यानस्खलने रूढः । 'किङ्किणी क्षुद्रघण्टिका' इत्यमरः । रथेन करणभूतेन अनुसरतीति क्रियया संवन्धः । किरीटिना अर्जुनेन कर्त्राऽभियुक्तं रुद्धम् । 'अभियुक्तः परै रुद्धे' इति मेदिनी । अङ्गराजं अङ्गानां देशविशेषस्य राजानं कर्णम् । राजाहः सखिभ्य इति टच् । अनुसरति अनुगच्छति । अनुसरणेन कर्णस्य साहाय्यं संपादयतीत्यर्थः। हन्तेति हर्षे । अस्मद्बलानामस्माकं सैन्यानां अवलम्बनं जातम् । संप्रति कृपमालम्ब्य पराक्रमेरन्नस्मदीयानि बलानीति भावः।

(वौ) कलकलानन्तरं भीमो वदतीति शेषः ।

(वं) भो भो इति । अस्माकं दर्शनाद्यद्भयं तेन स्खलिताः कार्मुकानि धनूंषि, कृपाणाः खड्गाः, तोमराः सर्वलापरपर्याया मन्थदण्डाकृतयो गुरगूंज इति महाराष्ट्र्यां ख्याता आयुधविशेषाः, शक्तयः कासूसंज्ञाः 'सैती'ति महाराष्ट्रभाषायां ख्याता आयुधविशेषाश्च येषां तथाभूताः । 'सर्वला तोमरोऽस्त्रियाम् ।' इति 'कासूसामर्थ्ययोः शक्तिः ।' इति चामरः । (कासूः शक्त्यायुधेऽपि चेति विश्वः) ।कौरवचमूभटाः कौरवसेनासम्बधिनो योधाः। च किं च । पाण्डवपक्षपातिनः पाण्डवपक्षाभिनिवेशिनो योधाः ! न भेतव्य युष्माभिरिति शेषः । अयं भवतां पुरो विद्यमानः । निहतस्य मया हिंसितस्य दुःशासनस्य नाम दुर्योधनानुजस्य यत् पीवरं स्थूलं उरःस्थलं वक्षःप्रदेशः तस्य संबन्धि क्षतजमेव आसवो मद्यविशेषस्तस्य पानेन यो मदः संमोहसंमोदयोर्मिश्रीभावलक्षणश्चेतसोऽवस्थाविशेषः तेन

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च ।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः ॥ १॥

---

उद्धतः अविनीतः । 'पीनपीन्नी तु स्थूलपीवरे' इति 'रक्तक्षतजशोणितम्' इति चामरः 'संमोहानन्दसंभेदो मदो मद्योपयोगजः ।' इति दर्पणम् । रभसगामी रभसेन वेगेन गच्छति तथाभूतः । 'रभसो हर्षवेगयोः' इति मेदिनी । स्तोकावशिष्टप्रतिज्ञामहोत्सवः स्तोकं ईषत् अवशिष्टः प्रतिज्ञामहोत्सवो यस्य तथाभूतः अतः परं केवलं दुर्योधनस्यैव हननीयत्वेन प्रतिज्ञायाः स्तोकावशिष्टत्वम् । कौरवराजस्य दुर्योधनस्य द्यूतनिर्जितो द्यूते निर्जितो दास इति सोल्लुण्ठनोक्तिः । पार्थमध्यमः पार्थेषु कुन्तीपुत्रेषु मध्यमः । भीमसेनः अहं कर्ता सर्वान् भवतः साक्षीकरोमि साक्षाद्द्रष्टॄन् करोमि वक्ष्यमाणेऽर्थे इतिभावः। अत्र पाण्डवमध्यम इति पाठो न समीचीनः । भीमसेनस्य पाण्डवेषु मध्यमत्वाभावात् । एष हि पाण्डवेषु द्वितीय इति । कुन्त्याः पुनर्धर्मभीमार्जुनाः पुत्रास्तत्र च भीमो मध्यम इति पार्थमध्यम इत्येव पाठो युक्तः । साक्षीकरोमीत्यत्र साक्षिणः करोमीत्यपि पाठः। स एव च चारुतरः । साक्षीकरोमत्यित्र हि च्विः । ततश्च असाक्षिणः साक्षिणः सम्पादयामीत्यर्थः संपद्यते । न पुनरमी असाक्षिणः साक्षादेव हि संदृष्टं भीमकृतं दुःशासनरुधिरपानममीभिः । तत एव च भीत्या विद्रुता एत इति । साक्षिणः करोमीत्यत्र साक्षित्वेऽवस्थापयामीत्यर्थः । तेन नैतेष्वसाक्षाद्द्रष्टृत्वमावश्यकमिति द्रष्टव्यम् । श्रूयतामिति । यत्र साक्षिणः करणीया यूयं सोऽयमर्थो युष्माभिः श्रूयतामित्यर्थः ।

(१) यत्रार्थे साक्षिणः करणीयास्तमाह । राज्ञ इति। अद्य मया भीमेन कर्त्रा। राज्ञ इति अस्मान्निर्वास्य राज्यं कुर्वत इति व्यज्यते। मानधनस्य मान एव धनं यस्य तथाभूतस्य द्रविणतोऽपि मानं बहु मन्यमानस्येत्यर्थः । एतेन दुःशासनवधेऽप्युदासीनतयाऽस्य स्थितिरत्यन्तमनुचितेति ध्वन्यते । कार्मुकभृतः कार्मुकं धनुः बिभर्ति धारयति तथाभूतस्य । एतेनात्मनो भ्रातुर्वधेऽपि विक्रममप्रदर्शयतो वृथैव धनुर्धरत्वमेतस्येति द्योत्यते । दुर्योधनस्य। मिषतः निमीलितः म्रियमाणस्येत्यर्थः । निमीलनार्थको हि मिषतिः । निमीलनं च मरणमपि । 'दीर्घनिद्रा निमीलनम् ।' इति मरणपर्यायेषु हेमचन्द्रः। कुरुबान्धवस्य कुरवः कौरवा एव बान्धवा यस्य तथाभूतस्य । कौरवानेव बान्धवान् मन्यमानस्येत्यर्थः। एतेन कुन्तीगर्भसंभूततया भ्रातृभूतानस्मानपहाय बान्धवतया कौरवाश्रयणं दौरात्म्यमस्याभिव्यञ्जयतीति

**सूतः**—( श्रुत्वा सभयम् । ) कथम्! आसन्न एव दुरात्मा कौरवराजपुत्रमहावनोत्पातमारुतो मारुतिः । अनुपलब्धसंज्ञश्च महाराजः । भवतु । दूरमपहरामि स्यन्दनम् । कदाचिद्दुःशासन इवास्मिन्नप्ययमनार्योऽनार्यमाचारिष्यति । (त्वरितं परिक्रम्यावलोक्य च ।) अये! अयमसौ सरसीसरोजविलोलनसुरभिशीतलमातरिश्वसंवाहितसान्द्रकिसलयो न्यग्रोधपादपः । उचिता विश्रामभूमिरियं समरव्यापारखिन्नस्य वीरजनस्य । अत्र स्थितश्छायाचितताल्वृन्तेन हारिचन्दनच्छटाशीतलेनाप्रयत्नसुरभिणा दशापरिणामयोग्येन सरसीसमीरणेनामुना गतक्लमो भविष्यति महाराजः । लूनकेतुश्चायं रथोऽनिवारित एव प्रवेक्ष्यति च्छायामिति । (प्रवेशं रूपयित्वा । ) कः कोऽत्र भोः ? (समन्तादवलोक्य ।) कथं, न कश्चिदत्र परिजनः?। नूनं तथाविधस्य वृकोदरस्य दर्शनादेवंविधस्य च स्वामिनस्त्रासेन शिबिरसंनिवेशमेव प्रविष्टः । कष्टं भोः! कष्टम्! । (बः)

---

गम्यते । कर्णस्य शल्यस्य च प्रत्यक्षं समक्षम् । पाण्डववधूकेशाम्बराकर्षिणः पाण्डवानां पाण्डुपुत्राणामस्माकं वध्वा भार्यायाः केशान् अम्बरं वस्त्रं चाकर्षति तच्छीलस्य । एतेन न्याय्य एवास्य वध इति द्योत्यते । तस्य दुःशासनस्य । जीवतः सतः षष्ठ्या । वक्षस इत्यनेन संबन्धः । तीक्ष्णकरजक्षुण्णात् तीक्ष्णैः करजैः नखैः क्षुण्णात् चूर्णीकृतात् विदारितादिति यावत् । वक्षसः हृदयप्रदेशात् समुद्भूतमिति शेषः । कोष्णं ईषदुष्णं असृक् रक्तं पीतम् प्राशितम् । अत्रार्थे भवतः साक्षिणः करोमीत्यर्थः । 'करजो नखरो नख' इति 'शोणितं लोहितमसृक्' इति च हेमचन्द्रः । अत्र मिषत इत्यत्र मृषत इति पाठः स चाशुद्धत्वादुपेक्ष्यः । शार्दूलविक्रीडितं वृत्तम् ।

(बः) कथमिति संभ्रमे । कौरवराजपुत्रमहावनोत्पातमारुतः कौरवराजो धृतराष्ट्रस्तस्य पुत्रा दुर्योधनादयस्त एव महावनं तस्योत्पातभूतः अशुभसूचको विनाशहेतुरिति यावत् मारुतो वायुरिव वर्तमानः मारुतिः वायुपुत्रो भीमसेनः । आसन्न एव समीपमुपगत एव । महाराजो दुर्योधनः । अनुपलब्धसंज्ञः न उपलब्धा प्राप्ता संज्ञा चेतना येन तथाभूतः। अनिवृत्तमूर्छ इत्यर्थः। स्यन्दनं रथम्। दूरमपहरामि दूरं नयामि। दूरमपहरणे कारणमाह **कदाचिदिति** अयं अनार्यो दुष्टो भीमः। इवेति यथेत्यर्थे। यथा दुःशासने तथा अस्मिन् दुर्योधनेऽपि । अनार्यं असाधु हिंसनरूपं कर्मेत्यर्थः । अत एव च दूरमपहरामि स्यन्दनमिति भावः।

दत्त्वा द्रोणेन पार्थादभयमपि न संरक्षितः सिन्धुराजः
क्रूरं दुःशासनेऽस्मिन्हरिण इव कृतं भीमसेनेन कर्म ।
दुःसाध्यामप्यरीणां लघुमिव समरे पूरयित्वा प्रतिज्ञां
नाहं मन्ये सकामं कुरुकुलविमुखं दैवमेतावतापि ॥ २ ॥

---

अये इति हर्षे । अयमसाविति हर्षवशात्पुनरुक्तिः । **सरसीसरोजेति** । सरस्याः संबन्धिनां सरोजानां कमलानां विलोलनेन चालनेन सुरभिः सुगन्धविशिष्टः शीतलश्च यो मातरिश्वा ( मातरि आकाशे श्वयते वर्धते मातरिश्वा ) वायुस्तेन संवाहितानि चालितानीति यावत् सान्द्राणि निरन्तरतयावस्थितानि किसलयानि पल्लवा यस्य तथाभूतः । 'मातरिश्वा सदागति' रिति 'घनं निरन्तरं सान्द्रमि' ति चामरः । न्यग्रोधपादपः वटवृक्षः । 'न्यग्रोधो बहुपाद्वट' इत्यमरः । समरव्यापारखिन्नस्य युद्धकर्मणा श्रान्तस्य । इयं वटोपलक्षिता । अयाचिततालवृन्तेन अयाचितं अप्रार्थितं अप्रार्थितोपनतमित्यर्थः तालवृन्तं व्यजनमेव वीजनसाधनत्वादयाचिततालवृन्तं तेनेति वायौ तालवृन्तत्वारोपः । हरिचन्दनच्छटाशीतलेन हरिचन्दनस्य गोशीर्षाख्यचन्दनविशेषस्य च्छटा समूह इव तदनुलेपनपरम्परेवेतियावत् शीतलः तेन । 'हरिचन्दनमस्त्री स्यात्त्रिदशानां महीरुहे । नपुंसकं तु गोशीर्षे' इति मेदिनी । हरिर्मण्डूकस्तदाकारे पर्वतभागे जातत्वाद्धरिचन्दनमिति भरतः । अप्रयत्नसुरभिणा विनैव प्रयत्नं सुगन्धतामापन्नेनेत्यर्थः । दशापरिणामयोग्येन दशायाः पूर्वावस्थायाः परिणामोऽन्यथाभावस्तत्र योग्यः प्रतीकारभूततया समुचितः । मूर्च्छारूपस्य दशापरिणामस्य प्रतिकर्तव्यः तेन अमुना सरसीसमीरणेन सरःसंचारिणा वातेन करणभूतेन महाराजो दुर्योधनः गतक्लमो नष्टग्लानिः । तदस्य न्यग्रोधस्यैव च्छायायामवस्थातव्यमिति भावः । ननु भोः कथं समुन्नतध्वजशालिनो रथस्य न्यग्रोधच्छायायां प्रवेशः संभवति? तत्राह **लूनेति** । च किंच अयमस्मदधिष्ठितो रथो लूनकेतुः लूनः शत्रुभिश्छिन्नः केतुर्ध्वजोऽस्य तथाभूतः अत एव अनिवारितोऽप्रतिबद्ध एव छायामनातपं प्रवेक्ष्यति । रूपयित्वा अभिनीयेत्यर्थः । रूप रूपक्रियायामित्यनर्थीरादिकात्प्रयोजकणिजन्तात्क्त्वा । रूपक्रिया च यद्यपि रूपदर्शनं तथापि दर्शनमात्रमेव स्वीक्रियते कविभिः । समन्तादवलोक्येति परिजनान्वेषणायावलोकनम् । कथमिति विस्मये । नूनं निश्चितं प्रविष्ट इत्यनेन संबन्धः । तथाविधस्य दुःशासनरुधिराक्ताङ्गस्येत्यर्थः वृकोदरस्य भीमस्य दर्शनाद्धेतुभूतात् । एवंविधस्य ईदृशीं दशामनुप्राप्तस्येत्यर्थः । स्वामिनो महाराजस्य दुर्योनस्य संबान्धिनः त्रासेन भीत्या शिबिरसंनिवेशं सेनानिवेशस्थानमेव । प्रविष्टः स्यात् । कष्टं भोः कष्टम् । अतिमात्रं दुःखमनुप्राप्तमित्यर्थः ।

(२) किं तद्दुःखमित्याह । **दत्त्वेति** । द्रोणेन कर्त्रा अभयं दत्त्वाऽपि अहमेनं

(राजानमवलोक्य।) कथमद्यापि चेतनां न लभते महाराजः? भोः! कष्टम्।(श)
(निःश्वस्य।)

मदकलितकरेणुभज्यमाने
विपिन इव प्रकटैकशालशेषे।
हतसकलकुमारके कुलेऽस्मि-
स्त्वमपि विधेरवलोकितः कटाक्षैः॥ ३॥

---

भयात्परित्रास्य इति प्रतिज्ञायापीत्यर्थः। सिन्धुराजो जयद्रथः। पार्थात् पृथापुत्रादर्जुनात्। 'धनञ्जयोऽअर्जुनः पार्थ' इति शारदीनाममाला। भीत्रार्थानां भयहेतुरिति पार्थस्यापादानत्वात्पञ्चमी। न संरक्षितः। भीमसेनेन कर्त्रा अस्मिन्नस्मद्बुद्धौ वर्तमानतया पुरोदृश्यमाने दुःशासने हरिण इव हरिणतुल्ये प्रतीकाराक्षम इत्यर्थः क्रूरं कर्म हिंसारूपं कृतम्। सिंहेन हरिण इव भीमेन दुःशासनो निहत इत्यर्थः। अत्र दुःशासनस्य हरिणसाम्यं भीमसेनस्य सिंहसाम्यं गमयति। एवं अरीणां शत्रूणां पाण्डवानामित्यर्थः दुःसाध्यां वस्तुतो दुःखेन साधयितुं पूरयितुं शक्यामपि गुरुतरामपीत्यर्थः। प्रतिज्ञां लघुं क्षुद्रामिव आयासं विनैव पूरयितुं शक्यामिवेत्यर्थः। पूरयित्वा सकामं पूर्णमनोरथमिवेति गम्यते। दैवं प्रतिकूलमित्यर्थात्। एतावता एतत्परिमाणेनापि व्यापारेणेत्यर्थः। कुरुकुलविमुखं कुरुवंशतः पराङ्मुखं न इति अहं मन्ये। इतोऽप्यपरमनिष्टं किमपि कुरुकुले विनिपातयिष्यति दैवमिति संभावयामीति भावः। अत्र केचित् दुःसाध्यामित्यादि प्रतिज्ञामित्यन्तं द्वितीयचरणेन सम्बन्धयन्ति। तत्र समरेऽरीणां पुरो दुःसाध्यामपि प्रतिज्ञां लघुमिव पूरयित्वा भीमसेनेन हरिण इव दुःशासने क्रूरं कर्म कृतमिति योजना। किन्तु एवमर्धेऽपरिसमाप्तं वाक्यं भवति। न चैतद्युक्तम्। तदाह वामनः 'नार्धे किंचिदसमाप्तप्रायं वाक्यमि'ति। पुर इत्यध्याहारश्चापद्येतेति द्रष्टव्यम्। कर्मण एव प्रतिज्ञारूपत्वात्प्रतिज्ञां पूरयित्वेति क्त्वा च नोपपद्येत। द्रोणेनाकृष्य पार्थादयमपि च न संरक्षितः सिन्धुराज' इति 'लघुमिवे' त्यत्र 'तृणमिवे' ति 'कुरुकुलविमुख' मित्यत्र 'कुरुकुलनिधन' इति च पाठः। न चैते रुचिराः। क्रूरं दुःशासन इत्यत्रैकदेशविवर्तिन्युपमा। संरक्षित इति नैष यतेर्भङ्गः। पदमध्ये तत्पाताभावात्। 'पदान्ते सा शोभां व्रजति पदमध्ये त्यजति चे'ति च्छन्दोगोविन्दोक्तेः। स्रग्धरावृत्तम्। म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।' इति लक्षणात्।

(श) चेतनां संज्ञां मूर्छानिवृत्तिमित्यर्थः। निःश्वस्येति दुःखातिशयवशान्निःश्वासः।

(३) कष्टं विवृणोति। **मदकलितेति**। मदेन कलितो युक्तो यः करेणुर्गजस्तेन भज्यमाने। 'इभः करेणुर्गज' इत्यभिधानचिन्तामणिः। प्रकटः स्फुट एकः शालो वृक्ष

ननु भो हतविधे! भरतकुलविमुख! **(शा)**

अक्षतस्य गदापाणेरनारूढस्य संशयम् ।
एषापि भीमसेनस्य प्रतिज्ञा पूर्यते त्वया? ॥ ४ ॥

**दुर्योधनः**—( शनैरुपलब्धसंज्ञः । ) आः, का शक्तिरस्ति दुरात्मनो वृकोदरहतकस्य मयि जीवति दुर्योधने प्रतिज्ञां पूरयितुम् ? वत्स दुःशासन! न भेतव्यं न भेतव्यम् । अयमहमागतोऽस्मि । ननु सूत! प्रापय रथं तमेवोद्देशं यत्र वत्सो मे दुःशासनः । **(शि)**

---

एव शेषोऽवशिष्टोंशो यस्य तथाभूते विपिन इव हतसकलकुमारके हताः सकलाः सर्वे कुमारकाः कुमारा यस्मिंस्तथाभूतेऽस्मिन् कुले कौरववंशे त्वं दुर्योधनोऽपि एकमात्रोऽवशिष्टोऽपीति भावः । विधेः प्रतिकूलस्य दैवस्य कटाक्षैः रोषपूर्णैरित्यर्थात् अवलोकितः गोचरीकृत इति यावत् असीति शेषः । कष्टमेतदिति भावः । 'अनोकहः कुटः शाल' इत्यमरः । अत्र भज्यमान इति वर्तमाने शानचः प्रयोगात् भञ्जनक्रियाया अपरिसमाप्तत्वं द्योत्यते ततश्चावशिष्टस्यैकस्यापि तरोरवस्थितिरनिश्चितैवेति गम्यते । तत्तुल्यत्वाच्च कौरववंशस्य दुर्योधनजीविते संदेहो द्योत्यते । बिम्बप्रतिबिम्बभावेनोपमालङ्कारः । उपमया चानिश्चितं दुर्योधनजीवितमिति वस्तु व्यज्यते । पुष्पिताग्राख्यं वृत्तम् । 'अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रे'तिलक्षणात् । अत्र त्वमपीत्यत्र त्वमसीत्यपि क्वचित्पाठः । स चोपेक्ष्योऽन्यथा न्यूनपदत्वापत्तेः ।

**(शा)** नन्विति।ननु भो इत्यामन्त्रणे। भरतकुलविमुख कौरवपाण्डवकुलपराङ्मुख । उभयोरपि दुःखजनकत्वादिति भावः।हतविधे निन्दनीय दैव! हतशब्दो हतकसमानार्थकः।

(४) अक्षतस्येति। अक्षतस्य अव्रणितस्य शत्रुकृतं प्रहारमप्राप्तस्येत्यर्थः । एतेन विक्रमातिशयोऽजय्यत्वं च द्योत्यते । गदापाणेः गदा पाणौ हस्ते यस्य तथाभूतस्य शत्रुहननोद्यतस्येत्यर्थः । संशयं विजयप्राप्तिविषयकं संदेहं अनारूढस्य निश्चितामेव विजयप्राप्तिं मन्वानस्येत्यर्थः । भीमसेनस्य एषा दुर्योधनहननरूपापि प्रतिज्ञा त्वया पूर्यत इति प्रश्ने काकुः। आसन्नतरो भीमसेनो न चापि लब्धचेतनो दुर्योधन इति दुर्योधनहननरूपाऽपि भीमसेनप्रतिज्ञा त्वया पूर्यत इति शङ्कते मे चित्तमिति भावः । पथ्यावक्त्रं वृत्तम् ।

**(शि)** उपलब्धसंज्ञः प्राप्तचेतनः । 'संज्ञा नाम्नि गायत्र्यां चेतनायां रविस्त्रियाम्' इति विश्वः । प्रतिज्ञां दुःशासनवक्षोविदारणरूपाम् । मोहं प्राप्तेन हि दुर्योधनेन नावगतं

**सूतः**—आयुष्मन्! अक्षमाः संप्रति वाहास्ते रथमुद्वोढुम्। (अपवार्य) मनोरथं च। (शी)

**दुर्योधनः**—(रथादवतीर्य सगर्वं साकूतं च।) कृतं स्यन्दनगमनकालातिपातेन। (शु)

---

हतो दुःशासन इति। संज्ञां प्रतिपद्यमानेन च भीमसेनस्य प्रतिज्ञा पूर्यते त्वयेति सूतवचनाकर्णनात्प्रतिज्ञेयं दुःशासनहननरूपैवेत्यवधारयतोच्यते का शक्तिरित्यादि। अत्र केति क्वचिन्नास्ति। तत्र शक्तिरस्तीति प्रश्ने काकुः। नास्त्येव शक्तिरिति भावः। क्वचिच्च दुरात्मन इत्यस्मात्परं पवनतनयस्येत्यधिकं, तत्र पवनतनयस्य न तु पाण्डुपुत्रस्येति गालिः। क्वचिच्च मयि जीवति गदापाणौ वत्सदुःशासनस्य च्छायामप्याक्रमितुमिति पाठः। अयमेतदवस्थ एव अहम्। अनतिपातितसमयमस्मिन्नेव समय आगच्छामीत्यर्थः। तत एव न भेतव्यं भवतेति शेषः। अहं किल भयं ते निवारयिष्यामीति भावः। वत्स इत्यनुजसंबुद्धौ। 'वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः। शिष्योऽनुजश्च वक्तव्य' इत्युक्तेः। ननु इति संबुद्धौ। सूत सारथे। उद्देशं प्रदेशम्।

(शी) आयुष्मन् दुर्योधन। सूतेन हि रथी आयुष्मन्निति संबोधनीयः। तदाहुः 'आयुष्मन् रथिनं सूतः' इति। संप्रति ते वाहाः अश्वाः कर्तारः 'वाजिवाहार्वगन्धर्व' इत्यश्वपर्यायेष्वमरः। रथं उद्वोढुं उत्कृष्टतयाऽभीष्टं प्रदेशं प्रापयितुं अक्षमाः न समर्थाः। अतिमात्रमेव परिश्रान्तत्वादेषामिति भावः। वह प्रापण इत्यस्मात्तुमुनि सहिवहोरोदवर्णस्येत्योत्। अपवार्य रहस्याख्यानार्थं परावृत्त्य। यत्किलापरो न शृणोत्विति परावृत्य रहस्यमाख्यायते तदपवारितमित्युच्यते। तदाहुः 'तद्भवेदपवारितम्। रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यत' इति। मनोरथं मनोरथविषयीभूतं दुःशासनपरित्राणरूपमर्थं च त्वामुद्वोढुं प्रापयितुम्। धात्वर्थानुवर्ती चात्रोपसर्गः। रथं वहद्भिरप्यश्वैर्न त्वमात्मनो मनोरथं पूरयितुं शक्ष्यसि प्रागेव निहतत्वाद्दुःशासनस्येति भावः। अत्र रथमुद्वोढुमिति क्वचिन्नास्ति। क्वचिच्च मनोरथं चेत्यत्र वयं चेति पाठः। एष एव चाक्लिष्टत्वाद्युक्त इति प्रतिभाति।

(शु) सगर्वं गर्वेण विनापि रथं संग्रामं प्रविष्टो विजयं प्राप्स्यामीत्यभिमानेन सहितं यथा तथा। साकूतं साभिप्रायं च। अभिप्रायश्च नैर्बल्यात्सूतोऽत्र मां प्रतिबन्धातीत्येवं रूपः। स्यन्दनेनेति। स्यन्दनेन रथेन करणभूतेन यद्गमनं तेन यः कालातिपातः कालातिक्रमः तेन कृतं अलम्। साध्यं नास्तीति भावः। यदि न क्षमा वाहास्तदा पादचारेणैव यास्यामीत्यर्थः।

**सूतः**—( सवैलक्ष्यं सकरुणं च । ) मर्षयतु मर्षयतु देवः । (शू)

**दुर्योधनः**—धिक्सूत! किं रथेन ? केवलमरातिविमर्दसंघट्टसंचारी दुर्योधनः खल्वहम् । तद्गदामात्रसहायः समरभुवमवतरामि । (शे)

**सूतः**—देव! एवमेतत् । (शै)

**दुर्योधनः**—यद्येवं किमेवं भाषसे ? पश्य ।

बालस्य मे प्रकृतिदुर्ललितस्य पापः
　पापं व्यवस्यति समक्षमुदायुधोऽसौ ।
अस्मिन्निवारयसि किं व्यवसायिनं मां
　क्रोधो न नाम करुणा न च तेऽस्ति लज्जा ॥ ९ ॥

---

(शू) सवैलक्ष्यमिति दुर्योधनस्याभिप्रायं संभावयतो वैलक्ष्यम् । वैलक्ष्यं च विमनीभाव इति यावत् । तेन सहितं यथा तथा । मर्षयतु सहतां परिश्रान्तत्वाद्वाहानां सत्यतां कालातिपात इतिभावः । देवो राजा भवान् ।

(शे) सूत सारथे धिक् त्वां मां प्रतिबध्नन्तमिति भावः । रथेन किं किं प्रयोजनम्? । केवलं रथेन विनापीत्यर्थः। अरातीनां शत्रूणां यो विमर्दस्तत्र यः संघट्टः परस्परसंघर्षणं तत्र संचरितुं शीलं यस्य तथाभूतः । तत् यस्मात्स्वभाव एवायं मदीयस्तस्मात् गदामात्रं केवला गदैव सहायो यस्य तथाभूतः सन् गदापाणिरेकाक्येवेत्यर्थः । समरभुवं युद्धभूमिं अवतरामि प्रविशामीत्यर्थः ।

(शै) एतद्भवदुक्तं एवं यथा त्वयोक्तं तथैव । विनापि सहायं शक्नुयाद्भवान्समरे प्रवेष्टुमिति नात्र संदेह इति भावः ।

(५) बालस्येति । असौ पापः पापविशिष्टो भीमसेनः कर्ता उदायुधः उद्यतशस्त्रः सन् मे समक्षं प्रकृतिदुर्ललितस्य प्रकृत्या स्वभावत एव दुर्ललितस्य दुष्प्रलभ्यविषयकत्वाद्दोषयुक्तं ललितं ईप्सितं यस्य तथाभूतस्य। लल ईप्सयामित्यतो नपुंसके भावे क्तः । दुर्लभविषयकाभिलाषवत इत्यर्थः । एतेनात्यन्तप्रियत्वं द्योत्यते । मे बालस्य वत्सस्यानुजस्य दुःशासनस्येत्यर्थः । शेषे षष्ठी । तस्य विषय इत्यर्थः। पापं वक्षोविदारणरूपं व्यवस्यति करोति। मे इति काकाक्षिगोलकन्यायेनोभयत्रापि संबध्यते । अस्मिन्विषये व्यवसायिनं प्रतिकाररूपव्यवसाय (उद्यम ) वन्तं मां किं किमर्थं निवारयसि ? ते क्रोधः स्वस्वामिनोऽनुजस्य

**सूतः**—( सकरुणं पादयोर्निपत्य । ) एतद्विज्ञापयामि । आयुष्मन्! संपूर्णप्रतिज्ञेन निवृत्तेन भवितव्यमिदानीं दुरात्मना वृकोदरहतकेन । अत एवं ब्रवीमि । **(शो)**

**दुर्योधनः**—( सहसा भूमौ पतन् । ) हा वत्स दुःशासन! हा मदाज्ञाविरोधितपाण्डव! हा विक्रमैकरस! हा मदङ्कदुर्ललित! हा अरातिकुलगजघटामृगेन्द्र! हा युवराज! क्वासि? प्रयच्छ मे प्रतिवचनम् । ( इति निश्वस्य मोहमुपगतः । ) **(शो)**

---

मारणे प्रवर्तमानेषु शत्रुषु कोपः, करुणा परदुःखप्रहाणेच्छारूपा दया, लज्जा अस्मिन्नपि समये तूष्णीम्भावात्संभूतो योऽवमानस्तज्जन्या नास्ति नामेति संभावनायाम्। क्रोधवशात्स्ववचमेव चोदनीयाः परिश्रान्ता अप्यश्वाः करुणावशाद्वा लज्जायोगाद्वापि। त्वं तु न केवलमश्वान्न चोदयसि प्रत्युत मामपि निवारयसीति नास्त्येव त्वयि क्रोधो लज्जा वा करुणा वेति संभाव्यत इति भावः । वसन्ततिलकाख्यं वृत्तम् ।

(शो) आयुष्मन् रथिन् दुर्योधन । इदानीं संप्रति त्वद्गमनावसरे दुरात्मना दुष्टहृदयेन वृकोदरहतकेन निन्द्येन भीमसेनेन । 'क्षेपे हतकोबन्धुदग्धवत्' इति त्रिकाण्डशेषः। संपूर्णप्रतिज्ञेन संपूर्णा सम्यक्पूर्तिमनुप्राप्ता प्रतिज्ञा दुःशासनवक्षोरुधिरपानरूपा यस्य तथाभूतेन निवृत्तेन समरात्प्रतिगतेन भवितव्यम् न केवलं पूर्णप्रतिज्ञ इदानीं भीमोऽपितु समरभुवो निवृत्तोऽपीत्यर्थः । एवं च यत्र दुःशासनो निहतस्तत्र गतेन भवता न केवलं दुःशासनो न दृश्येत किन्तु शत्रुरपि नासाद्येतेति वृथैव तत्र ते गमनमिति भावः । अतो हेतोः एवं उक्तप्रकारेण ब्रवीमि न तु क्रोधाद्यभावादिति भावः। अत्र भवितव्यमित्यत्र भूतमित्येव पाठः साधुरिति केचित् । न खलु भीमस्य प्रतिज्ञापूर्तिः संभावनाविषयः किंतु निश्चयविषय एवेति । वस्तुतस्तु बहुपुस्तकानुसार्यस्मत्संगृहीत एव पाठः समीचीनः । न ह्यत्र प्रतिज्ञापूर्तेरनिश्चितत्वं प्रतिपाद्यते किन्तु निवृत्तेरपि संभवविषयत्वं द्योत्यत इति ।

(शो) सहसा भूमौ पतन् इति । शोकाकुलत्वात्सहसा भूमौ पतनम् । हा इति शोके । मदाज्ञेति। मम आज्ञया विरोधिता विरोधविषयीकृताः पाण्डवा येन तथाभूत। दुर्योधनस्यैवाज्ञया केशेषु कृष्टा द्रौपदी दुःशासनेन तत एव च शत्रुभूताः पाण्डवा एतस्येति। विक्रमे पराक्रम एव एको मुख्यो रसः प्रीतिर्यस्य तथाभूत । 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः' इति विश्वः । मदङ्कदुर्ललित मम अङ्कः क्रोडप्रदेशोऽन्तिकभागो वा दुष्प्राप्यं

**सूतः**—राजन्! समाश्वसिहि समाश्वसिहि ।

**दुर्योधनः**—( संज्ञां लब्ध्वा । निश्वस्य । )

युक्तो यथेष्टमुपभोगसुखेषु नैव
त्वं लालितोऽपि हि मया न वृथाग्रजेन ।
अस्यास्तु वत्स तव हेतुरहं विपत्ते-
र्यत्कारितोऽस्यविनयं न च रक्षितोऽसि ॥ ६ ॥

( इति पतति । )

**सूतः**—आयुष्मन्! समाश्वसिहि समाश्वसिहि ।

**दुर्योधनः**—धिक्सूत ! किमनुष्ठितं भवता ? (शं)

---

ललितमीप्सितं यस्य तथाभूत । शैशवे मदीयमङ्कमेव दुर्लभं मत्वा प्रार्थयमान! सर्वदा वा मर्मान्तिकप्रदेशमेव दुष्प्राप्यं प्रमुमीहमानेत्यर्थः । अरातीति । अरातीनां शत्रूणां कुलं समूह एव गजघटा गजसमूहस्तस्यां मृगेन्द्रः सिंह इव । 'सिंहो मृगेन्द्रः पञ्चास्य ' इत्यमरः । विनिवारयितः शत्रूणां निर्मूलयितारित्यर्थः । प्रयच्छ देहि! पाघ्रेत्यादिना दाणो यच्छादेशः । प्रतिवचनमुत्तरम् । मोहं मूर्छाम् ।

(६) युक्त इति । हे वत्स दुःशासन ! वृथा निष्फलीभूतोऽग्रजो ज्यायान्भ्राता तेन मया त्वं उपभोगसुखेषु इंद्रियैर्विषयसेवनमुपभोगस्तज्जन्येषु सुखेषु न युक्तो न योजितः । विषयाणां नानात्वेन तज्जन्यसुखेषु नानात्वारोपः । युजेरन्तर्भावितण्यर्थात्क्तः । वैषयिकसुखास्वादने न नियोजितोऽभूरिति भावः । लालितोऽपि नासि । न किंचिदपि तवेष्टं मया संपादितमित्यर्थः । तु किंतु अस्याः शत्रुकृतवक्षोविदारणरूपायास्तव विपत्तेर्दुःखस्य अहं हेतुः । कुतो हेतुत्वमित्याह यदिति । यत् यतः अविनयं द्रौपदीकेशाकर्षणादिरूपं कारितोऽसि मयेत्यर्थात् संबध्यते करोतेर्णिजन्तात्क्तः । च किं च न रक्षितोऽसि तज्जन्यायां विपद्युपस्थितायामित्यर्थात् । अग्रजत्वादविनये प्रवर्त्य विपद्यरक्षतो ममैव ते विपदि हेतुत्वं एवंविधत्वादग्रजोचितलालनाद्यकरणाच्च वृथा ममाग्रजत्वमिति भावः । अत्र युक्त इत्यत्र मुक्त इत्यपि पाठः । मुक्तः सुखसेवनार्थमित्यर्थः । वसन्ततिलकाख्यं वृत्तम् ।

(शं) भवता किं अनुष्ठितं कृतम् । अयुक्तमनुष्ठितमित्यर्थः ।

रक्षणीयेन सततं बालेनाज्ञानुवर्तिना ।
दुःशासनेन भ्रात्राहमुपहारेण रक्षितः ॥ ७ ॥

**सूतः**—महाराज! मर्मभेदिभिरिषुतोमरशक्तिप्रासवर्षैर्महारथानामपहृतचेतन-स्त्वान्निश्चेष्टः कृतो महाराज इत्यपहृतो मया रथः । (श:)

**दुर्योधनः**—सूत! विरूपं कृतवानसि । (ष)

तस्यैव पाण्डवपशोरनुजद्विषो मे
क्षोदैर्गदाशनिकृतैर्न विबोधितोऽस्मि ।
तामेव नाधिशयितो रुधिरार्द्रशय्यां
दौःशासनीं यदहमाशु वृकोदरो वा ॥ ८ ॥

---

(७) किं तदनुष्ठितं तदाह । रक्षणीयेनेति । भवतेत्यनुवर्तते । भवता कर्त्रा । सततं रक्षणीयेन रक्षितुं योग्येन आज्ञानुवर्तिना मदीयामाज्ञामनुवर्तितुमनुसर्तुं शीलं यस्य तथाविधेन बालेन भ्रात्रा मम बन्धुना दुःशासनेन उपहारेण बलिना बलिवच्छत्रवे दुःशासनं प्रदायेत्यर्थः अहं रक्षितः । तदेतन्न युक्तमनुष्ठितमित्यर्थः । पथ्यावक्त्रं वृत्तम् ।

(श:) मर्मभेदिभिः । मर्माणि सन्धिस्थानानि भेत्तुं शीलं येषां तथाविधैः । एतच्च भरतानुरोधेनोक्तम् । वस्तुतस्तु यत्र संजाते प्रहारादौ प्राणाः क्षीयन्ते वैक्लव्यं वा संजायते तथाविधानि शरीरगतानि स्थानान्येव मर्माणि । तानि चोक्तानि भावप्रकाशे 'सन्निपातः शिरास्नायुसन्धिमांसास्थिसंभवः । मर्माणि तेषु तिष्ठन्ति प्राणाः खलु विशेषतः।' इत्यादिना । इषवो बाणाः, तोमराः तोर्यन्ते म्रियतेऽनेन तथाभूता मन्थदण्डाकारा गुरगुंज इति ख्याता आयुधविशेषाः, प्रासाः प्रास्यन्ते प्रकर्षेण क्षिप्यन्ते शत्रुषु तथाभूता इटा इति महाराष्ट्र्यां ख्याताः शस्त्रविशेषाः तेषां वर्षैर्वृष्टिभिः । महारथानामिति षष्ठ्या इष्वादिभिः संबन्धः । अपहृता चेतना संज्ञा यस्य तथाभूतत्वान्निश्चेष्टो निर्व्यापारः कृतः । मूर्छां प्रापय्य निर्व्यापारीकृत इत्यर्थः । अत एव रथः अपहृतः समरादपनीतः । मूर्छितत्वात्प्रतीकाराक्षमस्य संग्रामेऽवस्थापनं न युक्तमित्यत एवमनुष्ठितमित्यर्थः ।

(ष) विरूपं अननुरूपं अयोग्यमित्यर्थः । नानुरूपं त्वया कृतं मे रथस्यापवाहनमिति भावः ।

(८) कुतो वा रथस्यापवाहनं नानुरूपं तदाह । तस्यैवेति । यत् यस्मात् त्वया-रथस्यापवाहनाद्धेतोः । मे अनुजद्विषः अनुजं कनीयांसं भ्रातरं दुःशासनं द्वेष्टि तथाभूतस्य

( निश्वस्य । नभो विलोक्य । ) ननु भो हताविधे ! कृपाविरहित ! भरतकुलविमुख ! (षा)

अपि नाम भवेन्मृत्युर्न च हन्ता वृकोदरः ! ।

**सूतः**—शान्तं पापं शान्तं पापम् । महाराज! किमिदम् ?

---

तस्य पाण्डवपशोः पाण्डवेषु पशुरिव युक्तायुक्तविवेकशून्यत्वात् पाण्डवपशुः तस्य भीमसेनस्येत्यर्थः । गदाशनिकृतैः गदैवाशनिर्वज्रं तेन कृतैः क्षोदैः अस्मच्छरीरपेषणक्रियाभिः न विबोधितः प्राप्तचेतनः अस्मि अभूवमित्यर्थः । वर्तमानसामीप्ये लट् । क्षोदः स्यात्पुंसि रजसि पेषणे च प्रकीर्तित' इति मेदिनी । यदि त्वं नापाहरिष्यः स्यन्दनं तदा निहतदुःशासनेन भीमेन गदया निक्षिप्यमाणशरीरस्य न्यवर्तिष्यन्मे मूर्छेति भावः । ततोऽपि किं तदाह । तामेव यां दुःशासनोऽधिशायितस्तामेव दौःशसनीं दुःशासनसंबन्धिनीं रुधिरार्द्रशय्यां रुधिरेणार्द्रा क्लिन्ना शय्या शय्यातुल्यं निपतनस्थानमित्यर्थः अहं वृकोदरो भीमो वाऽऽशु सत्वरं न अधिशयितः तत्र न निपतित इत्यर्थः । अधिशीङ्स्थासां कर्मेति शय्यायाः कर्मसंज्ञायां द्वितीया । निवृत्तमूर्छश्च युध्यमानोऽहं वा वृकोदर न्यपातयिष्यं स एव वा मां न्यपातयिष्यत् । उभयमपि साध्वेव । वैरनिर्यातनाय मया भीमस्यावश्यं वध्यत्वात् तदसंभवे च निहतानुजस्य प्राणानां निष्फलत्वेन मरणस्यैव युक्तत्वादिति भावः । तामेवेति यावत्पदात्पदमपि नापक्रान्तो वृकोदरस्तावदेवोपक्रान्तयुद्ध एनं विन्यपातयिष्यमिति गम्यते । अपवाहितस्त्वया रथ इत्यत एवैवं संजातमतत उक्तं विरूपं कृतवानसीतीति भावः । अत्र क्षोदैरित्यत्र क्षोभैरिति पाठः।तत्र क्षोभैर्गात्राणां संचलनैरित्यर्थः।क्षुभ संचलन इत्यतो घञ् । भीमेन गदया प्रह्रियमाणः क्षुब्धगात्रो न विबोधित इत्यर्थः। एतेनात्मनः शरीरस्य दुर्भेद्यत्वं द्योत्यते । तामेवेत्यत्र च यद्येव यद्व्येव यच्चेवेत्यादयः पाठाः । न चैते युक्तरूपा इत्युपेक्षणीया एव । आश्वित्यत्र चाद्येति पाठः।स च न युक्तः । तदपेक्षयाऽऽशुपदस्यैवानुरूपत्वात्। आशुपदं हि यथा विलम्बासहिष्णुतां बोधयति नैवमद्येतिपदमिति । वसन्ततिलकाख्यं वृत्तम् ।

(षा) नभः आकाशं विलोक्य दृष्ट्वा । यमधिकृत्य ब्रवीति वक्ता तस्यासान्निध्येऽपि पुरःप्रत्यक्षायमाणत्वमिवानुभवत आकाशे दृशोऽर्पणं घटते । हतविधे निन्दास्पद दैव । कृपाविरहित दुःशासनादिनिहननेन निर्दयत्वावगमात् । भरतकुलविमुख भरतकुलेऽस्मद्वंशे विमुख पराङ्मुख ! यद्यपि पाण्डवेषु नास्ति दैवस्य वैमुख्यं तथापि तेषां तत्तद्देवताजन्यतया भरतकुलोद्भूतात्पाण्डुतश्चासंजाततया नास्ति भरतकुलत्वमित्यभिप्रायः ।

**दुर्योधनः**—

घातिताशेषबन्धोर्मे किं राज्येन जयेन वा? ॥ ९ ॥

(ततः प्रविशति शरप्रहारव्रणबद्धपट्टिकालंकृतकायः सुन्दरकः । ) (षि)

**सुन्दरकः**—अज्जा! अवि णाम इमस्सिं उद्देसे सारहिदुईओ दिट्ठो तुह्मेहिं महाराअदुज्जोहणो ण वेत्ति । (निरूप्य । ) कहं ण को वि मन्तेदि । होदु । एदाणं बद्धपरिअराणं पुरिसाणं समूहो दीसइ । एत्थ गदुअ पुच्छिस्सम् । ( परिक्रम्य विलोक्य च । ) कहं एदे क्खु सामिणो गाढप्पहारहदस्स घणसण्णाहजाल-दुब्भेज्जमुहेहिं कङ्कवअणेहिं हिअआदो सल्लाइं उद्धरन्ति। ता ण हु एदे जाणन्ति। होदु । अण्णदो विचिणइस्सम् । ( अग्रतोऽवलोक्य किंचित्परिक्रम्य । ) इमे क्खु अवरे प्पहूददरा संगदा वीरमणुस्सा दीसन्ति । ता एत्थ गदुअ पुच्छिस्सम् । ( उपगम्य । ) हंहो! जाणध तुह्मे कस्सिं उद्देसे कुरुणाहो वट्टइ त्ति। ( दृष्ट्वा । ) कहं एदे वि मं पेक्खिअ अहिअदरं रोअन्दि । ता ण हु एदे वि जाणन्ति । हा, अदिकरुणं क्खु एत्थ वट्टइ । एसा वीरमादा समरविणिहदं पुत्तअं सुणिअ रत्तंसुअणिवसणाए समग्गभूसणाए वहूए सह अणुमरदि । ( सश्लाघम् । )

---

(९) इत्थं संबोध्य देवं प्रार्थयते । अपि नामेति।अपि नाम मे मृत्युर्भवेत्? वृको-दरो भीमश्च न हन्ता भवेत्? । मरणं तु ममाभीष्टं न च वृकोदरहस्तेन तदिति भावः । यत्रात्मनोऽभीष्टमाशस्यानुयुज्यते तत्रादितोऽपिनामेत्यव्यवहितमव्ययद्वयं प्रयुज्यते । कुत एतत्तदाह । घातितेति । घातिताः शत्रुभिर्मारिता अशेषा बन्धवो यस्य तथाभूतस्य मे राज्येन शत्रून्निर्जित्य लब्धेन जयेन वा किम्? निष्फला मे जयस्य राज्यस्य वा प्राप्तिरिति मरणमेव प्रार्थ्यम् इति भावः । पथ्यावक्त्रं वृत्तम् ।

(षि) तत इति।शरप्रहारेति।शराणां बाणानां प्रहारेण आघातेन ये व्रणाः क्षतानि तत्र बद्धाभिः व्रणविरोपणार्थमाबद्धाभिः पट्टिकाभिः व्रणविनाशकभेषजानुलिप्तैर्वस्त्रखण्डैरल-ङ्कृतो विभूषितः कायो देहो यस्य तथाभूतः । वीरभावसूचकत्वाद्विभूषणमेव वीराणां व्रणपट्टिकाबन्धनमित्यत उक्तमलङ्कृतकाय इति । सुन्दरक एतन्नामा दुर्योधनपक्ष्यः सांग्रा-मिकवार्ताहरः ।

साहु वीरमादे! साहु । अण्णस्सिं वि जम्मन्तरे अणिहदपुत्तआ हुविस्ससि । होदु । अण्णदो पुच्छिस्सम् । ( अन्यतो विलोक्य । ) अअं अवरो बहुप्पहार-णिहदकाओ अकिदव्वणबन्धो एव्व जोहसमूहो इमं सुण्णासणं तुलङ्गमं उवाल-हिअ रोइदि । णूणं एदाणं एत्थ एव्व सामी व्वावादिदो । ता ण हु एदे विं जाणन्दि । होदु । अण्णदो गदुअ पुच्छिस्सम् । ( सर्वतो विलोक्य । ) कहं सव्वो एव्व अवत्थाणुरूवं व्वसणं अणुभवन्तो भाअधेअविसमसीलदाए पज्जा-उलो जणो । ता कं दाणीं एत्थ पुच्छिस्सम् । कं वा उवालहिस्सम् । होदु । सअं एव्व एत्थ विचिणइस्सम् । ( परिक्रम्य । ) होदु । देव्वं दाणीं उवाल-हिस्सम् । हंहो देव्व ! एआदसाणं अक्खोहिणीणं णाहो जेट्ठो भादुसदस्स भत्ता गङ्गेअदोणङ्गराअसल्लकिवकिदवम्मअस्सत्थामप्पमुहस्स राअचक्कस्स सअ-लपुहवीमण्डलेक्कणाहो महाराअदुज्जोहणो वि अण्णेसीअदि । अण्णेसीअन्तो वि ण जाणीअदि कस्सिं उद्देसे वट्टइ त्ति । ( विचिन्त्य निश्वस्य च । ) अह वा किं एत्थ देव्वं उवालहामि । तस्स क्खु एदं णिब्भच्छिअविउरवअणवीअस्स अव-हीरिदपिदामहहिदोवदेसंकुरस्स सउणिप्पोच्छाहणादिविरूढमूलस्स जदुगेहजूदवि-ससाहिणो संभूदचिरआलसंवद्धवेरालवालस्स पंचालीकेसग्गहणकुसुमस्स फलं

---

(षी) आर्या इति । आर्याः ! साधवः पुरुषा इत्यवेक्षितानां पुरुषाणां संबुद्धिः । अपि नामेतीष्टप्रश्ने । युष्माभिः कर्तृभिः अस्मिन्नुद्देशे महाराजदुर्योधनः दृष्टो नवेति प्रश्नः । अतः परमितीति पाठो न युक्तः । प्रयोजनाभावात् । सकलपुस्तकानुसारीत्येव तु समा-दृतः सोऽयम् । सति चास्मिन्पाठेऽधिकपदत्वं दुर्वारम् । यद्यसौ नाभविष्यत्प्राकृतभाषायां तदा निरूप्येत्यनेनाभविष्यत्संबन्ध एतस्य । निरूप्य दृष्ट्वा । निपूर्वको रूपयतिर्दर्शने । को-वा वदतीति विज्ञानार्थं निरूपणम् । बद्धपरिकराणां बद्धः परिकरो गात्रबन्धनसाधनभूतवस्त्र-पट्टिकाविशेषः 'कचा' इति महाराष्ट्र्यां ख्यातो यैस्तेषां पुरुषाणां समूहः 'भवेत्परिकरः संघे पर्यङ्कपरिवारयोः । प्रगाढगात्रिकाबन्धे ' इतिमेदिनी । अत्र समूहे । परिक्रम्य गत्वा । कथमिति विषादे । गाढप्रहारहतस्य गाढैः आत्यन्तिकैः प्रहारैः शस्त्राघातैर्हतो मृतप्रायता-मापन्नः तस्य स्वामिनो भर्तुः । अत्र प्रहाराहतेत्यपि पाठः । एतदपेक्षया त्वस्मदुपात्त एव चारुतरः । घनसन्नाहजालदुर्भेद्यमुखैः घनेन निरन्तरेण नीरन्ध्रप्रायेणेत्यर्थः सन्नाहजालेन

परिणमदि । ( अन्यतो विलोक्य । ) जहा एत्थ एसो विविहरअणप्पहासंवलिदसूरकिरणप्पसूदसक्कचावसहस्ससंपूरिददसदिसामुहो लूणकेदुवंसो रहो दीसइ तहा तक्केमि अवस्सं एदिणा महाराअदुज्जोहणस्स विस्सामुद्देसेण होदव्वं त्ति । जाव निरूवेमि । ( उपगम्य दृष्ट्वा निश्वस्य च । ) कधं एआदहाणं अक्खोहिणीणं णाअको भविअ महाराओ दुज्जोहणो पइदपुरिसो विअ असलाहणीआए भूमीए उवविट्ठो चिट्ठदि । अध वा तस्स क्खु एदं पंचालीकेसग्गहकुसुमस्स फलं परिणमदि । ( आर्याः ! अपि नामास्मिन्नुद्देशे सारथिद्वितीयो दृष्टो युष्मा-

---

जालसदृशेन कवचेन दुर्भेद्यानि भेत्तुमशक्यानि मुखानि अग्राणि येषां तैः । कवचमपि विदार्यान्तः प्रवेष्टुं समर्थैरित्यर्थः । केचित्तु घनं सन्नाहजालमिव दुर्भेद्यं मुखं येषामिति विगृह्णन्ति । तन्न साधु । सन्नाहजालस्यापि बाणैर्भेत्तुं शक्यत्वात् । तत एव च विदार्य संनाहं हृदये प्रविष्टानि शल्यानि इति । 'सन्नाहो वर्म कङ्कटः । जगरः कवचं दंश ' इत्यभिधानचिन्तामणिः । कङ्कवदनैः कङ्कमुखैः संदंशापरपर्यायैः 'सांडस' इतिमहाराष्ट्र्यां ख्यातैः शल्योद्धरणोपयुक्तैर्यन्त्रविशेषैः करणभूतैः। उक्तं च शल्योद्धरणोपयोगित्वमस्य सुश्रुते 'निर्वर्तते साध्ववगाहते च **शल्यं प्रगृह्योद्धरते च यत्नात्**। यन्त्रेष्वतः कङ्कमुखं प्रधानं स्थानेषु सर्वेष्वविकारि चैव ।' इति । अत्र कङ्कयन्त्रैरित्यपि पाठः । एतन्नाम्नः पुनर्यन्त्रस्यादर्शनादुपेक्षितोऽयमस्माभिः । शल्यानि बाणान् उद्धरन्ति व्यपनयन्ति । 'शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषुतोमरे ' इति मेदिनी। खलु निश्चयेन एते न जानन्ति शल्योद्धरणव्यापृतत्वादेतेषां वृत्तान्तरस्यावगन्तुमशक्यत्वादिति भावः । अग्रतः अवलोक्य प्रष्टुं योग्यानां पुरुषाणामन्वेषणार्थमग्रतो विलोकनम् । प्रभूततराः बहुतराः 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' इत्यमरः । वीरमनुष्या वीराः पुरुषाः । संगता एकत्र संमिलिताः । हंहो इति संबोधने । जानीथेति प्रश्ने काकुः । उद्देशे प्रदेशे कुरुनाथः कौरवराजो दुर्योधनः । इतीत्यस्य जनीथेत्यनेन संबन्धः । मां प्रेक्ष्य दृष्ट्वा अधिकतरं अतिशयेनाधिकं यथा तथा । स्वजनमिव मामवगच्छन्तः समुपचितदुःखा रुदन्तीत्यर्थः । 'स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायत ' इति । अतः परमेव क्वचिद्दृष्ट्वेति पाठः स च न युक्तः संगतेरभावादिति । तत् यस्मादप्रदायोत्तरं रुदन्त्येव केवलं तस्मात् । हा इति शोकसूचकमव्ययम् । अतिकरुणम् अतिशयेन हृदयद्रावकम् । कर्मेति शेषः । अत्रातिदुष्करमित्यपि पाठः । अतिशयेन दुष्करं दुःखेन कर्तुं शक्यमित्यर्थः । किं तदित्याह एषेति । एषा पुरोदृश्यमाना

भिर्महाराजदुर्योधनो न वेत्ति । कथं न कोऽपि मन्त्रयते । भवतु । एतेषां बद्धपरिकराणां पुरुषाणां समूहो दृश्यते । अत्र गत्वा प्रक्ष्यामि।कथं, ऐते खलु स्वामिनो गाढप्रहारहतस्य घनसन्नाहजालदुर्भेद्यमुखैः कङ्कवदनैर्हृदयाच्छल्यान्युद्धरन्ति ? । तन्न खल्वेते जानन्ति । भवतु । अन्यतो विचेष्यामि । इमे खल्वपरे प्रभूततराः संगता वीरमनुष्या दृश्यन्ते । तदत्र गत्वा प्रक्ष्यामि । हंहो! जानीथ यूयं कस्मिन्नुद्देशे कुरुनाथो वर्तत इति । कथमेतेऽपि मां प्रेक्ष्याधिकतरं रुदन्ति । तन्न खल्वेतेऽपि जानन्ति । हा ! अतिकरुणं खल्वत्र वर्तते । एषा वीरमाता समरविनिहतं पुत्रकं श्रुत्वा रक्तांशुकनिवसनया समग्रभूषणया वध्वा सहानु-

---

वीरमाता वीरस्य माता कर्त्री । समरविनिहतं युद्धे मारितं पुत्रकं पुत्रं श्रुत्वा । अत्र प्रेक्षितुमित्यपि पाठः स च प्रकृतानुपकारित्वादुपेक्ष्यः । अनुमरणं त्वस्याः प्रतिपाद्यते तच्च न प्रेक्षणार्थं भवतीति । रक्तं रक्तवर्णं सौभाग्यसूचकत्वात्तस्य अंशुकं वस्त्रमेव निवसनं परिधानीयं यस्यास्तया । निवस्यत आच्छाद्यते शरीरमेतेन निवसनं, वस आच्छादन इत्यतः करणे ल्युट्। समग्रभूषणया समग्राणि सर्वाणि भूषणानि यस्यां तथाभूतया परिहितसकलालङ्कारेत्यर्थः । अनुमरणस्य हि निरतिशयसौभाग्यरूपत्वादुचितमेव धारणं सर्वेषामलङ्काराणाम् । वध्वा स्नुषया सह । 'वधूः स्त्री शारिवौषधौ । स्नुषाशठीनवोढासु ' इति मेदिनी । अनुम्रियते अनुगमनं करोति । अनुगमनं च यद्यपि भार्याया विहितं तथापि दुःसहशोकसंकुलत्वान्मात्राप्यनुष्ठितमिति बोध्यम् । साध्विति प्रशंसनीयं तवेदमाचरितमित्यर्थः । अन्यस्मिन् जन्मान्तरे पूर्वस्माज्जन्मनोऽन्यद्वर्तमानं जन्मेति जन्मान्तरमेवेदं एकं चैतज्जन्मान्तरं यच्च भावि जन्म तदप्यतोऽन्यदित्यपरं जन्मान्तरं तत उक्तमन्यस्मिन्नपि जन्मान्तर इति। वस्तुतः पुनरन्यस्मिन्नपि जन्मनीत्येवापेक्षितः पाठः । अपीति वेत्यर्थे यद्यपि निहतोऽत्र ते पुत्रस्तथापि जन्मान्तरे नायं निहंस्यत इति भावः। अयं पुरो दृश्यमानः अपरः पूर्वदृष्टादन्यः। बहुप्रहारेति । बहुभिः प्रहारैः शस्त्राघातैर्निहता श्छिन्ना इति यावत् काया देहा यस्य तथाभूतः । अकृतव्रणबन्धः न कृतो व्रणानां बन्धः पट्टिकया बन्धनं येन तथाभूतः । स्वामिनो मरणेन संरब्धत्वाद्व्रणबन्धस्याकरणम् । योधसमूहः योद्धॄणां समूहः । शून्यासनं आस्यते उपविश्यतेऽस्मिन्नासनं पीठं तच्चात्र पर्याणं (पल्याण खोगीर इति वा ख्यातं ) शून्यं उपवेष्ट्रा रहितं पीठं पर्याणं यस्य तथाभूतम् । अश्वारूढस्य स्वामिनो निपतनाच्छून्यासनत्वमश्वस्य । तुरङ्गमं ( तुरेण त्वरया गच्छति तुरङ्गमः । गमेश्चेति खच् ) अश्वं उपालभ्य निन्दित्वा । धिक्त्वां स्वामिना वियुक्तमिति गर्हयित्वेत्यर्थः । नूनं निश्चितम् अत्रैवास्मिन्नेव प्रदेशे । व्यापादितो मारितः शत्रुभिरित्यर्थात् । तत् स्वामिमरणेन शोकाकुलतया वृत्तान्तान्तरस्य ज्ञातुमशक्यत्वादिति भावः । अवस्थानुरूपं स्वस्वावस्थासदृशं व्यसनं दुःखम् । भागधेयवि-

म्रियते । साधु वीरमातः! साधु । अन्यस्मिन्नपि जन्मान्तरेऽनिहतपुत्रका भविष्यसि। भवतु । अन्यतः प्रक्ष्यामि । अयमपरो बहुप्रहारनिहतकायोऽकृतव्रणबन्ध एव योधसमूह इमं शून्यासनं तुरङ्गमुपालभ्य रोदिति । नूनमेतेषामत्रैव स्वामी व्यापादितः । तत्र खल्वेतेऽपि जानन्ति । भवतु । अन्यतो गत्वा प्रक्ष्यामि । कथं सर्व एवावस्थानुरूपं व्यसनमनुभवन्भागधेयविषमशीलतया पर्याकुलो जनः?। तत्कमिदानीमत्र प्रक्ष्यामि । कं वोपालप्स्ये । भवतु। स्वयमेवात्र विचेष्यामि । भवतु । दैवमिदानीमुपालप्स्ये । हंहो दैव! एकादशानामक्षौहिणीनां नाथो ज्येष्ठो भ्रातृशतस्य भर्ता गाङ्गेयद्रोणाङ्गराजशल्यकृपकृतवर्माश्वत्थामप्रमुखस्य

---

षमशीलतया विषमं दारुणं शीलं स्वभावो यस्य तस्य भावो विषमशीलता भागधेयस्य दैवस्य विषमशीलता तया । दैवस्य दारुणस्वभावतयेत्यर्थः । भागरूपनामभ्य इति धेयः स्वार्थे । पर्याकुलो व्याकुलीभूतः । उपालप्स्ये निन्दिष्यामि । दुर्योधनवृत्तानवगमान्निन्दा । सापि व्यसननिमग्नत्वेनामीषां न युक्तेति । अत्र अस्मिन् प्रदेशे । विचेष्यामि मार्गिष्यामि । विपूर्वकश्चिनोतिरन्वेषणे । परिक्रम्येति दुर्योधनस्यान्वेषणार्थं परिक्रमणम् । अनुपलब्धत्वाच्चास्य दैवोपालम्भः । इदानीं अस्मिन् दुर्योधनानुपलब्धिसमये दैवं तस्यैवात्र हेतुत्वात् । हंहो इतिसंबोधने । एकादशानां अक्षौहिणीनां सेनासमूहविशेषाणां नाथः स्वामी । अक्षौहिण्यां सैन्यप्रमाणं तु 'अक्षौहिण्याः प्रमाणं तु खागाष्टैकद्विकैर्गजैः ( २१८७० ) । रथैरेतै (२१८७०) हयैस्त्रिघ्नैः (६५६१०) पञ्चघ्नैश्च (१०९३५०) पदातिभिः । ' इत्युक्तं । मिलितं तु २१८७०० मितं सैन्यमक्षौहिणी भवति। भ्रातृशतस्य मध्ये ज्येष्ठोऽग्रजः । गाङ्गेयेति। गाङ्गेयो गङ्गापुत्रो भीष्मः द्रोणः प्रसिद्धः अङ्गराजः कर्णः शल्यःकृतवर्माऽश्वत्थामा च प्रसिद्धाः एते प्रमुखाः प्रधाना यत्र तथाभूतस्य राजचक्रस्य राजसमूहस्य । भर्ता पोष्टा । सकलेति । सकलस्य पृथिवीरूपस्य मण्डलस्य राष्ट्रस्य एकोऽद्वितीयो नाथः स्वामी सार्वभौम इत्यर्थः । महाराजदुर्योधनोऽपि अन्विष्यते मृग्यते? । एवंविधस्याप्यनुपलम्भनमिति महदेवेदं ते वैषम्यमिति धिक्त्वामेवंकुर्वाणमिति भावः । विचिन्त्येति । अस्मिन्दशाविपाके दैवमेव कारणं न वेति विचार्येत्यर्थः । निःश्वस्येति दैवस्य कारणाभावं निर्धार्यात्मन एवापराधात्संवृत्तोऽयमित्यवगच्छतो दुःखातिशयान्निःश्वासः । अत्र च विमृश्येत्येव क्वचित्पाठः । तत्र च विचार्येत्यर्थः । अथवेति दैवोपालम्भपक्षव्युदासार्थम् । अत्र एतस्मिन्नवस्थान्तरविषये किं किमर्थं दैवमुपालभे निन्दामि । दैवस्य हेतुत्वाभावान्नोचिता निन्देत्यर्थः । कथं तर्ह्येतत्संभूतं तदाह । तस्येति । एतदीदृशावस्थाप्राप्तिरूपं तस्य प्रसिद्धस्य जतुगृहद्यूतविषशाखिनः जतुनो लाक्षाया गृहं जतुगृहं तच्च द्यूतं च ते एव विषशाखी विषमयो विषोत्पादको वा शाखी वृक्षः (शाखाः सन्त्यस्य तथाभूतः) तस्य । 'लाक्षा राक्षा जतु क्लीबे'

राजचक्रस्य सकलपृथ्वीमण्डलैकनाथो महाराजदुर्योधनोऽप्यन्विष्यते? । अन्विष्यमाणोऽपि न ज्ञायते कस्मिन्नुद्देशे वर्तत इति । अथ वा किमत्र दैवमुपालभे । तस्य खल्विदं निर्भर्त्सितविदुरवचनबीजस्यावधीरितपितामहहितोपदेशाङ्कुरस्य शकुनिप्रोत्साहनादिविरूढमूलस्य जतुगृहद्यूतविषशाखिनः संभूतचिरकालसंबद्धवैरालवालस्य पाञ्चालीकेशग्रहणकुसुमस्य फलं परिणमति । यथात्रैष विविधरत्नप्रभासंवलितसूर्यकिरणप्रसूतशक्रचापसहस्रसंपूरितदशदिशामुखो लूनकेतुवंशो रथो दृश्यते तथा तर्कयाम्यवश्यमेतेन महाराजदुर्योधनस्य विश्रामोद्देशेन भवि-

---

इति 'वृक्षो महीरुहः शाखी'ति चामरः । जतुगृहद्यूतेत्युपलक्षणम् । पाण्डवानां विनाशार्थमालम्बितस्य लाक्षागृहनिर्माणादेः कूटस्येत्यर्थः। **अत्र कूटविषवृक्षस्येति** पाठः साधुतरः। कूटं कपटमेव विषवृक्षस्तस्य । **'कैतवानृतराशिषु'** इति कूटशब्दार्थेष्वमरः । न हि जतुगृहं च द्यूतञ्चेत्येतयोरेव फलमेतदवस्थान्तरं किंतर्हि कपटाचारस्यैवेति । फलं परिणमति पाकमापद्यते । कीदृशस्य कूटविषशाखिनः निर्भर्त्सितविदुरवचनबीजस्य निर्भर्त्सितं धिक्कृतं यद्विदुरस्य नाम दासीगर्भजातस्य धर्मावतारस्य मन्त्रिणो वचनं उपदेशरूपं भाषितं तदेव बीजं निष्पादकत्वाद्यस्य तथाभूतस्य । नादृतो विदुरस्योपदेश इत्यत एवोत्पन्नोऽयं कूटविषशाखीत्यत उक्तं निर्भर्त्सितेत्यादि । पुनः कीदृशस्य? अवधीरितपितामहहितोपदेशाङ्कुरस्य अवधीरितः अवज्ञातो यः पितामहस्य भीष्मस्य हितः हितकारक उपदेशः स एवाङ्कुरो यस्य तथाभूतस्य । पुनः कीदृशस्य? शकुनिप्रोत्साहनादिरूढमूलस्य शकुनेः दुर्योधनमातुलस्य यत्प्रोत्साहनादि तदेव रूढानि जातानि मूलानि यस्य तथाभूतस्य । 'रूढं जाते प्रसिद्धे चे'ति मेदिनी । प्रोत्साहनादिना रूढं मूलं यस्येति तु नोचितम् । रूपकस्यैवात्र प्रकृतत्वादिति । पुनः कीदृशस्य ? संभूतचिरकालसंबद्धवैरालवालस्य संभूतं सम्यङ्निष्पन्नं चिरकालं संबद्धमनुवृत्तं च यद्वैरं विरोधस्तदेवालवालं 'आळें' इति महाराष्ट्रभाषायां ख्यातमावालापरपर्यायं यस्य तस्य । पुनः कीदृशस्य? पाञ्चालीकेशग्रहकुसुमस्य पाञ्चाल्या द्रौपद्या यः केशग्रहो दुःशासनकृतं केशानां ग्रहणं स एव कुसुमं यस्य तथाभूतस्य । अत्र समस्तवस्तुविषयं रूपकमलङ्कारः । यथेति हेतौ यस्मादित्यर्थः 'यथाशब्दस्तु निर्दिष्टस्तुल्ययोगानुमानयोः । ' इति विश्वः अनुमीयतेनेनेत्यनुमानं हेतुः । विविधेति । विविधानामनेकप्रकाराणां रत्नानां रथावयवेषु प्रत्युप्तानां प्रभाभिः कान्तिभिः संवलिताः संमिश्रिता ये सूर्यकिरणास्तैः प्रसूतं जनितं यत् शक्रचापसहस्रं इन्द्रधनुषां सहस्रं तेन करणभूतेन संपूरितानि सम्यक् पूरितानि व्याप्तानीति यावत् दशानां दिशां मुखानि येन तथाभूतः । रथावयवेषु खचितानां रत्नानां नानाविधत्वेनानेकवर्णतया तत्र संक्रान्तेषु सूर्यकिरणेषु समुद्भूतायाः प्रभाया अपि नैकवर्णत्वादिन्द्रधनुस्तुल्यत्वम् । लूनश्छिन्नः केतोर्ध्वजस्य वंशो वेणुर्यस्य तथाभूतः । लूञ्छेदन

तव्यमिति । यावन्निरूपयामि। कथमेकादशानामक्षौहिणीनां नायको भूत्वा महाराजोदुर्योधनः प्राकृतपुरुष इवाश्लाघनीयायां भूमावुपविष्टस्तिष्ठति। अथ वा तस्य खल्विदं पाञ्चालीकेशग्रह-कुसुमस्य फलं परिणमति ।) (षी)

( उपसृत्य दृष्ट्वा । ) (षु)

---

इत्यतो निष्ठायां ल्वादिभ्य इति निष्ठातस्य नः । रथः दृश्यते तथेति तस्मादित्यर्थे तर्कयामि संभावयामि एतेन रथाधिष्ठानभूतेन महाराजदुर्योधनस्य विश्रामोद्देशेन विश्रमप्रदेशेनावश्यं भवितव्यम्। इतीत्यस्य तर्कयामीत्यनेन संबन्धः । अत्र तथेत्यत्र तदहमित्यपि क्वचित्पाठः स च न युक्तः। पूर्वत्र यथाशब्दस्योपादानात् । इतीति क्वचिन्नास्ति तदपि न युक्तं तर्कया-मीत्युक्तेस्तत्प्रयोगस्यावश्यकत्वादिति । यावत् साकल्येन पूर्णतयेत्यर्थः निरूपयामि पश्यामि । रत्नप्रभाभिरनुमीयमानं सम्यग्दृष्ट्वावधारयामीति भावः । उपगम्य समीपं गत्वा । दृष्ट्वा दुर्योधनरथमित्यर्थात् । निश्वस्य अनुचितां दशामापन्नं दुर्योधनं साक्षात्कुर्वतो दुःखातिशयान्निश्वासः । कथमिति विस्मये । एकादशानामक्षौहिणीनां पूर्वोक्तसेनासमूहानां नायकः स्वामी । प्राकृतपुरुष इव प्राकृतः पामरः (निकृष्टश्रेणीयः) पुरुष इव । 'पामरो नीचः प्राकृतश्च पृथग्जन' इत्यमरः । अश्लाघनीयायां गर्हणीयायां भूमौ । तिष्ठति वर्तत इति यावत् । इद मेकादशानामक्षौहिणीनां नाथस्याश्लाघनीयायां भूमावुपवेशनरूपं तस्य प्रसिद्धस्य पाञ्चाली-केशग्रहकुसुमस्य द्रौपदीकेशग्रहणरूपस्य पुष्पस्य फलं परिणमति परिपाकं प्राप्नोतीत्यर्थः । परिपच्यमानस्य द्रौपदीकेशग्रहणपुष्पजन्यस्य फलस्यैवेदं स्वरूपं यन्महाराजेनापि दुर्योधनेनैवं-विधायां भूमौ स्थीयत इतिभावः । अत्राभ्यर्थनापरैर्वाक्यैर्दुर्योधनावस्थानप्रदेशस्यान्वेषणात्पृ-च्छाख्यं नाट्यलक्षणम् । तदाहुः 'अभ्यर्थनापरैर्वाक्यैः पृच्छार्थान्वेषणं मतम् । ' इति । अत्र क्वचित् भवितव्यमित्यतः परं 'उपसृत्य दृष्ट्वा। जयतु जयतु महाराज' इत्येवं पाठः ।

(षु) उपसृत्य समीपं गत्वा । अत्र दृष्ट्वेत्यत्र सूतं संज्ञया पृच्छतीतिक्वचित्पाठः । न चायं बहुपुस्तकानुसारी।अत्र च अवसरोपसर्पणीया राजान इति समुचितो न वाऽयमवसर इति संज्ञया प्रश्नः। अतः परं च क्वचित् 'सूतः-अये कथं! संग्रामात्सुन्दरकः प्राप्तः? स्वागतं सुन्दर-कस्य ' इति पाठः । शोभनमागमनमित्यर्थः । स्वागतमित्यादिकं च क्वचिन्नास्ति । यदि च सूतं संज्ञया पृच्छतीत्यभ्युपगम्यते पाठस्तदा सूतस्योत्तरं विना दुर्योधनदर्शनस्यासंभवात्सू-तवाक्यमावश्यकमेव । तत्र च सति 'सारथे! कुतः स्वागतं निवेदय ममागमनं देवस्ये-' ति जगद्धरादिधृतं सुन्दरकवचनमप्यावश्यकमेव । बहुषु पुनः पुस्तकेषु संदृश्यतेऽस्माभिः संगृहीतः पाठः ।

**सुन्दरकः**—( उपगम्य । ) जअदु जअदु महाराओ । ( जयतु जयतु महाराजः । (षू)

**दुर्योधनः**—( विलोक्य । ) अये! सुन्दरकः । सुन्दरक! कच्चित्कुशलमङ्गराजस्य? (षे)

**सुन्दरकः**—देव! कुसुलं सरीरमेत्तकेण । (षै)

**दुर्योधनः**—किं किरीटिनास्य निहता धौरेया हतः सारथिर्भग्नो वा रथः? (षो)

**सुन्दरकः**—देव! ण भग्गो रहो । से मणोरहो वि । ( देव! न भग्नो रथः । अस्य मनोरथोऽपि । (षौ)

**दुर्योधनः**—किमविस्पष्टकथितैराकुलमपि पर्याकुलयसि मे हृदयम् । अशेषतो विस्पष्टं कथ्यताम् । (षं)

---

**(षू)** जयतु उत्कर्षं लभताम्। अत्र जयतीत्यपि क्वचित्पाठः । तत्र जयत्वित्यर्थः । 'जेस्तुमन्त्वोस्तिवन्तीति वक्तव्यम्' इति मुग्धबोधवचनात्तुपस्तिप् । 'जयिर्जयाभिभवयोरायेर्थेऽसावकर्मकः । उत्कर्षप्राप्तिरावोऽर्थो द्वितीयेऽर्थे सकर्मक' इति दैवम् ।

**(षे)** अये इति विस्मये हर्षे वा । प्राप्त इति शेषः । अवितर्कितमेव सुन्दरकस्य दर्शनाद्विस्मयो हर्षश्च । कच्चिदितीष्टप्रश्ने । ममाभीष्टं यदङ्गराजस्य ( कर्णस्य ) कुशलं ( क्षेमं ) तदस्ति न वेति प्रश्नार्थः ।

**(षै)** शरीरमात्रकेण शरीरमात्रेण । स्वार्थे कः । शरीरमेव केवलमेतस्य कुशलं विद्यते न पुनः सैन्यादिकमिति भावः ।

**(षो)** धौरेया इति धुरं वहन्ति धौरेया धूर्वहा अश्वाः । 'धुरो यड्ढकौ' विति ढक् । 'धुरीणधुर्यधौरेयधौरेयकधुरन्धराः । धूर्वहे' इति हेमचन्द्रः । किरीटिना अर्जुनेन । किमिति प्रश्ने ।

**(षौ)** मनोरथो मनोरथविषयीभूतस्य पुत्रादेर्निहतत्वादिति भावः । अत्रापीति क्वचिन्नास्ति आवश्यकं पुनरेतत् । समुच्चयस्य वक्तव्यत्वात् ।

**(षं)** आकुलं विविधदुःखाक्रान्तत्वादादित एव व्याकुलीभूतं मे हृदयं मनः अविस्पष्टकथितैः अविस्पष्टैः कथनैः । कथितैरिति नपुंसके भावे क्तः । अतः परं तदलं संभ्रमेणेति क्वचिदधिकम् । तत्र संभ्रमेण भीत्या अलम् इत्यर्थः । अशुभनिवेदनेऽहं कोपिष्यामीति

**सुन्दरकः**—जं देवो आणवेदि । अए ! देवस्स मउडमणिप्पहावेण अव-णीदा मे रणप्पहारवेअणा । ( इति साटोपं परिक्रम्य । ) सुणादु देवो । अत्थि दाणीं कुमालदुस्सासणवह—( यद्देव आज्ञापयति।अये ! देवस्य मुकुटमणिप्रभावेणापनीता मे रणप्रहारवेदना । श्रृणोतु देवः । अस्तीदानीं कुमारदुःशासनवध— । ) ( इत्यर्धोक्ते मुखमाच्छाद्य शङ्कां नाटयति । ) (ष:)

**सूतः**—सुन्दरक! कथय । कथितमेव दैवेन । (स)

**दुर्योधनः**—कथ्यताम् । श्रुतमस्माभिः ।

**सुन्दरकः**—(स्वगतम् ।) कधं! दुस्सासणवहो सुदो देवेण?। (प्रकाशम् । ) सुणादु देवो । अज्ज दाव कुमालदुस्सासणवहामरिसिदेण सामिणा अङ्गाराएण किदकुडिलभिउडीभङ्गभीसणललाडवट्टेण अविण्णादसंधाणमोक्खणिक्खित्तसर-धारावरिसेण अभिजुत्तो सो दुराआरो दुस्सासणवेरिओ मज्झमपण्डवो । (कथं!

---

माभूत्ते भीतिरिति भावः । अशेषतः साकल्येन । 'विश्वमशेषं कृत्स्न' मित्यमरः । अशेषपदं चात्र भावप्रधानम् । अपरेऽप्यत्र नानाविधाः पाठा अर्थे विशेषाभावान्न विचार्यन्ते ।

(ष:) यदिति । देवो राजा भवान् यदाज्ञापयति तत्करोमीति शेषः । अये इति आश्चर्ये । प्रहारवेदनाप्रशमादाश्चर्यम् । अये इति च क्वचिन्नास्ति । देवस्य राज्ञो भवतः । मुकुटमणिप्रभावेण मुकुटस्य किरीटस्य संबन्धिनां मणीनां रत्नानां प्रभावेण तेजसा। 'प्रभावः शान्तितेजसो' रिति मेदिनी । रणप्रहारवेदना रणे युद्धे ये प्रहाराः शस्त्राघातास्तज्जन्या व्रणा इति यावत् । तेषां संबन्धिनी वेदना । अत्र बाणव्रणवेदनेत्यपि पाठः स चाक्लिष्टत्वात्साधुः । साटोपं आटोपेनाभाषणावेशेन सहितं यथा तथा । 'आवेशाटोपसंरम्भा' इति त्रिकाण्ड-शेषः । अस्तीति क्रियाया वचनशेषगतेनाभियुक्त इत्यनेन संबन्धः । कुमारदुःशासनवधेति दुःशासनवधस्य दुर्योधनेनाविज्ञातत्वं संभावयतस्तत्कथनतो बिभ्यतो वचनविच्छेदः । मुख-माच्छाद्येति अप्रियकथनजन्यलज्जावशान्मुखस्याच्छादनम् । शङ्कां भीतिं नाटयति अभि-नयति । अत्र 'मुखमावृणोती' त्येतावानेव क्वचित्पाठः ।

(स) दैवेन प्रतिकूलेनेत्यर्थात् । कथितं, दैवस्य प्रतिकूलत्वादेवैवं संवृत्तमिति नैवं कथयतस्तवापराध इति भावः ।

दुःशासनवधः श्रुतो देवेन? । श्रृणोतु देवः । अद्य तावत्कुमारदुःशासनवधामर्षितेन स्वामिनाङ्गराजेन कृतकुटिलभ्रूकुटीभङ्गभीषणललाटपट्टेनाविज्ञातसंधानमोक्षनिक्षिप्तशरधारावर्षेणाभियुक्तः स दुराचारो दुःशासनवैरी मध्यमपाण्डवः । ) (खा)

**उभौ**:—ततस्ततः ।

**सुन्दरकः**—तदो देव! उहअबलमिलन्तदीप्पन्तकरितुरअपदादिसमुब्भूदधूलिणिअरेण पल्लुत्थतत्तग्गअघडासंघादेण अ वित्थरन्तेण अन्धआरेण अन्धीकिदं उहअबलम् । ण हु गगणतलं लक्खीअदि । ( ततो देव! उभयबलमिलद्दीप्यमानकरितुरगपदातिसमुद्भूतधूलिनिकरेण पर्यस्ततत्तद्गजघटासंघातेन च विस्तीर्यमाणेनान्धकारेणान्धीकृतमुभयबलम् । न खलु गगनतलं लक्ष्यते । ) (खि)

---

(खा) तावदिति वाक्यालङ्कारे । कुमारेति । कुमारो यो दुःशासनस्तस्य वधेन अमर्षितः संजातक्रोधः तेन । अमर्षित इति तारकादित्वादितच् । कृतेति । कृतः कुटिलाया भ्रूकुट्या भ्रुवो भङ्गो भेदो रोषाद्वक्रीभाव इति यावत् येन सः कृतकुटिलभ्रूकुटीभङ्गः तत एव च भीषणललाटपट्टः भीषणः ललाटपट्टः पट्टसदृशं विशालं ललाटं यस्य सः तेन । अतिमात्रमेव क्रुद्धेनेत्यर्थः । अविज्ञातेति न विज्ञातौ संधानं धनुषि योजनं मोक्षः मोचनं च ययोर्तौ यस्मिन्कर्मणि तद्यथा तथा निक्षिप्तं शत्रुषुप्रक्षिप्तं शरधारावर्षं बाणरूपधारामयी वृष्टिर्येन तथाभूतेन अङ्गराजेन कर्णेन कर्त्रा मध्यमपाण्डवः पाण्डुपुत्रेषु मध्यमो भीमः अभियुक्तः रुद्धः । 'अभियुक्तः परै रुद्धे' इति मेदिनी ।

(खि) उभयेति । उभययोः कौरवपाण्डवयोर्बलयोः संबन्धिनः मिलन्तः परस्परं संश्लिष्यन्तो ये दीप्यमाना रत्नालङ्कारादिवैशिष्ट्यात्प्रकाशमानाः करिणो गजास्तुरगा अश्वाः पदातयः पदाभ्यामतन्ति गच्छन्ति ते पादचारिणः सैनिकाश्च तेभ्यः समुद्भूतः संजातो यो धूलीनां निकरः समूहस्तेन । पर्यस्तेति।पर्यस्तः पतितो हतो वा यश्चतत्तेषां वीराणां गजघटानां गजयूथानां संघातः समूहस्तेन च । प्रतिवीरमेनेकासां गजघटानां विद्यमानतया घटासमूहेनेत्युक्तिः । 'पर्यस्तः पतिते हते' इति मेदिनी । विस्तीर्यमाणेन विस्तरं प्राप्यमाणेन विस्तरं गच्छता वाऽन्धकारेण अन्धीकृतम् अन्धतामिव नीतम् । न गगनतलं आकाशतलं लक्ष्यते दृश्यते अदृश्यतेत्यर्थः । वर्तमानसामीप्ये लट् । गगनतलमपि न लक्ष्यते कुतः पुनरन्यदिति भावः । अत्र भुवनतलमित्यपि क्वचित्पाठः । तत्तद्गजघटेत्यत्र तत्तदिति क्वचिन्नास्ति । आवश्यकं पुनरेतत् । घटानां हि समूह एतेनोपपादितो भवतीति ।

**उभौ**—ततस्ततः ।

**सुन्दरकः**—तदो देव ! दूराकड्ढिअधणुग्गुणाच्छोडणटङ्कारेण गम्भीरभीसणेण जाणीअदि गज्जिदं पलअजलहरेण त्ति । (ततो देव ! दूराकृष्टधनुर्गुणाच्छोटनटङ्कारेण गम्भीरभीषणेन ज्ञायते गर्जितं प्रलयजलधरेणेति ।) (सी)

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—तदो देव ! दोहिंणं वि ताणं अण्णोण्णसीहणादगज्जिदपिसुणाणं विविहपरिमुक्कप्पहरणाहदकवअसंगलिदजलणविज्जुच्छडाभासुरं गम्भीरत्थणिदचापजलहरं प्पसरन्तसरधारासहस्सवरिसं जादं समलदुद्दिणम् । (ततो देव ! द्वयोरपि तयोरन्योन्यसिंहनादगर्जितपिशुनयोर्विविधपरिमुक्तप्रहरणाहतकवचसंगलितज्वलनविद्युच्छटाभासुरं गम्भीरस्तनितचापजलधरं प्रसरच्छरधारासहस्रवर्षि जातं समरदुर्दिनम् ।) (सु)

---

(सी) दूरेति । दूरं अत्यन्तमाकृष्टस्य धनुर्गुणस्य यदाच्छोटनं बाणमोचनार्थं आच्छेदनं तेन यष्टङ्कारः शब्दविशेषः तेन । कीदृशेन टङ्कारेण गम्भीरभीषणेन गम्भीरो गहनश्चासौ भीषणोभयङ्करस्तेन । प्रलयसंबन्धिना जलधरेण मेघेन कर्त्रा गर्जितं गर्जनं कृतमिति ज्ञायते अज्ञायतेत्यर्थः । लोकैरिति शेषः । धनुष्टङ्कारानाकर्णयद्भिः प्रलयघनगर्जितमेवेदमिति मतमितिभावः । टङ्काराणां प्रलयजलधरगर्जितसादृश्यात्तत्र तद्भ्रान्तिः समुत्पन्नेति भ्रान्तिमानलङ्कारः 'साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान्प्रतिभोत्थिता ।' इतिलक्षणात् । दूरमित्यस्यात्यन्तार्थकत्वं 'नेत्रे दूरमनञ्जने' इत्यादिषु द्रष्टव्यम् । व्याख्यातं हि 'दूरमत्यन्तमनञ्जने' इति रामतर्कवागीशेन । आच्छोटनेत्यत्र च चुटछुट च्छेदन इत्यत आङ्पूर्वाल्ल्युट् । तत एव चाच्छेदनमित्यर्थो लभ्यते । अत्र आस्फालनमित्यपि क्वचित्पाठः। स च साधुः । तच्च धनुर्गुणस्य दूरमाकृष्य तथा मोचनं यथा टङ्कारनिष्पत्तिः । आस्फालनशब्द एव चैवंविधेऽर्थे भूयसा प्रयुज्यमानो दृष्टः। क्वचित् पुनः..........टङ्कारगम्भीरभीषणेनान्धकारेणेति पाठः । तत्रान्धकारे जलधरभ्रान्तिष्टङ्कारे च गर्जितभ्रम इति बोद्धव्यम् । ज्ञायत इत्युक्तेश्च नेयमुत्प्रेक्षा ।

(सु) अन्योन्येति । अन्योन्ययोः परस्परयोः सिंहनाद इव सिंहस्य ध्वनिरिव यद्गर्जितं गर्जनं तदेव पिशुनं सूचकं ज्ञापकमित्यर्थः ययोस्तथाभूतयोः । अन्धकारेण दिशां व्याप्ततया सिंहनाद एवान्योन्ययोर्ज्ञानसाधनमासीदितिभावः । तयोर्द्वयोर्भीमकर्णयोः । षष्ठ्याः

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—तदो देव ! एदास्सिं अन्तरे जेठ्ठस्स भादुणो परिहवसङ्किणा धणंजएण वज्जणिग्घादणिग्घोसविसमरसिदधअग्गाठ्ठिदमहावाणरो तुरङ्गमसंवाहणव्वापिदवासुदेवसङ्खचक्कासिगदालञ्छिदचउब्बाहुदण्डदुद्दंसणो आपूरिअपञ्चजण्णदेअदत्ततारसिदप्पडिरवभरिददसदिसामुहकुहरो धाविदो तं उद्देसं रहवरो। (ततो देव ! एतस्मिन्नन्तरे ज्येष्ठस्य भ्रातुः परिभवशङ्किना धनञ्जयेन वज्रनिर्घातनिर्घोषविषमरसितध्वजाग्रस्थितमहावानरस्तुरङ्गमसंवाहनव्यापृतवासुदेवशङ्खचक्रासिगदालाञ्छितचतुर्बाहुदण्डदुर्दर्शन आपूरितपाञ्चजन्यदेवदत्ततारसितप्रतिरवभरितदशदिशामुखकुहरो धावितस्तमुद्देशं रथवरः । (सू)

---

समरदुर्दिनमित्यनेन संबन्धः । विविधानि नानाप्रकाराणि परिमुक्तानि परस्परयोरुपरि क्षिप्तानि यानि प्रहरणानि ( प्रहारसाधनभूतानि ) शस्त्राणि तैराहतानि यानि कवचानि तेभ्यः संगलितो निष्पतितो ज्वलनोऽग्निरेव विद्युच्छटा विद्युतां समूहस्तया भासुरं दीप्तिशीलं प्रकाशवदितियावत् । गम्भीरेति । गम्भीरं गहनं स्तनितं गर्जितं येषां तथाभूताश्चापा एव जलधरा यत्र तथाभूतम् । गम्भीरस्तनितत्वमेव चापेषु जलधरत्वारोपे हेतुः । प्रसरदिति । प्रसरन्तो वेगेन गच्छन्तः शरा एव धारासहस्राणि तानि वर्षितुं शीलं यस्य तथाभूतम् । समरदुर्दिनं संग्रामरूपा वृष्टिः । 'घनान्धकारे वृष्टौ च दुर्दिनं कवयो विदुः ।' इतिसाज्ञः । समस्तवस्तुविषयं रूपकमलङ्कारः ।

(सू) ततः समरदुर्दिनप्रवृत्त्यनन्तरं एतस्मिन् अन्तरे अवसरे । 'अवसरमध्यात्मसदृशेषु' इत्यन्तरशब्दार्थेषु मेदिनी । ज्येष्ठस्य भ्रातुः भीमस्य । परिभवशङ्किना पराभवमाशङ्कमानेन । भीमस्येदानीं पराभवो भविष्यतीति शङ्कमानेनेत्यर्थः । धनञ्जयेनार्जुनेन कर्त्रा रथवर आत्मनो रथश्रेष्ठः तं कर्णभीमयुद्धाधिष्ठानभूतं उद्देशं प्रदेशं धावितः वेगेन गमितः । 'सर्वेऽपिगितायां गतौ धावादेशमिच्छन्ति' इति काशिका । कीदृशो रथवरः ? वज्रस्य, निर्घातस्य वायुनाभिहतस्य भूमौ पततोवायोश्च यो निर्घोषो ध्वनिः तद्वद्विषमं दारुणं रसितं गर्जनं यस्य तथाभूतः ध्वजाग्रस्थितः महान् वानरो हनुमान् यत्र तथाभूतः । 'यदन्तरीक्षे बलवान्मारुतो मारुताहतः । पतत्यधः स निर्घातो जायते वायुसंभवः ।' इति ज्योतिस्तत्त्वम् । 'स्वाननिर्घोषनिर्ह्रादे' तिध्वनिपर्यायेष्वमरः । 'रसितं पुनः । रुतस्तनित ( गर्जित ) योः क्लीब' मिति मेदिनी । पुनः कीदृशः ? तुरङ्गमाणां अश्वानां संवाहने सम्यक् अभीष्टस्थलं प्रति प्रापणे विषये व्यापृतो व्यापारवान् यो वासुदेवः वसुदेवपुत्रः श्रीकृष्णः तस्य ये

**दुर्योधनः**—ततस्ततः।

**सुन्दरकः**—तदो भीमसेणधणंजएहिं अभिजुत्तं पिदरं पेक्खिअ ससंभमं विअलिअं अवधूणिअ रअणसीसअं आकण्णाकड्ढिदकठिणकोदण्डजीओ दाहिणहत्तुक्खित्तसरपुङ्खविघट्टणतुवराइदसारहीओ तं देसं उवगदो कुमालविससेणो। ( ततो भीमसेनधनंजयाभ्यामभियुक्तं पितरं प्रेक्ष्य ससंभ्रमं विगलितमवधूय रत्नशीर्षकमाकर्णाकृष्टकठिनकोदण्डजीवो दक्षिणहस्तोत्क्षिप्तशरपुङ्खविघट्टनत्वरितसारथिकस्तं देशमुपगतः कुमारवृषसेनः। ) (से)

**दुर्योधनः**—( सावष्टम्भम्। ) ततस्ततः। (सै)

**सुन्दरकः**—तदो अ देव! तेण आअच्छन्तेण एव्व कुमालविससेणेण विदलिदासिलदासामलसिणिद्धपुङ्खेहिं किसणवण्णेहिं साणसिलाणिसिदसामल-

---

शङ्खः, चक्रं, असिः खड्गः, गदा च तैर्लाञ्छिताश्चिह्निताश्चत्वारो बाहुदण्डा दण्डसदृशा बाहवः तैर्दुर्दर्शनः दुष्प्रेक्ष्यः। यद्यप्यायुधान्येतानि कर एव धार्यन्ते तथापि करधृतैरप्येतैर्बाहवश्चिह्निता भवन्त्येवेत्यत उक्तं लाञ्छितेत्यादि। पुनः कीदृशः? आपूरितयोः आध्मातयोः पाञ्चजन्यदेवदत्तयोः एतन्नाम्नोः श्रीकृष्णार्जुनशङ्खयोस्तारतरस्य अतिशयेन तारस्य रसितस्य ध्वनेः प्रतिरवेण प्रतिध्वनिना भरितानि व्याप्तानि दशानां दिशानां मुखकुहराणि येन तथाभूतः। 'आपं चैव हलन्तानामि' ति दिक्शब्दादाप्। 'शंखो लक्ष्मीपतेः पाञ्चजन्य' इत्यमरः। 'देवदत्तं धनञ्जयः' इति भगवद्गीतातश्च देवदत्त इत्यर्जुनशङ्खसंज्ञेति विज्ञायते।

(से) भीमसेनधनञ्जयाभ्यां भीमार्जुनाभ्यां कर्तृभूताभ्यां अभियुक्तं रुद्धं पितरं कर्णं प्रेक्ष्य कुमारवृषसेनः बालो वृषसेन एतन्नामा कर्णपुत्रः विगलितं संभ्रमवशाच्छिरसः स्रस्तं रत्नशीर्षकं रत्नमयं शिरस्त्राणं अवधूय त्यक्त्वा दूरतःप्रक्षिप्येत्यर्थः। 'शिरस्त्राणे तु शीर्षण्यं शिरस्कं शीर्षकं च तत्।' इति हैमः। तं भीमार्जुनकर्णाधिष्ठितं प्रदेशं उपगतः। कीदृशः कुमारवृषसेनः? आकर्णं कर्णपर्यन्तं आकृष्टा कठिनस्य कोदण्डस्य धनुषः जीवा ज्या येन तथाभूतः। पुनः कीदृशः? दक्षिणेन हस्तेन उत्क्षिप्ताः तूणीरादुद्धृता ये शरा बाणास्तेषां पुङ्खैः ज्यायां बाणसंयोजनोपयुक्ताभिः कर्तरीभिः यद्विघट्टनं विशेषेण चालनं त्वरस्वेति संज्ञाकरणार्थं तेन त्वरितःसारथिर्यस्य तथाभूतः।'कर्तरी पुङ्ख उच्यते' इति हलायुधः।

(सै) सावष्टम्भं सगर्वम्। आत्मनः सख्युः कर्णस्यात्मजः शूरतम इति ज्ञानाद्गर्वः।

सल्लुबन्धेहिं कुसुमिदो विअ तरू मुहुत्तएण सिलीमुहेहिं पच्छादिदो धणंजअस्स रहवरो । (ततश्च देव! तेनागच्छतैव कुमारवृषसेनेन विदलितासिलताश्यामलस्निग्धपुङ्खैः कठिनकङ्कपत्रैः कृष्णवर्णैः शाणशिलानिशितश्यामलशल्यबन्धैः कुसुमित इव तरुर्मुहूर्तकेन शिलीमुखैः प्रच्छादितो धनंजयस्य रथवरः ।) (सो)

उभौ:—(सहर्षम् ।) ततस्ततः । (सौ)

**सुन्दरकः**—तदो देव! तिक्खविक्खित्तणिसिदभल्लबाणवरिसिणा धणंजएण ईसि विहसिअ भणिदम्—अरे रे विससेणे! पिदुणो वि दाव दे ण जुत्तं मह कुविदस्स अभिमुहं ठादुम् । किं उण भवदो बालस्स । ता गच्छ । अवरेहिं कुमारेहिं आओधेहि त्ति । एव्वं वाअं णिसमिअ गुरुअणाहिक्खेवेण उद्दीविदकोवोवरत्तमुहमण्डलविअम्भिअभिउडीभङ्गभीसणेण चावधारिणा कुमारविससेणेण मम्मभेदएहिं परुसविसमेहिं सुदिवहकिदप्पणएहिं णिब्भच्छिदो गण्डीवी बाणेहिं ण उण दुट्ठवअणेहिं । (ततो देव! तीक्ष्णविक्षिप्तनिशितभल्लबाणवर्षिणा धनंजयेनेषद्विहस्य भणितम्—अरे रे वृषसेन! पितुरपि तावत्ते न युक्तं मम कुपितस्याभिमुखं स्थातुम् । किं पुनर्भवतो बालस्य । तद्गच्छ । अपरैः कुमारैर्युध्यस्वेति । एवं वाचं निशम्य गुरुजनाधिक्षेपेणोद्दीपितकोपोपरक्तमुखमण्डलविजृम्भितभ्रुकुटीभङ्गभीषणेन चापधारिणा कुमारवृषसेनेन मर्मभेदकैः परुषविषमैः श्रुतिपथकृतप्रणयैर्निर्भर्त्सितो गाण्डीवी बाणैर्न पुनर्दुष्टवचनैः ।) (सं)

---

**(सो)** आगच्छता आरब्धागमनेनैव। एतेन पाटवातिशयो द्योत्यते । कुमारवृषसेनेन कर्त्रा । शिलीमुखैर्भृङ्गैरिव शिलीमुखैः शिली शल्यं मुखेऽग्रे येषां तैर्बाणैः करणभूतैः । कुसुमितः संजातकुसुमः । तारकादित्वादितच् । धनंजयस्य रथवरः प्रच्छादितः प्रकर्षेणावृतः । 'शिलीमुखोऽलौ बाणे च' इति हैमानेकार्थः । कीदृशैः शिलीमुखैः? विदलिता विपाटिता इति यावत् या असिलता विलोलतया लतासदृशा असयः तद्वत् श्यामलाः स्निग्धा मसृणाश्च पुङ्खाः कर्तर्यो येषां तैः । कर्तर्या दलद्वयविशिष्टतया विपाटितासिलतासादृश्यम् । दलविशरण इत्यतो विपूर्वाण्णिजन्तात् क्तः । घटादित्वान्न वृद्धिः ।

**(सौ)** सहर्षमिति । वृषसेनविक्रमश्रवणाद्धर्षः ।

**(सं)** तत इति । तीक्ष्णेति तीक्ष्णं परुषं विक्षिप्तं विक्षेपो येषां तथाभूता निशितास्तेजिताः शाणघृष्टा इत्यर्थः ये भल्लसंज्ञका बाणास्तान् वर्षितुं शीलं यस्य तथाभूतेन।ईषत् किंचि-

**दुर्योधनः**—साधु वृषसेन ! साधु । सुन्दरक ! ततस्ततः ।

**सुन्दरकः**—तदो देव ! णिसिदसराभिघादवेअणोवजादमण्णुणा किरीडिणा चण्डगण्डीवजीआसद्दणिज्जिदवज्जणिग्घादघोसेण बाणणिपडणपडिसिद्धदंसणप्पसरेण प्पत्थुदं सिक्खाबलाणुरूवं किं वि अच्चरिअम् । ( ततो देव ! निशितशराभिघातवेदनोपजातमन्युना किरीटिना चण्डगाण्डीवजीवाशब्दनिर्जितवज्रनिर्घातघोषेण बाणनिपतनप्रतिषिद्धदर्शनप्रसरेण प्रस्तुतं शिक्षाबलानुरूपं किमप्याश्चर्यम् । ) (स:) ...

---

द्विहस्य हसित्वा । उत्तमप्रकृतित्वात् स्मितं कृत्वेत्यर्थः । उक्तं हि विश्वनाथेन 'स्मितहसिते ज्येष्ठानाम्' इति । वृषसेनस्यात्मबलानभिज्ञताप्रदर्शनाय स्मितम् । अरेरे इति सावज्ञामन्त्रणे। ते पितुः कर्णस्यापि तावदित्यवधारणे निश्चयेनेत्यर्थः । मम अभिमुखं संमुखं यथा तथा स्थातुं न योग्यम् । हीनबलत्वादिति भावः । बालस्येति प्रतिद्वन्द्विभावेऽत्यन्तानर्हत्वं द्योत्यते । कुमारैरिति समानवयसामेव प्रतिभटभावस्यौचित्यादिति भावः । कुमारैरिति सह पदस्य गम्यमानत्वात्तृतीया । इति भणितं उक्तम् । एवं ईदृशीं वाचमर्जुनोक्तिं निशम्य श्रुत्वा । गुरुजनस्य पितुरधिक्षेपेणार्जुनकृतया निन्दया करणभूतया । उद्दीपितः अत्यन्तमुपचितो यः कोपस्तेनोपरक्तं ग्रस्तं जनितमुखविकारतया व्याप्तमित्यर्थः यन्मुखमण्डलं मुखबिम्बं तत्र विजृम्भितेन अभिव्यक्तेन भ्रुकुटिभङ्गेन भ्रूभेदेन भीषणो भीतिजनकस्तेन । अत्र मण्डलपदं मुखस्य चन्द्रसादृश्यमुपरक्तपदं च कोपस्य राहुसादृश्यमभिव्यञ्जयति । 'सोपप्लवोपरक्तौ द्वा' विति 'बिम्बोऽस्त्री मण्डलं त्रिष्वि' ति चामरः । 'विजृम्भितं तु चेष्टायां क्लीबं त्रिषु विकस्वरे' इति मेदिनी । परुषा रूक्षा विषमा दारुणाश्च तैः । श्रुतिपथे श्रोत्रमार्गे कृतः प्रणयोऽनुरागो यैस्तथाभूतैरिवेत्युत्प्रेक्षा आकर्णं कृष्ट्वा मुच्यमानत्वादियमुत्प्रेक्षा । बाणैरेव करणभूतैर्निर्भर्त्सितस्तर्जितः न पुनर्दुष्टवचनैर्दुष्टभाषणैः । क्रिया केवलमुत्तरं वीराणां नैव पुनर्वल्गितमिति भावः । एतेनार्जुनापेक्षया वृषसेनस्योत्कर्षो द्योत्यते । गाण्डीवी गाण्डीवसंज्ञकं धनुरस्यास्ति तथाभूतोऽर्जुनः ।

(स:) निशितेति । निशितानां शाणघृष्टानां शराणामभिघातैः प्रहारैर्या वेदना दुःखं तयोपजात उत्पन्नो मन्युः कोपो यस्मिंस्तेन । 'वेदना ज्ञानदुःखयोः' इति मेदिनी । 'मन्युर्दैन्ये क्रतौ क्रुधी' त्यमरः। चण्डेति । चण्डस्य भीषणस्य गाण्डीवस्य नाम धनुषः जीवाया ज्यायाः शब्देन निर्जितः अधःकृत इति यावत् वज्रस्य निर्घातस्य च घोषो ध्वनिर्येन तथाभूतेन। तथा कृतो गाण्डीवगुणध्वनिर्यथाऽस्य पुरस्तात्क्षुद्र इव वज्रनिर्घातघोषोऽवभासेतेति भावः । बाणानां निपतनेन निपातक्रियया प्रतिषिद्धः प्रतिबद्ध इति यावत् दर्शनस्य

**दुर्योधनः**—( साकूतम् । ) ततस्ततः । (ह) ।

**सुन्दरकः**—तदो देव! तं तारिसं पेक्खिअ सत्तुणो समरव्वावारचउरत्तणं अविभाविदतूणीरमुहधणुग्गुणगमणागमणसरसंधाणमोक्खचडुलकरअलेण कुमालविससेणेण वि सविसेसं पत्थुदं समलकम्म । ( ततो देव! तत्तादृशं प्रेक्ष्य शत्रोः समरव्यापारचतुरत्वमविभाविततूणीरमुखधनुर्गुणगमनागमनशरसंधानमोक्षचटुलकरतलेन कुमारवृषसेनेनापि सविशेषं प्रस्तुतं समरकर्म । ) (हा)

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—तदो देव ! अत्थन्तरे विमुक्कसमरव्वावारो मुहुत्तविस्सामिदवेराणुबन्धो दोणं वि कुरुराअपण्डवबलाणं 'साहु कुमालविससेण ! साहु ' त्ति किदकलअलो वीरलोओ अवलोइदुं पउत्तो । ( ततो देव ! अत्रान्तरे विमुक्तसमरव्यापारो मुहूर्तविश्रमितवैरानुबन्धो द्वयोरपि कुरुराजपाण्डवबलयोः 'साधु कुमारवृषसेन ! साधु ' इति कृतकलकलो वीरलोकोऽवलोकयितुं प्रवृत्तः ।) (हि)

---

दृष्टः प्रसरः स्वविषये प्रवेशो येन तथाभूतेन । अर्जुनस्य धनुषो निपतितैर्बाणैर्दशानामपि दिशानां छन्नतया न किमपि चक्षुषा द्रष्टुमपार्यतेति भावः । शिक्षाबलानुरूपं शिक्षाया धनुर्वेदाध्ययनस्य बलस्य सामर्थ्यस्य चानुरूपं योग्यं किमपि अनिर्वचनीयम् । आश्चर्यमाश्चर्योत्पादकं कर्म । हेतुहेतुमतोरभेदोपचारात् ।

(ह) साकूतं नैतद्गणयिष्यति कुमारो वृषसेन इति किमेतेनाडम्बरेणेत्यभिप्रायेण सहितं यथातथा ।

(हा) तादृशं तथाविधं तत् शत्रोरर्जुनस्य समरव्यापारचतुरत्वं युद्धकर्मचातुर्यं प्रेक्ष्य दृष्ट्वा न विभावितानि लक्षितानि तूणीरमुखे तूणीरस्य इषुधेर्मुखे धनुर्गुणे ज्यायां च गमनागमनानि शराणामुद्धरणार्थं धनुर्गुण योजनार्थं च प्रवृत्तानि यस्य तथाभूतं शराणां संधाने ज्यायां योजने मोक्षे शत्रौ प्रक्षेपणे च चटुलं चपलं करतलं यस्य तथाभूतेन । सविशेषं विशेषणाधिक्येन सहितं यथा तथा । पूर्वतोऽप्यपेक्षयाधिकमित्यर्थः । समरकर्मयुद्धकर्म प्रस्तुतं आरब्धम् । प्रपूर्वकः स्तौतिरारम्भे ।

(हि) अत्रान्तरे अस्मिन्नवसरे विमुक्तः अर्जुनवृषसेनयोः समरकर्मदर्शनार्थं त्यक्तः समरव्यापारो युद्धकर्म येन तथाभूतः । मुहूर्तं अल्पं कालं विश्रामितः विरमितः वैरानुबन्धः

**दुर्योधनः**—(सविस्मयम् ।) ततस्ततः ।

**सुन्दरकः**—तदो अ देव! अवहीरिदसअलराअधाणुक्कचक्कपराक्कमसालिणो सुदस्स तहाविहेण समलकम्मालम्भेण हरिसरोसकरुणासंकडे वट्टमाणस्स सामिणो अङ्गराअस्स णिवडिआ सरपद्धई भीमसेणे बप्फपज्जाउला दिट्ठी कुमालविससेणे । (ततश्च देव! अवधीरितसकलराजधानुष्कचक्रपराक्रमशालिनः सुतस्य तथाविधेन समरकर्मारम्भेण हर्षरोषकरुणासंकटे वर्तमानस्य स्वामिनोऽङ्गराजस्य निपतिता शरपद्धतिर्भीमसेने बाष्पपर्याकुला दृष्टिः कुमारवृषसेने । ) (ही)

**दुर्योधनः**—(सभयम् ।) ततस्ततः । (हु)

**सुन्दरकः**—तदो अ देव! उभअबलप्पउत्तसाहुक्कारामरिसिदेण गण्डीविणा तुरगेसु सारहिं वि रहवरे धणुं वि जीआइं वि णालिन्दलञ्छणे सिदादवत्ते वि अ व्वावारिदो समं सिलीमुहासारो ।(ततश्च देव! उभयबलप्रवृत्तसाधुकारामर्षितेन गाण्डीविना तुरगेषु सारथावपि रथवरे धनुष्यपि जीवायामपि नरेन्द्रलाञ्छने सितातपत्रेऽपि च व्यापारितः समं शिलीमुखासारः । ) (हू)

---

परस्परविरोधानुवृत्तिर्येन तथाभूतः । कुरुराजो दुर्योधनश्च पाण्डवाश्च तयोर्बलयोः । कुरुराजस्याभ्यर्हितत्वात्पूर्वनिपातः । द्वयोरपि सम्बन्धी वीरलोकः वीरजनसमूह इत्यर्थः । जातावेकवचनम् । साधु कुमार वृषसेन साधु इत्येवं कृतः कलकलो येन तथाभूतः सन् अवलोकयितुं समरकर्म द्रष्टुं प्रवृत्तः ।

(ही) अवधीरितेति । अवधीरितमवज्ञातं सकलं राज्ञां धानुष्काणां धनुः प्रहरणं येषां तेषां धनुर्धराणां वीराणां च चक्रं समूहो येन तथाविधेन पराक्रमेण शालते शोभतेऽसौ तस्य । धनुःशब्दात् 'प्रहरणमि'ति ठकि तस्य 'इसुसुक्तान्तादि'ति कः । 'तूणी धनुर्भृद्धानुष्क' इति हैमः । सुतस्य वृषसेनस्य । तथाविधेन तादृशेन । समरकर्मणः आरम्भेण । हर्षस्य रोषस्य करुणायाश्च संकटे संकुलीभावे वर्तमानस्य । पुत्रस्य विक्रमदर्शनाद्धर्षः । ईदृशे कुमारेऽपि प्रक्षिप्यन्त निर्दयं शराः शत्रुणेति रोषः । अर्जुनशरनिपातासहिष्णुत्वं च पुत्रस्य विभावयतः करुणा । भीमसेने शरपद्धतिर्बाणपङ्क्तिः । 'पद्धतिः पङ्क्तिवर्त्मनोः ' इतिमेदिनी । बाष्पपर्याकुला बाष्पावृता कष्टं बतार्जुनबाणपातवर्ती कुमार इति चिन्तयतो बाष्पाकुलत्वं दृष्टेः ।

(हु) सभयमिति । कर्णदृष्टेर्बाष्पाकुलतया वृषसेनस्यानिष्टमाशङ्कमानस्य भयम् ।

(हू) उभयेति । उभयाभ्यां बलाभ्यां सैन्याभ्यां प्रवृत्तो यः साधुकारो वृषसेनविषयकः साधुवादः तेन परिशेषादेवात्मनोऽप्रशंसाद्योतकेन अमर्षितः संजातक्रोधः

**दुर्योधनः**—(सभयम् ।) ततस्ततः ।

**सुन्दरकः**—तदो देव ! विरहो लूणगुणकोदण्डो परिब्भमणमेत्तव्वावारो मण्डलाइं विरअइदुं पउत्तो कुमालविससेणो । ( ततो देव! विरथो लूनगुणकोदण्डः परिभ्रमणमात्रव्यापारो मण्डलाग्रेण विचारितुं प्रवृत्तः कुमारवृषसेनः ।) (हे)

**दुर्योधनः**—(साशङ्कम् ।) ततस्ततः ।

**सुन्दरकः**—तदो देव ! सुदरहविद्धंसणामरिसिदेण सामिणा अङ्गराएण अगणिदभीमसेणाभिजोएण पडिमुक्को धणंजअस्स उवरि सिलीमुहासारो । कुमालो वि परिजणोवणीदं अण्णं रहं आरुहिअ पुणो वि पउत्तो धणंजएण सह आओधेदुम् । ( ततो देव! सुतरथविध्वंसनामर्षितेन स्वामिनाङ्गराजेनागणितभीमसेनाभियोगेन परिमुक्तो धनंजयस्योपरि शिलीमुखासारः । कुमारोऽपि परिजनोपनीतमन्यं रथमारुह्य पुनरपि प्रवृत्तो धनंजयेन सहायोद्धुम् ।) (है)

---

तेन । गाण्डीविना अर्जुनेन । जीवायां धनुर्गुणे । 'मौर्वी जीवा गुणो गव्या ' इति हैमः । नरेन्द्रलाञ्छने राजचिह्नभूते । ' लाञ्छनं च चिह्न' मित्यमरः । सितातपत्रे श्वेते च्छत्रे । समं युगपत् । शिलीमुखासारः शराणां धारासंपातः । व्यापारितः कृतो योजित इतियावत् 'धारासंपात आसार' इत्यमरः ।

(हे) विरथः विनष्टो रथो यस्य तथाभूतः । लूनगुणकोदण्डः लूनः गुणो मौर्वी कोदण्डं धनुश्च यस्य तथाभूतः । पूर्वत्र धनुषि च गुणे च पृथक्पृथक्शरव्यापारणोक्तेर्लूनो गुणो यस्य तथाभूत कोदण्डं यस्येति नार्थः । परिभ्रमणमात्रं केवलं परिभ्रमणमेव व्यापारः कर्म यस्य तथाभूतः। रथादीनामभावादेकत्रावस्थातुमशक्यत्वादितिभावः। मण्डलानि मण्डलाकारान् गतिविशेषान् विरचयितुं कर्तुं प्रवृत्तः । विधीयमानैर्हि मण्डलैः शक्यते शरपातत आत्मा परित्रातुमिति। मण्डलाग्रेण विचारतुमिति क्वचित्पाठः। तत्र मण्डलाग्रेण तरवारिणा सहायभूतेनोपलक्षितः विचारितुं संचरितुं प्रवृत्त इत्यर्थः। 'तरवारिर्मण्डलाग्रम्' इतिहलायुधः ।

(है) सुतेति । सुतस्य पुत्रस्य वृषसेनस्य रथस्य विध्वंसनेनामर्षितः संजातक्रोधः तेन । अगणितभीमसेनाभियोगेन न गणितः आदृतः भीमसेनस्य अभियोगो रोधनव्यापारो येन तथाभूतेन रुन्धन्तमपि भीमसेनं अनाद्रियमाणेनेत्यर्थः स्वामिना अङ्गराजेन कर्णेन कर्त्रा धनञ्जयस्योपरि शिलीमुखासारः बाणरूपा वेगशालिनीवृष्टिः । 'आसारः स्यात्प्रसरणे

**उभौ**—साधु वृषसेन! साधु । ततस्ततः ।

**सुन्दरकः**—तदो देव! भणिदं अ कुमालेण—'रे रे तादाहिक्खेवमुहल मज्झमपण्डव! मह सरा तुह सरीरं उज्झिअ अण्णस्सिं ण णिवडन्ति' त्ति। भणिअ सरसहस्सेहिं पण्डवसरीरं पच्छादिअ सिंहणादेण गज्जिदुं पउत्तो । (ततो देव! भणितं च कुमारेण—'रे रे ताताधिक्षेपमुखर मध्यमपाण्डव! मम शरास्तव शरीरमुज्झित्वान्यस्मिन्न निपतन्ति' इति । भणित्वा च शरसहस्रैः पाण्डवशरीरं प्रच्छाद्य सिंहनादेन गर्जितुं प्रवृत्तः । ) (ह्रो)

**दुर्योधनः**—(सविस्मयम् ।) अहो! बालस्य पराक्रमो मुग्धस्वभावस्याऽपि। ततस्ततः । (ह्रौ)

**सुन्दरकः**—तदो अ देव! तं सरसंपादं समवधुणिअ णिसिदसराभिघादजादमण्णुणा किरीटिणा गहीदा रहुच्छङ्गादो क्कणन्तकणअकिङ्किणीजालझङ्कारविराइणी मेहोवरोहविमुक्कणहत्थलणिम्मला णिसिदसामलसिणिद्धमुही विविहरअणप्पहाभासुरभीसणरमणिज्जदंसणा सत्ती विमुक्का अ कुमालाहिमुही । ( ततश्च देव! तं शरसंपातं समवधूय निशितशराभिघातजातमन्युना किरीटिना गृहीता रथोत्सङ्गात्क्कणत्कनककिङ्किणीजालझङ्कारविराविणी मेघोपरोधविमुक्तनभस्तलनिर्मला निशितश्यामलस्निग्धमुखी विविधरत्नप्रभाभासुरभीषणरमणीयदर्शना शक्तिर्विमुक्ता च कुमाराभिमुखी । ) (ह्रं)

---

वेगवृष्टौ सुत्सद्वले । ' इति मेदिनी । कुमारः वृषसेनः । परिजनोपनीतं परिजनेनानीतम् । आयोद्धुं युद्धं कर्तुम् । अत्र क्वचिदायोधितुमिति पाठः । तत्र चेट्चिन्त्यः । क्वचित्पुनः प्रवृत्तो धनञ्जयाभियोग इति पाठः । तत्र धनञ्जयस्याभियोगे रोधे प्रवृत्त इत्यर्थः ।

(ह्रो) रे रे इति सावज्ञसम्बोधने । ताताधिक्षेपमुखर तातस्य मत्पितुर्द्रोणस्य अधिक्षेपे निन्दायां मुखर वाचाट । मध्यमपाण्डव अर्जुन! इतीत्यस्य भणितमिति पूर्वेण संबन्धः । भणितम् उक्तम् । भणित्वेत्यतः परं यत्र नास्ति तत्र चकारोऽध्याहियते। सिंहनादेनेति धान्येन धनवानितिवत्तृतीया । सिंहनादरूपं गर्जनं कर्तुं प्रवृत्त इत्यर्थः । कुमार इति कर्तृपदं चात्र संबध्यते ।

(ह्रौ) अहो इत्याश्चर्ये । मुग्धस्वभावस्य मुग्धः अनभिज्ञतायुक्तः स्वभावो यस्य तथाभूतस्य ।

(ह्रं) शरसंपातं शराणामात्मनि पतनं अवधूय निराकृत्य । निशितेति निशितानां शाणितानां शराणामभिघातैः प्रहारैर्जातो मन्युः क्रोधो यस्मिंस्तथाभूतेन । शक्तिः आयुध-

**दुर्योधनः**—(सविषादम् ) अहह । ततस्ततः ।

**सुन्दरकः**—तदो देव ! पज्जलन्तीं सत्तिं पेक्खिअ विअलिअं अङ्गराअस्स-हत्थादो ससरं धणू हिअआदो वीरसुलहो उच्छाहो णअणादो बप्फसलिलं वि। रासिदं अ सिंहणादं विओदलेण । दुक्करं दुक्करं त्ति आक्कन्दिदं कुरुबलेण । (ततो देव ! प्रज्वलन्तीं शक्तिं प्रेक्ष्य विगलितमङ्गराजस्य हस्तात्सशरं धनुर्हृदयाद्वीरसुलभ उत्साहो नयनाद्बाष्पसलिलमपि । रसितं च सिंहनादं वृकोदरेण । दुष्करं दुष्करमित्याक्रन्दितं कुरुबलेन । ) (हं)

**दुर्योधनः**—(सविषादम् । ) ततस्ततः ।

**सुन्दरकः**—तदो देव ! कुमालविससेणेण आकण्णाकिट्ठणिसिदखुरप्पेण सुचिरं णिज्झाइअ अद्धपहे एव्व भाईरही विअ भअवदा विसमलोअणेण त्ति-धा किदा सत्ती । (ततो देव ! कुमारवृषसेनेनाकर्णाकृष्टनिशितक्षुरप्रेण सुचिरं निध्यायार्ध-पथ एव भागीरथीव भगवता विषमलोचनेन त्रिधा कृता शक्तिः । ) (हः)

---

विशेषः । रथोत्संगात् रथमध्यात् गृहीता कुमाराभिमुखी वृषसेनसंमुखीना मुक्ता विसृष्टा च कीदृशी शक्तिः ? क्वणन्त्यः शब्दायमाना याः कनककिङ्किण्यः सुवर्णमय्यः क्षुद्रघण्टिकाः तासां जालस्य समूहस्य झंकार एव विराव आक्रन्दः सोऽस्त्यस्यां तभूता । झङ्कारमिषेणा-क्रन्दन्तीत्यर्थः । मेघरूपो य उपरोध आवरणं तस्मात् विमुक्तं नभस्तलमिव निर्मला । उपरोध इति रुधिर् आवरण इत्यत उपपूर्वाद्धञ् । उपसर्गस्त्वत्र धात्वर्थमनुवर्तते । निशितं शाणघृष्टं तत एव च श्यामलं स्निग्धं मसृणं च मुखं यस्यास्तथाभूता । विविधानां रत्नानां दण्डादौ प्रत्युप्तानां प्रभाभिर्भासुरा दीपनशीला चासौ भीषणं प्राणापहारहेतुत्वाद्भयजनकं रमणीयं विविधरत्नभासुरतया रम्यं च दर्शनं यस्यास्तथाभूता ।

(हं) प्रज्वलन्तीं तेजसा प्रदीप्यन्तीं शक्तिं प्रेक्ष्य दृष्ट्वा । अत्र प्रेक्षमाणस्येत्याव-श्यकम् । दुर्घटो हि समानकर्तृकत्वाभावे क्त्वा । न चात्र समानकर्तृकत्वं घटते। अन्यो हि प्रेक्षणस्यान्यश्च विगलनस्य द्रष्टेति । अथवा प्रेक्ष्येति गम्योत्प्रेक्षयमिति कथं चित्समाधेयम्। तेन धनुरादीनामेवोभयत्रापि कर्तृत्वमिति। **सिंहनादं** सिंहस्य नाद इव नादो ध्वनिर्यस्मि-न्कर्मणि तद्यथा तथा रसितम् गर्जितम् । आक्रन्दितं सवैक्लव्यमुच्चैरुच्चारितम् ।

(हः) कुमारेति । आकर्णेति आकर्णं कर्णपर्यन्तं आकृष्टो यो निशितः शाणितः क्षुरप्रः ( क्षुर (वस्त्रा) इव पृणाति पूरयति वा च्छेदनक्रियां तथाभूतो बाणविशेष-

**दुर्योधनः**—साधु वृषसेन ! साधु । ततस्ततः ।

**सुन्दरकः**—तदो अ देव ! एदस्सिं अन्तरे कलमुहरेण वीरलोअसाहुवादेण अन्तरिदो समरतूरणिग्घोसो । सिद्धचालणगणविमुक्ककुसुमप्पअरेण पच्छादिदं समलङ्गणम् । भणिअं अ सामिणा अङ्गराएण—'भो वीर विकोदल ! असमत्तो तुह मह वि समलव्वावारो । ता अणुमण्ण मं मुहुत्तअम् । पेक्खावो दाव वच्छस्स तुह भादुणो अ धणुव्वेदसिक्खाचउरत्तणम् । तुह वि एदं पेक्खणिज्जं ' त्ति । ( ततश्च देव ! एतस्मिन्नन्तरे कलमुखरेण वीरलोकसाधुवादेनान्तरितः समरतूर्यनिर्घोषः । सिद्धचारणगणविमुक्तकुसुमप्रकरेण प्रच्छादितं समराङ्गणम् । भ-

---

स्तेन करणभूतेन । ' क्षरप्रतद्भलार्धेन्दुक्षीरोमुख्यास्तु तद्भिदः । ' इति हैमः । तद्भिदो बाणभेदाः । विषमलोचनेन त्रिनेत्रेण श्रीशङ्करेण । 'विषमनयनशङ्कू चन्द्रमौलिर्भगाली ' ति श्रीशिवपर्यायेषु हारावली । भागीरथी भगीरथस्येयं नदी गङ्गा। निध्याय दृष्ट्वा । निपूर्वो ध्यायतिर्दर्शने । अर्धपथे अर्धः पन्था अर्धपथस्तस्मिन् अर्धमार्गे । ऋक्पूरब्धूः पथामानक्ष इत्यः समासान्तः । त्रिधा कृता छिन्नेति यावत् । 'पुरा किल भगीरथो नाम भूपतिः कपिलशापदग्धानात्मनः पूर्वपुरुषान्समुद्धर्तुकामो भगवतीं देवसरितं भूमितलमवतारयितुमभीहमानस्तीव्रतरं तपश्चक्रे । तस्याः पुनः पततो भूतलविदारणं भविष्यतीति संभाव्य तद्वारणार्थं भगवन्तमिन्दुशेखरमभ्यर्थयामास। स चास्योपासनेन प्रसन्नः सावेगमपि विनिपतन्तीमिमां सलीलमेव शिरसि धारयामास। तत्र च बिन्दुश्रियमावहन्तीं विलीनप्रायामिमामालोक्य भगीरथः पुनरपि तपसा समाराध्य भगवन्तमुमारमणमस्या विनिर्गमं प्रार्थयामास । तेनापि शिरसो निष्क्रमितेयं त्रिधा बभूवेत्यारण्यकपर्वादिगता कथाऽत्रानुसंधेया । (तां दधार हरो राजन् गङ्गां गगनमेखलाम् । सा बभूव विसर्पन्ती त्रिधा राजन् समुद्रगा ॥ इति वनपर्वणि) अत्राकर्णाकृष्टेत्यत्राकर्णापूरितनिशितक्षुरप्रबाणैश्चिरं निर्धार्येत्यपि पाठः । स चापूरितशब्दस्याकर्षणार्थकत्वाभावादुपेक्ष्यः। निर्धार्येति तु प्राकृतानवगममूलम्। णिज्झाइअेति हि प्राकृतं तत्र 'ध्यत्योर्झ' इति झः, 'क्त्व इअ ' इति इअ इत्यादेशः, 'नोणः सर्वत्रे'ति च णकारः । तेन णिज्झाइअेति निध्यायेत्यस्यैव रूपमितिस्पष्टम् । निर्धार्येत्यस्यतु सर्वत्र रवलामिति रलोपे 'शेषादेशयोर्द्वित्त्वमनादावि'ति धकारस्य द्वित्वे 'वर्गेषु युजः पूर्व' इति पूर्वधकारदकारे च णिद्धारिअेति स्यात् । निर्ध्यात्वेतितु जगद्धरः । तत्रापि ल्यब्दुर्वारः । लक्ष्यभेदकामुकाश्च वीराः सुनिपुणमालोक्यैव तद्विध्यन्तीत्येतदपि न विस्मरणीयम् ।

णितं च स्वामिनाङ्गराजेन--'भो वीर वृकोदर! असमाप्तस्तव ममापि समरव्यापारः। तद-नुमन्यस्व मां मुहूर्तम्। प्रेक्षावहे तावद्वत्सस्य तव भ्रातुश्च धनुर्वेदशिक्षाचतुरत्वम्। तवा-प्येतत्प्रेक्षणीयम्' इति।) (ळ)

**दुर्योधनः**—ततस्ततः।

**सुन्दरकः**—तदो देव! विस्समिदाओधणव्वावारा मुहुत्तविस्समिदणिअ-वेराणुबन्धा दुवे वि पेक्खआ जादा भीमसेणाङ्गराआ। (ततो देव! विश्रमिता-योधनव्यापारौ मुहूर्तविश्रमितनिजवैरानुबन्धौ द्वावपि प्रेक्षकौ जातौ भीमसेनाङ्गराजौ।)(ळा)

---

(ळ) एतस्मिन् अन्तरे अस्यां वेलायाम्। 'वेलावारावसरः प्रस्तावः प्रक्रमोऽन्तरम्।' इति हैमः। कलमुखरेण कलेषु मधुरध्वनिषु मुखरः प्रधानः तेन। 'कलं शुके त्रिष्वजीर्णे नाटयोक्तमधुरध्वनौ' इति मेदिनी। 'यत्र कार्यविपत्तिः स्यान्मुखरस्तत्र हन्यत' इत्यादिषु प्रधानार्थो मुखरशब्दो द्रष्टव्यः। कलो मधुरो मुखरः कलकलस्वरूपत्वाद्वाचाटस-दृशश्चेत्यर्थ इति केचित्। अत्र कृतकलकलमुखर इत्यपि पाठः। तत्र कृतकलकलश्चासौ मुख-रश्चेत्यर्थः। कृतकलकलत्वं च मुखरत्वे हेतुः। वीरलोकसाधुवादेन वीरजनानां साधु इति वचनेन। वीरकृतया प्रशंसयेत्यर्थः। समरतूर्यनिर्घोषः संग्रामसंबन्धिनां तूर्याणां वाद्यानां निर्घोषो ध्वनिः। 'वाद्यं वादित्रमातोद्यं तूर्यं तूर' मिति हैमः। अन्तरितः तिरोधापितः। वाद्यध्वन्यपेक्षया बृहत्त्वात्साधुवादध्वनेर्विलुप्तो वाद्यध्वनिरिति भावः। सिद्धाश्चारणाश्च देवयोनि-विशेषाः तैर्विमुक्तेन विसृष्टेन कुसुमप्रकरेण पुष्पसमूहेन। 'प्रकरौघवारनिकरा' इति समू-हपर्यायेषु हैमः। प्रच्छादितं प्रकर्षेणाच्छादितम्। विक्रमातिशयप्रीतैः सिद्धाद्यैर्विमुक्ता वृष-सेने पुष्पवृष्टिरिति भावः। अनुमन्यस्व अनुमोदस्व। तावत्साकल्येन वत्सस्य वृषसेनस्य तव भ्रातुरर्जुनस्य च धनुर्वेदशिक्षया अस्त्रविद्याध्ययनेन चतुरत्वं कौशलम्। यद्धनुर्वेदाध्ययनतः प्राप्तं कौशलं तदित्यर्थः। प्रेक्षावहे पश्यावः। प्रेक्ष इत्युच्यतां, कुतः प्रेक्षावहे इति माम-पि क्रोडीकृत्योक्तिरित्यत आह। तवापीति। प्रेक्षणीयं प्रेक्षणार्हम्। तत एव च प्रदीय-तामनुमतिरितिभावः। इतीत्यस्य भणितमित्यनेन संबन्धः।

(ळा) विश्रमितेति विश्रमितौ विरमित आयोधनव्यापारो युद्धकर्म याभ्यां तौ। 'युद्धमायोधनं जन्यम्' इत्यमरः। मुहूर्तमल्पकालं विश्रमितो विरामितस्त्यक्त इति यावत् निजः स्वीयो वैरानुबन्धो विद्वेषानुवृत्तिर्याभ्यां तथाभूतौ। भीमसेनाङ्गराजौ इत्येतौ द्वावपि प्रेक्षकौ द्रष्टारौ जातौ।

**दुर्योधनः**—( साभिप्रायम्। ) ततस्ततः।

**सुन्दरकः**—तदो अ देव! सत्तिखण्डणामरिसिदेण गण्डीविणा भणिदम्—'अरे रे दुज्जोहणप्पमुहा! ( ततश्च देव! शक्तिखण्डनामर्षितेन गाण्डीविना भणितम्—'अरे रे दुर्योधनप्रमुखाः! ) ( इत्यर्धोक्ते लज्जां नाटयति। ) (ळि)

**दुर्योधनः**—सुन्दरक! कथ्यताम्। परवचनमेतत्। (ळी)

**सुन्दरकः**—सुणादु देवो। 'अरे दुज्जोहणप्पमुहा कुरुबलसेणाप्पहुणो! अविणअणोअण्णहार कण्ण! तुह्मेहिं मह परोक्खं बहुहिं महारहेहिं पडिवारिअ एआई मह पुत्तओ अहिमण्णू व्वावादिदो। अहं उण तुह्माणं पेक्खन्ताणं एव्व एदं कुमालविससेणं सुमलिदव्वसेसं करोमि' त्ति। भणिअ अ सगव्वं आप्फालिदं णेण वज्जणिग्घादघोसभीसणजीआरअं गण्डीवम्। सामिणा वि सज्जीकिदं काळपुट्ठम्। ( शृणोतु देवः। 'अरे दुर्योधनप्रमुखाः कुरुबलसेनाप्रभवः! अविनयनौकर्णधार कर्ण! युष्माभिर्मम परोक्षं बहुभिर्महारथैः परिवृत्यैकाकी मम पुत्रकोऽभिमन्युर्व्यापादितः। अहं पुनर्युष्माकं प्रेक्षमाणानामेवैतं कुमारवृषसेनं स्मर्तव्यशेषं करोमि' इति। भणित्वा च सगर्वमास्फालितमनेन वज्रनिर्घातघोषभीषणजीवारवं गाण्डीवम्। स्वामिनापि सज्जीकृतं कालपृष्ठम्। ) (ळु)

---

(ळि) शक्तिखण्डनामर्षितेन शक्तेः खण्डनेन शकलीकरणेन अमर्षितः संजातक्रोधस्तेन। लज्जां नाटयतीति। अरेरे दुर्योधनेति स्वामिनाम्न उच्चाराल्लज्जाऽविर्भावः।

(ळी) एतत् अरेरे इत्यादि। परवचनम् अन्यस्य शत्रोर्वा वचनम्। तेनावज्ञासूचकत्वेऽप्यस्यानुवादत्वान्न ते दोष इति न प्रयोजनं लज्जाया इति भावः।

(ळु) कुरुबलेति। कुरूणां कौरवाणां बलाया बलविशिष्टायाः सेनायाः प्रभवः स्वामिन इति सोल्लुण्ठनोक्तिः। बलेत्यर्श आदित्वादच्। 'बलयुक्तेऽन्यलिङ्गः स्यादि' ति बलशब्दार्थेषु मेदिनी। बलसेनाशब्दाभ्यामर्थस्यापाततः पौनरुक्त्यावभासनात्पुनरुक्तवदाभासोऽलङ्कारः। 'आपाततो यदर्थस्य पौनरुक्त्यावभासनम्। पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥' इति लक्षणात्। अविनयनौकर्णधार अविनय औद्धत्यमेव नौः स्वसंमतविपत्तरणोपायत्वान्नौका तस्याः कर्णधार ( कर्णं नौपृष्ठवर्ति चालनोपयुक्तं काष्ठं धरति तथाभूत) नाविक। चालकेति यावत्। अविनयेनैव विपदं तरिष्यामीति मत्वा तद्विशिष्टेनैव पथा परान्नयन् इतिभावः। युष्माभिरित्यस्य व्यापादित इत्यनेन संबन्धः। बहुभिर्महारथैः

**दुर्योधनः**—( सावहित्थम् । ) ततस्ततः । (ॡ)

**सुन्दरकः**—तदो अ देव! पडिसिद्धभीमसेणसमलकम्मालम्भेण गण्डीविणा विरइदा अङ्गराअविससेणरहकूलंकसाओ दुवे बाणणदीओ। तेहिं वि दुवेहिं अण्णोण्णसिणेहदंसिदसिक्खाविसेसेहिं अभिजुत्तो सो दुराआरो मज्झमपण्डवो । ( ततश्च देव! प्रतिषिद्धभीमसेनसमरकर्मारम्भेण गाण्डीविना विरचितेऽङ्गराजवृषसेनरथकूलंकषे द्वे बाणनद्यौ । ताभ्यामपि द्वाभ्यामन्योन्यस्नेहदर्शितशिक्षाविशेषाभ्यामभियुक्तः स दुराचारो मध्यमपाण्डवः । ) (ॡे)

---

'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्' इत्युक्तलक्षणैः युष्माभिः परिवृत्य परितः स्थित्वा रुद्ध्वेत्यर्थः । एकाकी असहायः । 'एकादाकिनिच्चासहाय' इत्याकिनिच् । मम पुत्रकोऽभिमन्युः मम परोक्षं अक्ष्णोः परम्।असमक्षम्।प्रतिपरिसमनुभ्योऽक्ष्ण इत्यच्। परोक्षे लिडितिनिर्देशाच्चौकारः । व्यापादितो मारितः । एतेन रणनीतिविप्रतीपाचारत्वं तत एव चापराधातिशयविशिष्टत्वं द्योत्यते । नैष वीराणां धर्म इति भावः । पुनः परंतु अहं कर्ता युष्माकं प्रेक्षमाणानां प्रेक्षमाणान्युष्माननादृत्य । षष्ठी चानादर इति षष्ठी । युष्मत्समक्षमेवेत्यर्थः । विधीयतामत्र प्रतीकारो यदि शक्तिरिति भावः।स्मर्तव्यः स्मर्तुमेव शक्यः शेषोऽवशेषो यस्य तथाभूतं निरवशेषं मृतमित्यर्थः । अत्र स्मर्तव्यमात्रमित्यपि पाठः स एव च साधुः । आस्फालितं टणत्कारितम् । वज्रस्य निर्घातस्य च घोष इव भीषणो भयजनकः जीवारवो मौर्वीध्वनिर्यस्य तथाभूतं गाण्डीवमेतन्नामकमात्मनः कार्मुकम् । स्वामिना कर्णेन । कालपृष्ठमेतत्संज्ञकं स्वीयं धनुः । '**कर्ण**श्चम्पाधिपोऽङ्गराट् । राधासूतार्कतनयः **कालपृष्ठं तु तद्धनुः** ।' इति हैमः ।

(ॡ) सावहित्थं अवहित्थया आकारगोपनेन सहितं यथा तथा । आकारश्च येन हृद्गतो भावो विज्ञातुं शक्यः स मुखवैवर्ण्यभ्रूभङ्गादिरन्तरङ्गविकृतिजन्यो विकारः । तस्य च मनोविकारवशादुद्भिद्यमानस्य गोपनमाकारगोपनम् । 'अवहित्थाऽऽकारगोपनम्' इति हैमः । अर्जुनेन प्रतिज्ञातो वधो वृषसेनस्येत्याकर्णयतो विषण्णे मनसि तज्जन्यान् निःश्वासोच्छ्वासादीन् गोपयित्वा पृच्छतीति भावः ।

(ॡे) प्रतिषिद्धेति । प्रतिषिद्धो निषिद्धो भीमसेनस्य समरकर्मणो युद्धक्रियाया आरम्भ उद्यमो येन तथाभूतेन । चापमास्फालयन्तं कर्णमालोक्य पुनर्युद्धाय समुद्यतं भीमसेनं 'तिष्ठ त्वमहमेवैनमभिभविष्यामीति प्रतिषिद्धवतेत्यर्थः । अङ्गराजेति अङ्गराजस्य कर्णस्य वृषसेनस्य तत्पुत्रस्य च रथावेव कुले तीरे ते कषतो भिन्त इति तथाभूते । कर्ण-

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—तदो अ देव ! गण्डीविणाताररसिदजीआणिग्घोसमेत्तविण्णादबाणवरिसेण तह आअरिदं पत्तिहिं जह ण णहत्तलं ण सामी ण रहो ण धरणी ण कुमालो ण केदुवंसो ण वलाइं ण सारही ण तुलङ्गमा ण दिसाओ ण वीरलोओ अ लक्खीअदि । ( ततश्च देव ! गाण्डीविना ताररसितजीवानिर्घोषमात्रविज्ञातबाणवर्षेण तथाचरितं पत्रिभिर्यथा न नभस्तलं न स्वामी न रथो न धरणी न कुमारो न केतुवंशो न वलानि न सारथिर्न तुरङ्गमा न दिशो न वीरलोकश्च लक्ष्यते।)(ळै)

**दुर्योधनः**—( सविस्मयम् । ) ततस्ततः ।

**सुन्दरकः**—तदो अ देव ! अदिक्कन्ते सरवरिसे क्खणमेत्तं ससीहणादे पण्डअवले विमुक्काक्कन्दे कोरअवले उत्थिदो महन्तो कलअलो हा हदो कुमाल-

---

वृषसेनरथयोर्भेदिके इत्यर्थः । सर्वकूलाभ्रकरीषेषु कष इति खच् । द्वे बाणनद्यौ बाणरूपे नद्यौ । विरचिते विनिर्मिते । तथा किल विनिर्मितं बाणानामोघद्वितयं यथैतन्नद्याविव कूले कर्णवृषसेनयो रथौ भिन्द्यादिति भावः । अन्योन्येति अन्योन्ययोः परस्परयोः स्नेहेन हेतुभूतेन दर्शितः शिक्षाविशेषः अध्ययनाधिक्यं याभ्यां ताभ्याम् । विस्मयजनकानि नवनवान्यस्त्राणि विमुञ्च्यात्मनोऽध्ययनविशेषं प्रकाशितवन्तावित्यर्थः । अत्र क्वचित्स्नेहपदं नास्ति। अभियुक्तो रुद्रः । मध्यमपाण्डवोऽर्जुनः ।

(ळै) तारेति । तारं अतिमहद्यद्रसितं मेघध्वनिस्तद्वद्यो जीवाया धनुर्गुणस्य निर्घोषो ध्वनिस्तन्मात्रेण केवलं तेनैव विज्ञातं बाणानां वर्षं वर्षणक्रिया यस्य तथाभूतेन । अतिशीघ्रत्वादलक्षितशरमोक्षणेति भावः । गाण्डीविना कर्त्रा पत्रिभिर्बाणैः ( पत्राणि कङ्कपक्षिणः पक्षाणि सन्त्येषु ते पत्रिणो बाणाः ) । 'इषुर्बाणः शरः पत्री' ति शारदीनाममाला । तथा आचरितं कृतम् । धरणी पृथ्वी । 'धात्रीधरित्री धरणी' इति पृथ्वीपर्यायेषु हैमः । स्वामी कर्णः । कुमारो वृषसेनः । केतुवंशः ध्वजस्य दण्डभूतो वेणुः । 'वंशो वेणौ कुले वर्गे' इति मेदिनी । लक्ष्यते दृश्यते अदृश्यतेति यावत् । अत्र गाण्डीवताररसितगोधानिर्घोषदुर्विज्ञातबाणवर्षेणेत्यपि क्वचित्पाठः । तत्र च कर्तृपदशून्यत्वान्न्यूनपदत्वम् । गोधा तु धनुर्गुणाघातवारणाय प्रकोष्ठे बद्धा चर्ममयी पट्टिका। तस्याश्च निर्घोषो न प्रसिद्धः। । अत एव चायुक्त इति नादृतोऽयं पाठः ।

विससेणो हा हदो त्ति। ( ततश्च देव! अतिक्रान्ते शरवर्षे क्षणमात्रं ससिंहनादे पाण्डवबले विमुक्ताक्रन्दे कौरवबल उत्थितो महान्कलकलो हा हतः कुमारवृषसेनो हा हत इति।)(ळो)

**दुर्योधनः**—( सबाष्परोधम्। ) ततस्ततः।

**सुन्दरकः**—तदो अ देव! पेक्खामि कुमालं हदसालहितुलङ्गं लूणादवत्त-चावचामरकेदुवंसं सग्गब्भट्टं विअ सुलकुमालं हिअअमम्मभेदिणा एक्केण सिलीमुहेण भिण्णदेहं रहमज्झे पल्हत्थम्।'; ( ततो देव पश्यामि कुमारं हतसारथितुरङ्गं लूनातपत्रचापचामरकेतुवंशं स्वर्गभ्रष्टमिव सुरकुमारं हृदयमर्मभेदिनैकेन शिलीमुखेन भिन्नदेहं रथमध्ये पर्यस्तम्। ) (ळौ)

---

(ळो) अतिक्रान्ते परिसमाप्त इत्यर्थः। समाप्त्यर्थकत्वाच्चातिक्रमेरकर्मकता। उक्तं चाकर्मकत्वनिदानं वैयाकरणैः '**धातोरर्थान्तरे वृत्ते** धात्वर्थेनोपसंग्रहात् (कर्मणः)। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया॥' इति। शरवर्ष इत्यत्र शरसंपात इत्यपि पाठः। ससिंहनाद इत्यत्र च सहर्षसिंहनाद इति क्वचित्। विमुक्ताक्रन्द इत्यत्र च साक्रन्द इति सविषादविमुक्ताक्रन्देनेति च पाठः। सर्वेऽप्यमी सुगमाः। विमुक्ताक्रन्दे कृताक्रोश इत्यर्थः। इति एवंरूपो महान् कलकलः।

(ळौ) हतेति। हतः सारथिस्तुरङ्गोऽश्वश्च यस्य तं लूनाश्छिन्ना आतपत्रं (आतपात् त्रायते तथाभूतं ) छत्रं, चापः, चामरं चमरसंज्ञकमृगकेशमयं व्यजनं, केतोर्ध्वजस्य वंशो वेणुश्चेत्येते यस्य तथाभूतम्। स्वर्गभ्रष्टं स्वर्गतः पतितं। सुरकुमारमिवेत्युत्प्रेक्षा। हृदयमर्मभेदिना हृदयरूपं मर्म प्राणाश्रयस्थानं भिनत्ति तथाभूतेन एकेन शिलीमुखेन बाणेन भिन्नदेहं दारितशरीरम्। रथमध्ये पर्यस्तं पतितम्। 'पर्यस्तः पतिते हते' इति मेदिनी। पश्यामि अपश्यमित्यर्थः। बहून्यत्र पाठान्तराणि। तत्र केषुचित्प्रेक्ष्याहमागत इति विद्यते। ततश्च वृषसेनहननोत्तरं रथमध्ये पर्यस्तं तमवेक्ष्याहमागत इति वदतो वृषसेननिधनोत्तर-कालिकं वृत्तं नांशतोपि विदितमिति स्फुटीभवति। एवं च सति 'ततो वयस्येन किंप्रतिपन्न-मङ्गराजेने' त्युत्तरत्र दुर्योधनेन क्रियमाणः प्रश्न 'स्तथाविधस्य पुत्रस्य दर्शनेने' त्यादि सुन्दरकप्रदत्तमुत्तरं च नोपपद्येत। क्वचित्तु रथमध्ये पर्यस्तमित्यत्र 'रथोत्सङ्गाद्धरातले लुठितम्' इति पाठः। महत्या वेलयेति चाप्यधिकम्। रथोत्सङ्गात् रथमध्यात्। महत्या वेलया बहुना कालेनेत्यर्थः। अत्रापि च हतो वृषसेन इत्याकर्णितवताऽपि महत्या वेलयाऽसौ दृष्ट इति वदतः स्वपक्ष औदासीन्यं स्फुटीभवतीति द्रष्टव्यम्। तत एव च परित्यक्तानि पाठान्तराण्येतान्यस्माभिः।

**दुर्योधनः**—(सास्रम्) अहह कुमारवृषसेन ! अलमतः परं श्रुत्वा । हा वत्स वृषसेन ! हा मदङ्कदुर्ललित ! हा गदायुद्धप्रिय ! हा राधेयकुलप्ररोह! हा प्रियदर्शन ! हा दुःशासननिर्विशेष! हा सर्वगुरुवत्सल! प्रयच्छ मे प्रतिवचनम् ।(ळं)

पर्याप्तनेत्रमचिरोदितचन्द्रकान्त-
मुद्भिद्यमाननवयौवनरम्यशोभम् ।
प्राणापहारपरिवर्तितदृष्टि दृष्टं
कर्णेन तत्कथमिवाननपङ्कजं ते ॥ १० ॥

**सूतः**—आयुष्मन्! अलमत्यन्तदुःखावेगेन । (ळः)

**दुर्योधनः**—सूत! पुण्यवन्तो हि दुःखभाजो भवन्ति । अस्माकं पुनः (क्ष)

---

(ळं) अहहेति परिक्लेशे । अहह कुमारवृषसेनेत्यधिकमिवात्र प्रतिभाति । शोकोपक्रमात्प्रागेव हि ब्रूयाच्छोचिता अलमतःपरं श्रुत्वेति नैव पुनरारब्धशोकालापो मध्य एवेति । अलं श्रुत्वेति । अलंखल्वोः प्रतिषेध इति क्त्वा । मदङ्कदुर्ललित ममाङ्क एव दुर्ललितं दुष्प्रापमीप्सितं यस्य तथाभूत । बाल्ये प्रेमातिशयान्मदीयमेवाङ्कमाप्तुमीहमानेत्यर्थः । एतेन स्नेहातिशयो व्यज्यते । राधेयकुलस्य कर्णवंशस्य प्ररोह अङ्कुरभूत । राधेयवंशप्ररोहेति तु साधु । वंशपदस्य हि श्लिष्टतया कुले वेणुत्वं तत एव च वृषसेने प्ररोहत्वमारोपयितुं शक्यमिति । प्रियदर्शन प्रियमस्मत्प्रीतिविषयीभूतं दर्शनमाकृतिर्यस्य तथाभूत । दुःशासननिर्विशेष सामर्थ्येनास्मत्स्नेहभाजनतया च दुःशासनतुल्य । सर्वगुरुवत्सल सर्वेषु गुरुषु वत्सल स्नेहयुक्त । हा इति शोके ।

(१०) पर्याप्तेति । पर्याप्तनेत्रम् पर्याप्ते यथेष्टे विशाले इति यावत् नेत्रे यत्र तथाभूतम् । अचिरोदितचन्द्रकान्तम् । अचिरमल्पादेव कालादुदितश्चन्द्र इव कान्तं सुन्दरम् । उद्भिद्यमाननवयौवनरम्यशोभम् । उद्भिद्यमानेन प्रादुर्भवता नवेन यौवनेन तारुण्येन रम्या शोभा यस्य तथाभूतम् । तत्तव आननपङ्कजं मुखकमलं प्राणापहारपरिवर्तितदृष्टि प्राणानामपहारेण शत्रुकृतेन हरणेन परिवर्तिते घूर्णिते दृष्टी यत्र तथाभूतं सत् कर्णेन तव पित्रा कथं दृष्टम् ? तथाविधेन वत्सलेन पित्रा एवंविधस्याननस्य द्रष्टुमशक्यत्वादिति भावः ।

(ळः) दुःखावेगेन दुःखावेशेनेत्यर्थः ।

(क्ष) पुण्यवन्तो हि पुण्यवन्त एव । 'हि हेताववधारणे' इत्यमरः । दुःखभाजः दुःखं भजन्ते सेवन्ते तथाभूताः । अस्माकमिति श्लोकान्वयि ।

प्रत्यक्षं हतबन्धूनामेतत्परिभवाग्निना ।
हृदयं दह्यतेऽत्यर्थं कुतो दुःखं कुतो व्यथा ? ॥ ११ ॥

(इति मोहमुपगतः ।)

**सूतः**—समाश्वसितु समाश्वसितु महाराजः ।(इति पटान्तेन वीजयति ।)(क्षा)

**दुर्योधनः**— (लब्धसंज्ञः ।) भद्रसुन्दरक ! ततो वयस्येन किं प्रतिपन्न-मङ्गराजेन ? (क्षि)

**सुन्दरकः**—तदो अ देव ! तहाविधस्स पुत्तस्स दंसणेण संगलिदं अस्सु-जलं उज्झिअ अणवेक्खिदपरप्पहरणेण सामिणा अभिजुत्तो धणंजओ । तं अ सुदवहामरिसुद्दीविदपरक्कमं तह परिक्कमन्तं पेक्खिअ णउलसहदेवपञ्चालप्पमुहेहिं अंतरिदो धणंजअस्स रहवरो । (ततश्च देव ! तथाविधस्य पुत्रस्य दर्शनेन संगलित-मश्रुजलमुज्झित्वानवेक्षितपरप्रहरणेन स्वामिनाभियुक्तो धनंजयः । तं च सुतवधामर्षोद्दीपि-तपराक्रमं तथा परिक्रामन्तं प्रेक्ष्य नकुलसहदेवपाञ्चालप्रमुखैरन्तारितो धनंजयस्य रथवरः) (क्षी)

---

(११) प्रत्यक्षमिति । प्रत्यक्षं अक्ष्णोः समीपे । दृशोः पुरस्तादित्यर्थः । हतब-न्धूनां हताः शत्रुभिर्मारिता बन्धवः मित्राणि भ्रातरश्च येषां तथाभूतानाम् । 'बन्धुःस्यात्पुं-सि बन्धूके मित्रे भ्रातरि बान्धवे ।' इति मेदिनी । अस्माकं एतत् हृदयं दुःखस्याधारभूत-मिति भावः । दुःखं हि हृदयधर्म इति । परिभवाग्निना पराभवरूपेणावमानरूपेण वाऽग्निना कर्त्रा अत्यर्थमतिमात्रम् । 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ।' इत्यमरः । दह्यते । भस्मीक्रियते । अत्यन्तं दह्यमानतया हृदयस्य दुःखस्यावस्थानेऽवकाश एव नास्तीति भावः । तत एव दुःखं कुतः ? व्यथा तज्जन्याभीतिरपि च कुतः ? । धर्मिणं विना धर्माणा-मवस्थानस्याशक्यत्वाद्दुःखव्यथादिधर्मिणश्चास्माकं हृदयस्यातिमात्रं दह्यमानतया दुःख-व्यथयोरवकाश एव नास्तीति भावः । एतेन दुःखातिशयो व्यज्यते।व्यथेर्भयार्थोऽत्रियामङ् ।

(क्षा) पटान्तेन वस्त्रप्रान्तेन वीजयति दुर्योधनस्य शरीरे समीरणं संचारयति ।

(क्षि) प्रतिपन्नमङ्गीकृतम् । 'प्रतिपन्नोऽन्यलिङ्गः स्याद्विज्ञातेऽङ्गीकृतेऽपि च ।' इति मेदिनी । अङ्गराजेन कर्णेन ।

(क्षी) तथाविधस्य तादृशीं दशां प्राप्तस्य । अश्रुजलमित्यत्राश्रुजातामित्यपि पाठः । तत्राश्रुपदमश्रुबिन्दुपरं, जातं च समूहः । उज्झित्वा त्यक्त्वा उपेक्ष्येति यावत् । पुत्रशो-कमनादृत्येति भावः । न अपेक्षितं परप्रहरणं शत्रुकृतः स्वस्मिन्प्रहारो येन तथाभूतेन । यो

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—तदो देव ! सल्लेण भाणिदम्—'अङ्गराअ ! हदतुलङ्गमो भग्गकूवरो दे रहो ता ण जुत्तं भीमाज्जुणेहिं सह आजुज्झिदुम्' त्ति। तदो पडिवट्टिदो रहो ओदारिदो सामी सन्दणादो बहुप्पआरं अ समस्सासिदो । तदो अ सामिणा सुइरं विलविअ परिअणोवणीदं अण्णं रहं पेक्खिअ दीहं निस्ससिअ मइ दिट्ठी विणिक्खिविदा । सुन्दरअ ! एहि त्ति भणिदं अ । तदो अहं उवगदो सामिसमीवम् । तदो अवणीअ सीसट्ठाणादो पट्टिअं सरीरसंगालिदेहिं सोणिअबिंदुहिं लित्तमुहं बाणं कदुअ अहिलिहिअ प्पोसिदो देवस्स संदेसो (ततो देव शल्येन भणितम्—'अङ्गराज ! हततुरङ्गमो भग्नकूबरस्ते रथस्तन्न युक्तं भीमार्जुनाभ्यां सहायोद्धुम्' इति। ततः परिवर्तितो रथोऽवतारितः स्वामी स्यन्दनाद्बहुप्रकारं च समाश्वासितः । ततश्च स्वामिना सुचिरं विलप्य परिजनोपनीतमन्यं रथं प्रेक्ष्य दीर्घं निःश्वस्य मयि दृष्टिर्विनिक्षिप्ता । सुन्दरक ! एहीति भणितं च । ततोऽहमुपगतः स्वामिसमीपम् । ततोऽपनीय शीर्षस्थानात्पट्टिकां शरीरसंगलितैः शोणितबिन्दुभिर्लिप्तमुखं बाणं कृत्वाभिलिख्य प्रेषितो देवस्य संदेशः । (इति पट्टिकामर्पयति । ) (क्षु)

---

स्यात्मनि प्रहरति तमेव हन्यान्नान्यमिति रणनीतिमपास्येत्यर्थः । प्रहरणेनेत्यत्र प्रहरणाभियोगेनेत्यपि पाठः । प्रहरणाभियोगः शस्त्रव्यापारः । 'एते स्वकर्मण्यभियुक्ताः स्म' इत्यादिष्वभिपूर्वकस्य युजेर्व्यापारार्थकत्वदर्शनात् । यद्वा प्रहरणाभियोगो युद्धार्थमाह्वानम् । विशिष्टवाचकानामिति न्यायात् । 'प्रहरणं संयद्रणो विग्रहः ।' इति युद्धपर्यायेषु हैमः । अभियुक्तो युद्धार्थमाहूतः । अभियोगो युद्धार्थमाह्वानमिति रायमुकुटः । शरैः रुद्ध इति नार्थः । अन्तरितो धनंजयस्य रथवर इत्युत्तरवचनविरोधापातात् । न हि रोधोत्तरमन्तर्धानस्य फलं किमपीति । सुतवधामर्षोद्दीपितपराक्रमं सुतवधसम्बन्धिना क्रोधेन उद्दीपितस्तीव्रतां गमितः पराक्रमो यस्य तथाभूतम् । अमर्षवशाद्विशेषतः पराक्रममाणमित्यर्थः । पाञ्चालः पञ्चालदेशाधिपतिर्धृष्टद्युम्नादिः । अन्तरितः अन्तर्हितः । स्वयं मध्ये भूत्वाऽदृश्यतां नीत इत्यर्थः ।। **'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये'** इत्यमरः । अन्तरशब्दाद्धात्वर्थे णिच् भूयांस्यत्र पाठान्तराणि नानुगुणानीत्युपेक्ष्यन्ते ।

(क्षु) शल्येन एतन्नाम्ना कर्णस्य सारथ्यं कुर्वता मद्रदेशाधिनाथेन । शल्यश्च किल पाण्डवानां मातुलस्तान्प्रति गन्तुकामो मध्येमार्गमुपगम्य दुर्योधनेन प्रदायोपहारान्वशीकृत-

( दुर्योधनो गृहीत्वा वाचयति । )

यथा—'स्वस्ति! महाराजदुर्योधनं समराङ्गणात्कर्ण एतदन्तं कण्ठे गाढमालिङ्ग्य विज्ञापयति । (क्षू)

अस्त्रग्रामविधौ कृती न समरेष्वस्यास्ति तुल्यः पुमा-
न्भ्रातृभ्योऽपि ममाधिकोऽयममुना जेयाः पृथासूनवः ।
यत्संभावित इत्यहं न च हतो दुःशासनारिर्मया
त्वं दुःखप्रतिकारमेहि भुजयोर्वीर्येण बाष्पेण वा ॥ १२ ॥'

---

स्तदीयमेव पक्षं शिश्राय । पुनश्च समुपगतेन युधिष्ठिरेण प्रार्थितः 'सारथ्यमपि कुर्वन्कर्णार्जुनयोर्युद्धे कर्णस्य तेजोवधं विधास्यामी' ति प्रतिज्ञातवान् । अयं चान्ततो युधिष्ठिरेण हत इति महाभारते द्रष्टव्यम् । भणितम् उक्तम् । भग्नः कूबरो युगन्धरो दाण्डीतिमहाराष्ट्र्यां ख्यातो यस्य तथाभूतः । ( कुवते शब्दं करोति कूबरः । कुङ्शब्द इत्यतः कृतां बाहुलकत्वाद्वरच् ) परिवर्तितः परिवृत्तिं कारितः । भग्नकूबरं रथं परित्यज्यापर आनीत इत्यर्थः । स्वामी कर्णः । अवतारितः पूर्वस्माद्रथादित्यर्थात् । 'कूबरस्तु युगन्धर' इत्यमरः । बहुप्रकारं अनेकविधं यथा तथा । समाश्वासितः सम्यक् सान्त्वित इत्यर्थः । विलप्य पुत्रशोकात्परिदेवनं कृत्वा । दीर्घं निःश्वस्येति संग्रामे विजयमसंभावयतो दुर्योधनमनोरथक्षतिमाशङ्कमानस्य निःश्वासः । शीर्षस्थानात् शिरःप्रदेशात् पट्टिकां लेखनोपयुक्तां पत्रपट्टिकामित्यर्थः । पट्टिका च पट्टीति महाराष्ट्र्यां ख्याता । शोणितबिन्दुभिः रक्तबिन्दुभिः । अभिलिख्य लिखित्वा । देवस्य राज्ञे भवत इत्यर्थः । शेषे षष्ठी । संदेशः वार्तेति शब्दरत्नावली संलेख इति क्वचित्पाठः । तत्र समो निरर्थकत्वं स्पष्टम् । पट्टिकामित्यत्र च पत्रिकामित्यपि क्वचित्पाठः ।

(क्षू) वाचनस्वरूपं निर्दिशति यथेति । स्वस्तीत्यत एव पत्रिकारम्भः । वस्तुतः पुनर्विज्ञापयतीत्यतः परमेव यथेत्यावश्यकम् । स्वस्तीति । पत्रस्यादौ स्वस्तीति लेखनीयमिति प्राचामाचारः । अत एव च 'स्वस्तिमुख' इति पत्रनाम संरूढम् । प्राहुश्चाभिधानिका अपि 'वर्णदूतः स्वस्तिमुख' इति । एतदन्तं एतद् वक्ष्यमाणं अन्ते अवसाने यस्य तद्यथा तथा । एतदेवान्तिमं मे विज्ञापनमित्यर्थः ।

(१२) विज्ञप्तिमाह अस्त्रेति । अत्रादिमं चरणद्वयं दुर्योधनकृतायाः कर्णविषयिण्याः संभावनाया अनुवादः । तत एव चात्रेदमदः शब्दौ कर्णपरौ । समरेषु युद्धेषु

**दुर्योधनः**—वयस्य कर्ण! किमिदं? भ्रातृशतवधदुःखितं मामपरेण वाक्शल्येन घट्टयसि? । भद्र सुन्दरक! अथेदानीं किमारम्भोऽङ्गराजः? । (क्षे)

**सुन्दरकः**—देव! अज्जवि आरम्भो पुच्छीअदि? अवणीदसरीरावरणो अप्पवहकिदणिच्चओ पुणो वि पत्थेण सह समलं मग्गादि । (देव! अद्याप्यारम्भः

---

अत्रग्रामविधौ आयुधसमूहप्रयोगे 'ग्रामोविषयशब्दास्त्रभूतेन्द्रियगुणाद्व्रजे ।' इति हैमः । कृती कुशलः अस्य कर्णस्य तुल्यः सदृशः । तुल्यार्थैरतुलोपमाभ्यामिति विकल्पात्षष्ठी । अपरः अन्यः पुमान् पुरुषः नास्ति । अयं कर्णः मम दुर्योधनस्य भ्रातृभ्योऽपि अधिकः भ्रात्रपेक्षयापि अधिकं ममास्मिन्प्रेमादिकमयमपि मत्प्रियकारीत्यर्थः। अमुना कर्णेन पृथासूनवः कुन्तीपुत्रा धर्मभीमार्जुनाः । उपलक्षणमेतन्नकुलसहदेवयोरपि । पृथासूनुपदं च पाण्डवानां पराजय्यतामभिव्यञ्जयति । जेयाः जेतव्याः। इति एवं प्रकारेण अहं यत्त्वयेति शेषः संभावितः संभावनाया विषयः कृतः । त्वया मयीदं संभावितमित्यर्थः। च किंच यत् मया दुःशासनारिर्दुःशासनस्य शत्रुर्भीमः न हतः । तदिति शेषः । त्वया मयि विक्रमादिकं संभावितं मया पुनर्न तवाभीष्टं साधितमतः प्रतारणामनुप्राप्तस्त्वं तस्मादित्यर्थः त्वं कर्ता । भुजयोर्वीर्येण बलेन 'वीर्यं बले प्रभावे च' त्यमरः । करणभूतेन शत्रुनिर्मूलनसाधनभूतेनेत्यर्थः। वा अथवा बाष्पेण शत्रुभिर्निहतानां बन्धूनां कृतेऽक्षमैर्मोचनीयेन करणभूतेन दुःखप्रतिकारं दुःखस्य प्रतिक्रियां एहि प्राप्नुहि । शत्रून्निर्जित्य वा तदक्षमत्वे परिदेवितमात्रेण वा दुःखप्रतीकारं कुरुष्वेति भावः। प्रतारक मयि मुधैव त्वया कृतो विश्वासस्तदिदानीं त्वयैवात्मनो दुःखं प्रतिकार्यमित्येतदापतितमित्याशयः। एतेनात्मनो मरणं ध्वन्यते। अत्र यदित्यत्र त्वदिति त्वमित्यत्र च तमिति पाठः । तत्राद्येऽविमृष्टविधेयांशो दोषः । द्वितीये च तमित्यनर्थकमिति द्रष्टव्यम् । विकल्पालङ्कारः । 'विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुत ' इति दर्पणोक्तेः । शार्दूलविक्रीडितं वृत्तम् ।

(क्षे) वयस्य वयसा तुल्य सखे । नौवयोधर्मेत्यादिना तुल्यार्थे यत् । इदं भवतालिखितं किम्? अयुक्तरूपमभिलिखितमित्यर्थः। भ्रातृशतवधदुःखितं भ्रातॄणां शतस्य वधेन संजातदुःखं मां अपरेण दुःखभिन्नेनेत्यर्थः यद्वा प्रसिद्धशल्यभिन्नेन वाक्शल्येन वाग्रूपेण शल्येन घट्टयसि चालयसीति प्रश्ने काकुः । हृदि मे वाक्शल्यं निखाय तेन चालयसि किमित्यर्थः । किमारम्भः कः आरम्भ उद्यमो यस्य तथाभूतः । अत्र वयस्य कर्ण कर्णेत्यपि पाठः । वाक्यादावेव त्वामन्त्रणमदानां द्विर्वचनं दृष्टम् ।

पृच्छयते? । अपनीतशरीरावरण आत्मवधकृतनिश्चयः पुनरपि पार्थेन सह समरं मार्गति ।) (क्षै)

**दुर्योधनः**—( आवेगादासनादुत्तिष्ठन् । ) सूत! रथमुपनय । सुन्दरक! त्वमपि मद्वचनात्त्वरिततरं गत्वा वयस्यमङ्गराजं प्रतिबोधय । 'अलमतिसाहसेन । अभिन्न एवायमावयोः संकल्पः । न खलु भवानेको जीवितपरित्यागाकाङ्क्षी । किं तु । (क्षो)

> हत्वा पार्थान्सलिलमशिवं बन्धुवर्गाय दत्त्वा
> मुक्त्वा बाष्पं सह कतिपयैर्मन्त्रिभिश्चारिभिश्च ।
> कृत्वान्योन्यं सुचिरमपुनर्भावि गाढोपगूढं
> संत्यक्ष्यावो हततनुमिमां दुःखितौ निर्वृतौ च ॥ १३ ॥

---

(क्षै) अद्यापीति । संदेशत एवारम्भस्य स्पष्टतयाप्रतीयमानत्वान्न प्रश्नस्यावश्यकत्वमिति भावः । सामान्यतः प्रतीयमानमप्यारम्भं विशिष्य निर्दिशति अपनीतेति । अपनीतं दूरीकृतं शरीरावरणं शरीराच्छादकं कवचं येन तथाभूतः । आत्मनो वधे कृतो निश्चयो येन तथाभूतः सन् । आत्मनो मरणमीहमानः सन् इत्यर्थः । पार्थेन अर्जुनेन सह । मार्गति प्रतिसंधत्ते करणीयमिति मनसा चिन्तयतीत्यर्थः । मार्ग अन्वेषण इत्यत्रान्वेषणं प्रतिसधानमिति शब्दकल्पद्रुमः ।

(क्षो) आवेगात्त्वरया 'आवेगस्तु त्वरिस्तूर्णि 'रिति हैमः । कर्णस्य निधनाध्यवसायविनिवारणार्थं त्वरा । त्वरिततरमतिशयेन त्वरितम् । अन्यथा हि प्रक्रान्तयुद्धः कदाचिन्म्रियेत कर्ण इति । वयस्यमिति प्रतिबोधन आत्मनोऽधिकारं द्योतयति । आत्मनो वचनमाह अलमिति । अतिसाहसेन अत्यन्तमविमृष्यकारितया । आवयोस्तव मम च संकल्पो मनसो निश्चय इत्यर्थः । अभिन्नः समानः । कथमभिन्नत्वं संकल्पस्येत्याह न खल्विति । एको भवान् जीवितपरित्यागाकाङ्क्षी जीवितस्य जीवनस्य परित्यागमाकांक्षति इच्छति तथाभूतः । अहमपि भवानिव जीवितत्यागाकाङ्क्ष्येवेति भावः । तर्हि त्वमपीदानीं जीवितपरित्याग उद्युङ्क्ष्वेति चेत्तत्राह किन्त्विति । किन्तु परंतु ।

(१३) कदा तर्हि संकल्पितं जीवितत्यागमनुष्ठास्याव इत्याह । हत्वेति । पार्थान् पृथापुत्रान्धर्मभीमार्जुनान् । एतच्च नकुलसहदेवयोरप्युपलक्षणम् । हत्वा बन्धुवर्गाय बान्धव-

अथवा शोकं प्रति मया न किञ्चित्संदेष्टव्यम् । (क्षौ)

> वृषसेनो न ते पुत्रो न मे दुःशासनोऽनुजः ।
> त्वां बोधयामि किमहं त्वं मां संस्थापयिष्यसि ॥ १४ ॥'

**सुन्दरकः**—जं देवो आणवेदि । ( इति निष्क्रान्तः । )

**दुर्योधनः**—तूर्णमेव रथमुपस्थापय । (क्षं)

**सूतः**—( कर्णं दत्वा । ) देव! हूषासंवलितो नेमिध्वनिः श्रूयते । तथा तर्कयामि नूनं परिजनोपनीतो रथः । (क्षः)

---

समूह्याय अशिवं प्रेतोद्देश्यकत्वादमङ्गलं सलिलं जलं तिलाञ्जलिरूपमित्यर्थः दत्त्वा । कतिपयैः कियद्भिश्चित् हतावशिष्टैरिति भावः। मन्त्रिभिः अरिभिश्च सह बाष्पं बन्धुनाशजन्यमश्रु मुक्त्वा । सर्वेषामपि समानदुःखवत्त्वेन सममेव बाष्पमोक्षं कृत्वेत्यर्थः । अन्योन्यं परस्परं त्वया मम मया च तवेत्यर्थः। अपुनर्भावि नास्ति पुनर्भवितुं शीलं यस्य तथाभूतम् । समनन्तरमेव देहपरित्यागात्तथात्वम् । गाढोपगूढं गाढं दृढं उपगूढं आलिङ्गनं कर्मभूतम् । उपपूर्वाद्गूहतेर्नपुंसके भावे क्तः। सुचिरं अपुनर्भावित्वादतिचिरकालं कृत्वा । दुःखितौ बन्धुनाशादिति भावः । निर्वृतौ सुखितौ निर्पूर्वाद्वृणोतेः सुखार्थकान्निष्ठा । अभीष्टस्य शत्रुनिर्मूलनस्य सिद्धत्वादिति भावः। इमां संप्रति विद्यमानां हततनुं निन्द्यं देहम् । 'स्त्रियां मूर्तिस्तनुस्तनूः ' इत्यमरः । संत्यक्ष्यावः । कर्तव्यस्यावशिष्टत्वाभावान्मरिष्याव इत्यर्थः । ततः प्राक्पुनर्मरणं न युक्तमिति भावः । मन्दाक्रान्ता वृत्तम् ।

(क्षौ) मुक्त्वा बाष्पमिति पार्थहननोत्तरमेव शोकं करिष्याव इत्युक्तं तत्र पुनराह। अथवेति । शोकं प्रति शोकविषये मया न किंचित्संदेष्टव्यं संदेशतया कथनीयम् । अत्राथवेत्याधिकमिव प्रतिभाति संदृश्यते पुनः सर्वत्रापीत्युपनिबद्धम् ।

(१४) कुतो न संदेष्टव्यमित्याह वृषसेन इति । वृषसेनः ते तवैव पुत्रो न किन्त्वावयोरभिन्नत्वान्ममापीत्यर्थः । दुःशासनः ममैव अनुजः कनीयान् भ्राता न किन्तु तवापीत्यर्थः । अत एव शोकविषये अहं त्वां किं बोधयामि उपदिशामि? त्वमपि मां किं संस्थापयिष्यसि सान्त्वयिष्यसि? । ज्ञायते ह्यभिन्नत्वादावाभ्यां पारस्परिको दुर्निवारः शोकावेगस्तदत्र विफलमेव सान्त्वनोपदेशादिकमिति नैतदाचरामीत्यर्थः । पथ्यावक्त्रं वृत्तम् ।

(क्षं) तूर्णमेव सत्वरमेव । उपस्थापय आनय ।

(क्षः) हूषासंवलितः हूषाभिः अश्वशब्दैः संवलितो युक्तः । 'हेषा ह्रेषा च वाजिनां (ध्वनै)' इति हलायुधः । नेमिध्वनिः चक्रप्रान्तजन्यः शब्दः । चक्रस्य परिरक्षणार्थं

**दुर्योधनः**—सूत! गच्छ त्वं सज्जीकुरु ।

**सूतः**—यदाज्ञापयति देवः । ( इति निष्क्रम्य पुनः प्रविशति । )

**दुर्योधनः**—( विलोक्य । ) किमिति नारूढोऽसि? । (ज्ञ)

**सूतः**—एष खलु तातोऽम्बा च संजयाधिष्ठितं रथमारुह्य देवस्य समीपमुपगतौ । (ज्ञा)

**दुर्योधनः**—किं नाम? तातोऽम्बा च संप्राप्तौ । कष्टमतिबीभत्समाचरितं दैवेन । सूत! गच्छ त्वं स्यन्दनं तूर्णमुपहर । अहमपि तातदर्शनं परिहरन्नेकान्ते तिष्ठामि । (ज्ञि)

**सूतः**—देव! त्वदेकशेषबान्धवावेतौ कथमिव न समाश्वासयसि ? (ज्ञी)

**दुर्योधनः**—सूत! कथमिव समाश्वासयामि विमुखभागधेयः? पश्य । (ज्ञु)

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
घ्रातस्ताभ्यां शिरसि विनतोऽहं च दुःशासनश्च ।

---

यत्परितो लोहादिमयं वलयं तदेतन्नेमिरित्युच्यते । एतच्च धाव इति महाराष्ट्र्यां ख्यातम् ।

(ज्ञ) नारूढोऽसि रथमिति शेषः ।

(ज्ञा) तातो धृष्टराष्ट्रः अम्बा माता गान्धारी सञ्जयो धृतराष्ट्रसारथिः । संजयाधिष्ठितं संजयेनाध्यासितम् । देवस्य समीपमित्यत्र देवदर्शनमित्यपि पाठः तत्र दर्शनं दृक्पथमित्यर्थः । एतदपेक्षया चाक्लिष्ट इत्यस्मत्संगृहीत एव पाठः श्रेयान् ।

(ज्ञि) किं नामेति विस्मये । कष्टमेतदापतितमिति शेषः । दैवेन कर्तृभूतेन एतत् अतिबीभत्सं अतिशयेन हृदयोद्वेगकरं आचरितं कृतम् । स्यन्दनं रथम् । उपहर समीपमानय । तातदर्शनं पितुः साक्षात्कारं परिहरन् त्यजन् एकान्ते विजनप्रदेशे ।

(ज्ञी) त्वदेकेति । त्वमेव एकोऽद्वितीयः शेषोऽवशेषभूतो बान्धवो ययोस्तौ । एतेनावश्यमाश्वासनीयत्वं ध्वन्यते । समाश्वासयसि सान्त्वयसि ।

(ज्ञु) विमुखभागधेयः । विमुखं पराङ्मुखं प्रतिकूलमिति यावत् भागधेयं दैवं यस्य तथाभूतः । कथमिव केन प्रकारेणेव ।

तस्मिन्बाले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वे पित्रोरपगतघृणः किं नु वक्ष्यामि गत्वा ॥ १९ ॥

तथाऽप्यवश्यं वन्दनीयौ गुरू । (ज्ञ)

( इति निष्क्रान्तौ । ) (ज्ञि)

## इति चतुर्थोऽङ्कः ।

---

(१५) सान्त्वनस्याशक्यतामाह अद्यैवेति । आवां अहं च दुःशासनश्चेत्येतौ कर्तारौ अद्यैव वर्तमाने दिवस एव तातं पितरमम्बां मातरं च दृष्ट्वा रणं युद्धमुपगतौ प्राप्तौ। विनतः प्रणतः अहं दुःशासनश्च ताभ्यां शिरसि प्रातः कृतावघ्राणः । प्राञ्चः किल गुरवः प्रह्वीभूतान् शिशूनाशिषा योजयितुकामाः शिरस्यवजिघ्रन्ति स्म । तत्रावयोर्मध्ये तस्मिन्बाले दुःशासन इत्यनुकम्पनीयत्वं द्योत्यते । अरिणा शत्रुणा भीमेन प्रसभं बलात्कारेण तां मरणरूपां अवस्थां दशां प्रापिते सति अपगतघृणः अपगता घृणा दया यस्मात्तथाभूतो निर्दयः अहं पित्रोः मातुः पितुश्च । पिता मात्रेत्येकशेषः । पार्श्वे समीपं गत्वा किं नु वक्ष्यामि? । कुत्र वा त्वया साकं गतो दुःशासन इति चेत्पृच्छयेत तदा किंवा वक्ष्यामि ? नैवात्र किमप्याख्यातुं शक्यं, पित्रोः शोकातिशयजनकत्वादात्मनश्च लज्जाकरत्वादिति भावः । मन्दाक्रान्तावृत्तम् ।

(ज्ञ) गुरू मातापितरौ । गुरू इति अवश्यवन्दनीयत्वे हेतुमभिव्यञ्जयति ।

(ज्ञि) इति निष्क्रान्तौ गतौ सूतदुर्योधनाविति शेषः। अत्र एष खलु तात इत्यादिनोत्तराङ्कार्थस्य सूचनादङ्कावतारो नामार्थोपक्षेपकम् । अत एव च नोत्तरत्र विष्कम्भकः प्रवेशको वा । अङ्कावतारलक्षणं तु प्रागेवोक्तमिति शिवम् । अङ्कोऽयं सुन्दरकाङ्क इत्युच्यते दर्पणादिषु ।

**इति श्रीमत्पण्डितराजवंशावतंसवैयाकरणशेखरश्रीमत्कान्ताचार्यसूरिणां छात्रेण श्रीमत्सदाशिवबुधेन्द्रतनुजन्मना राशिवडेकरोपाह्वेन श्रीअप्पाशर्मविद्यावाचस्पतिविद्यालङ्कारमहोपदेशकेन प्रणीतायां बालबोधिन्याख्यायां वेणीसंहारव्याख्यायां चतुर्थोऽङ्कः ।**

**श्रीसदाशिवार्पणमस्तु ।**

---

## पञ्चमोऽङ्कः ।

(ततः प्रविशति रथयानेन गान्धारी संजयो धृतराष्ट्रश्च । ) (ङै)

**धृतराष्ट्रः**—संजय ! कथय कस्मिन्नुद्देशे कुरुकुलकाननैकशेषप्रवालो वत्सो मे दुर्योधनस्तिष्ठति? । कच्चिज्जीवति वा न वा? । (ङो)

**गान्धारी**—जाद ! जइ सच्चं जीवदि मे वच्छो ता कहेहि कस्सिं देसे वट्टइ ।( जात ! यदि सत्यं जीवति मे वत्सस्तत्कथय कस्मिन्देशे वर्तते ) (ङौ)

**संजयः**—नन्वेष महाराज एक एव न्यग्रोधच्छायायामुपविष्टस्तिष्ठति ।(ङं)

**गान्धारी**—(सकरुणम् ।) जाद ! एआइ त्ति भणासि । किं णु क्खु संपदं भादुसदं से पास्से णत्थि? ( जात! एकाकीति भणसि । किं नु खलु सांप्रतं भ्रातृशतमस्य पार्श्वे नास्ति ? ) (ङः)

---

### श्रीशिवः शरणम्।

### बालबोधिन्यां नाम वेणीसंहारव्याख्यायां

### पञ्चमोऽङ्कः ।

### श्रीगणेशाय नमः ।

(ङै) प्रविशतीति गान्धार्यादिभिः प्रत्येकं संबध्यते ।

(ङो) कुरुकुलेति । कुरूणां कौरवाणां कुलमेव काननमरण्यं तस्य एकः शेषः अवशेषभूतः प्रवालोऽङ्कुरः । एतेनावश्यं रक्षणीयत्वं दुर्योधनस्य व्यज्यते । 'प्रवालमङ्कुरेऽप्यस्त्री' त्यमरः । कच्चिदितीष्टप्रश्ने । जीवति वा न वा, जीवति न वेत्यर्थः । चशब्दो वा शब्दश्चानेकशश्चैकशश्च वा प्रयुज्यते। यथा रामश्च कृष्णश्च गच्छतो रामः कृष्णश्च गच्छतः। चैत्रो वा मैत्रो वा यास्यति चैत्रो मैत्रो वा यास्यतीत्यादि। अत्र चैकमपहायापरे सिद्धाप्रयोगा एवेति द्रष्टव्यम्। अत्र क्वचिद्वत्स संजय कथय कथयेति पाठः। तत्र संभ्रमवशाद्द्विर्वचनम् ।

(ङौ) जात वत्स संजय ।

(ङं) नन्विति प्रतिवचने । न्यग्रोधच्छायायां वटवृक्षच्छायायाम् । तिष्ठति विद्यते।

(ङः) खल्विति वाक्यालङ्कारे । नु वितर्के । किं कस्मात् । अत्र नास्तीत्यत्र भविष्यतीत्यपि पाठः । स च न युक्तः। एक एवेत्येतावतैव पार्श्वे भ्रातृशतस्याभावावगमेन तद्विषयकप्रश्नानुदयात् । भ्रातृशतसान्निध्याभावकारणविषयकस्तूपपद्यते प्रश्न इति ।

**संजयः**—तात ! अम्ब ! अवतरतं स्वैरं रथात् । (क)

( सर्वेऽवतरणं नाटयन्ति । ) (का)

(ततः प्रविशति सव्रीडमुपविष्टो दुर्योधनः । )

**संजयः**—(उपसृत्य ।) विजयतां महाराजः । नन्वेष तातोऽम्बया सह प्राप्तः । किं न पश्यति महाराजः ? । (कि)

(दुर्योधनो वैलक्ष्यं नाटयति । ) (की)

**धृतराष्ट्रः**—

शल्यानि व्यपनीय कङ्कवदनैरुन्मोचिते कङ्कटे
बद्धेषु व्रणपट्टकेषु शनकैः कर्णे कृतापाश्रयः ।
दूरान्निर्जितसान्त्वितान्नरपतीनालोकयँल्लीलया
सह्या पुत्रक ! वेदनेति न मया पापेन पृष्टो भवान् ॥१॥

---

(क) अवतरतं युवामिति शेषः । प्रार्थनायां लोट् । 'तस्थस्थमिपां तां तं ताम' इति थसस्तमादेशः । स्वैरं स्वेच्छानुसारेण । एतच्च क्वचिन्नास्ति ।

(का) सर्वे इत्यत्रोभाविति क्वचित्पाठः। स च न युक्तः संजयस्याप्यवतरणादिति।

(कि) उपसृत्य उपगत्य दुर्योधनमिति शेषः । नन्वित्यामन्त्रणे अयि महाराजेत्यर्थः । 'ननु मां प्रापय पत्युरन्तिकम्' इत्यादिषु केवलस्यापि प्रयोगो द्रष्टव्यः। किं कस्मात्।

(की) वैलक्ष्यं लज्जां नाटयति अभिनयति ।

(१) शल्यानीति । कङ्कवदनैः कङ्कस्य पक्षिविशेषस्य वदनं मुखमिव वदनं अग्रं येषां तैः एतत्संज्ञकैः शल्योद्धरणोपयुक्तैर्यन्त्रविशेषैः करणभूतैः । शल्यानि शलन्ति आशुगच्छन्ति शरीरान्तरिति शल्यानि मनः शरीरयोर्बाधाजनकानि शरीरान्तः प्रविष्टानि बाणाग्रादीनि कर्मभूतानि व्यपनीय दूरीकृत्य उद्धृत्येत्यर्थः । कङ्कटे कं देहं कटत आवृणोति तथाभूते कवचे उन्मोचिते शरीरादपसारिते सति व्रणपट्टकेषु व्रणानां शस्त्रप्रहारजनितानां संबन्धिषु पट्टकेषु वस्त्रादिपट्टिकासु विरोपणाद्यर्थासु बद्धेषु सत्सु शनकैः शनैः । अव्ययसर्वनाम्नामकच् प्राक्टेरित्यकच् । कर्णे एतन्नामके वीरे कृतापाश्रयः कृतः अपाश्रयः अवलम्बनं येन तथाभूतः सन् । स्नेहवशात्कर्णस्यैव शरीरमुपधानमिवाश्रयन्नित्यर्थः। निर्जितसान्त्वितान् आदौ निर्जितान्पराजितान्पश्चात्सान्त्वितान् कृतसान्त्वनान् । पूर्वकालेत्यादिना समासः ।

(धृतराष्ट्रो गान्धारी च स्पर्शेनोपेत्यालिङ्गतः ।) (क्कु)

**गान्धारी**—वच्छ ! अदिगाढप्पहारवेअणापज्जाउलस्स अम्हेसु सण्णिहिदेसु वि ण प्पसरदि दे वाणी । (वत्स ! अतिगाढप्रहारवेदनापर्याकुलस्यास्मासु संनिहितेष्वपि न प्रसरति ते वाणी । (क्कू)

---

निर्जिता अपि सान्त्वनीयाः शत्रव इत्यसौ राज्ञां धर्मः । नरपतीन् । शत्रुपक्ष्यान् राज्ञः कर्मभूतान् लीलया दूरात् आलोकयन् भवान् पापेन पापविशिष्टेन । एतेन सुकृतैकसुलभत्वं सुखपृच्छाया गम्यते । मया कर्त्रा हे पुत्रक अनुकम्पनीय पुत्र वेदना दुःखं सत्या सोढुं शक्येति प्रश्ने काकुः । सोढुं शक्या किमित्यर्थः । इति न पृष्टः । तदेतन्मे पापमेवाभिव्यञ्जयतीति भावः । 'वेदना ज्ञानदुःखयो'रिति मेदिनी । कङ्कवदनं च कङ्कमुखापरपर्यायं चतुर्विंशतौ स्वस्तिकयन्त्रेष्वन्यतमम् । अन्वर्थं च नामैतदेतस्य । कङ्कस्य हि पक्षिण इवास्य मुखं भवतीति । अष्टादशाङ्गुलप्रमाणं चैतत् । स्वस्तिकयन्त्राणि च मसूराकृतिभिः कीलैरवबद्धानि मूलेऽङ्कुशवदावृत्तवारङ्गा(मुष्टी)ण्यस्थिविनष्टशल्योद्धरणार्थमुपदिश्यन्ते । 'दृश्यं सिंहमुखाद्यैस्तु गूढं कङ्कमुखादिभिः । निर्हरेत्तु शनैः शल्यं शास्त्रयुक्तिव्यपेक्षया ।' इति सुश्रुते सूत्रस्थाने सप्तमेऽध्याये । शल्यविषयेऽपि तत्रैव षड्विंशेऽध्याये 'शलश्वलआशुगमन इति धातुस्तस्य शल्यमिति रूपम् । तद्द्विविधं शारीरमागन्तुकं च । सर्वशरीराबाधकरं शल्यं (मनः शरीराबाधकराणि शल्यानीति सप्तमेऽध्याये) । शारीरं रोमनखादि धातवोऽन्नमलदोषाश्च दुष्टाः । आगन्त्वपि च शारीरशल्यव्यतिरेकेण यावन्तो भावा दुःखमुत्पादयन्ति । इति । व्रणबन्धद्रव्याणि च तत्रैवाष्टादशेऽध्याये विनिर्दिष्टानि 'क्षौमकार्पासाविकदुकूलकौशेयपत्रोर्णचीनपट्टचर्मान्तर्वल्कलालाबुशकललताविदलरज्जुतूलफलसन्तानिकालौहानी'ति । अत्र पापेनेत्यनुतापो व्यज्यते । वत्सलश्चात्र रसः । स चानुतापस्याङ्गमिति रसवानलङ्कारः । तल्लक्षणं च दर्पणे । रसभावौ तदाभासौ भावस्य प्रशमस्तथा । गुणीभूतत्वमायान्ति यदाऽलङ्कृतयस्तदा । रसवत्प्रेय ऊर्जस्वि समाहितमिति क्रमादिति ॥ शार्दूलविक्रीडितं वृत्तम् ।

(क्कु) स्पर्शेनेति । अन्धत्वादिति भावः। उपेत्यसमीपे गत्वा।

(क्कू) अतिगाढेति। अतिशयेन गाढोऽन्तः प्रविष्टोऽतिगभीर इत्यर्थः यः प्रहारः शस्त्राघातस्तज्जन्यो व्रण इत्यर्थः तेन या वेदना व्यथा तया पर्याकुलस्य व्याकुलस्य । वाचोऽप्रसरणे हेतुरयम् । अस्मासु सन्निहितेषु समीपमनुप्राप्तेषु सत्स्वपि ते वाणी न प्रसरति मुखाद्बहिर्निःसरति ।

**धृतराष्ट्रः**—वत्स दुर्योधन ! किमकृतपूर्वः संप्रति मय्यप्ययमव्याहारः? (क्के)

**गान्धारी**—वच्छ ! जइ तुमं वि अम्हे णालवसि ता किं संपदं वच्छो दुस्सासणो आलवदि अध दुम्मरिसणो वा अण्णो वा? ( वत्स ! यदि त्वमप्यस्मान्नालपसि तत्किं सांप्रतं वत्सो दुःशासन आलपत्यथ दुर्मर्षणो वान्यो वा? (क्कै)(इति रोदिति)

**दुर्योधनः**—

जातोऽहमप्रतिकृतानुजनाशदर्शी
　तातस्य बाष्पपयसां तव चाम्ब ! हेतुः ।
दुर्जातमत्र विमले भरतान्वये वः
　किं मां सुतक्षयकरं सुत इत्यवैषि ॥ २ ॥

---

(क्के) अकृतपूर्वः पूर्वं न कृतः । मयि मद्विषयेऽपि अव्याहारः भाषणाभावः । किं कस्मात् कारणात् । 'व्याहार उक्तिर्लपितम्' इत्यमरः ।

(क्कै) न आलपसि भाषसे । तदिति तर्हीत्यर्थे । आलपति आलपिष्यतीत्यर्थः । दुःशासनदुर्मर्षणौ दुर्योधनस्य भ्रातरौ । त्वदेकशेषपुत्राणां नास्त्यस्माकमपरमालम्बनमिति भावः ।

(२) जात इति । हे अम्ब मातः । अम्बार्थनद्योरिति ह्रस्वः । अप्रतिकृतः न प्रतिकारविषयीकृतः यः अनुजानां कनीयसां भ्रातॄणां नाशः शत्रुकृतः संहारस्तं द्रष्टुं शीलं यस्य तथाभूतः । एतेनात्मनोऽतिमात्रमेव गर्हणीयत्वं द्योत्यते । अहं तव तातस्य धृतराष्ट्रस्य च बाष्पपयसां अश्रुजलानां हेतुः कारणं जातः । अनुजान्संहरत्स्वपि शत्रुषु न मया प्रतिकृतं प्रत्युत दृष्टोऽप्यसौ नाशस्ततोऽहमेव भवच्छोकहेतुरित्यर्थः । अत एव च अत्र विमले निर्मले विशुद्ध इत्यर्थः भरतान्वये भरतकुले दुर्जातं दुष्टं जातं जन्म यस्य तथाभूतं कुलपांसनमित्यर्थः । वः युष्माकं सुतक्षयकरं पुत्रनाशस्य कर्तारं मां सुत इति आत्मनः पुत्र इति किं कस्मात् अवैषि जानासि? नैतद्युक्तमिति भावः । यद्वा किमित्यवैषीत्यतः परं योज्यम् । यस्ते पुत्रः स्यात्कथमसावात्मनो भ्रातॄणां हननेऽप्यौदासीन्यमालम्ब्य तत्र कारणत्वमालम्बेत । तत एव च नाहं त्वया सुतत्वेनावगन्तव्य इति भावः । एतेन भ्रातृषु निरतिशया प्रीतिस्तन्नाशतश्च दुःखातिशयस्तत्र प्रतीकाराकरणेन संजातं च वैमनस्यं द्योत्यते । पूर्वार्धे काव्यलिङ्गमलङ्कारः । वसन्ततिलकावृत्तम् ।

**गान्धारी**—जाद ! अलं परिदेविदेण । तुमं वि दाव एक्को इमस्स अन्ध जुअलस्स मग्गोवदेसओ । ता चिरं जीव । किं मे रज्जेण जएण वा ।
(जात ! अलं परिदेवितेन । त्वमपि तावदेकोऽस्यान्धयुगलस्य मार्गोपदेशकः । तच्चिरं जीव । किं मे राज्येन जयेन वा । )(क्को)

**दुर्योधनः**—

मातः! किमप्यसदृशं कृपणं वचस्ते
सुक्षत्रिया क्व भवती क्व च दीनतैषा ? ।
निर्वत्सले ! सुतशतस्य विपत्तिमेतां
त्वं नानुचिन्तयसि रक्षसि मामयोग्यम् ॥ ३ ॥

नूनं विचेष्टितमिदं सुतशोकस्य । (क्कौ)

---

(क्को) परिदेवितेन विलापेन । परिपूर्वाद्देवतेर्भावे क्तः । अलं कृतम् । तावदिति वाक्यालङ्कारे । अस्य अस्मत्स्वरूपस्य धृतराष्ट्रस्य मम चेत्यर्थः । अन्धयुगलस्य अन्धद्वयस्य । एतेनावलम्बनसापेक्षत्वं व्यज्यते । मार्गोपदेशकः मार्गस्य कथयिता । दिशिरुच्चारणक्रिय इति वचनात् । राज्येन जयेन शत्रुपराभवेन वा मे किं न किमपि फलम् । तदपेक्षया तवैव ज्यायस्त्वात्त्वमेव चिरं जीव मा नाम भवतु नो राज्यं जयोऽपि वेत्यर्थः ।

(३) मातरिति । हे मातः ते वच उक्तपूर्वं वचनं किमपि यत्किञ्चन असदृशं अननुरूपं कृपणं दैन्ययुक्तं च । अस्तीति शेषः । सुक्षत्रिया शोभनक्षत्रियजातिः । अर्यक्षत्रियाभ्यां वा स्वार्थ इति ङीषो विकल्पाट्टाप् । भवती क्व ? एषा किं मे राज्येन जयेन वेतिवचनरूपा दीनता दैन्यं च क्व ? विसदृशेयं भवत्याः क्षत्रियभावस्येत्यर्थः । हे निर्वत्सले! निर्गतो वत्सलो वात्सल्यं (स्नेहः) यस्यास्तथाभूते स्नेहशून्ये इत्यर्थः। 'वत्सलो वात्सल्यमि' ति जटाधरः । एतां विद्यमानां सुतशतस्य विपत्तिं मरणरूपां यातनां त्वं न अनुचिन्तयसि मनसि करोषि अयोग्यं च मां रक्षसि । नैतद्युक्तमिति भावः । 'विपत्तिरपि यातनापदोर्योषित्' इति मेदिनी । अत्र सुक्षत्रियत्वदीनत्वयोः परस्परविरूपयोर्धर्मयोः संघटनोक्तेर्विषमालङ्कारः । 'विरूपयोः संघटना या च तद्विषमं मतम्' इति दर्पणवचनात् । अत्र च दुर्योधनस्याभिमानप्रदर्शनादभिमानाख्या नाटयालङ्कृतिः । तदाहुः 'अभिमानः स एव स्यात्' इति । उक्तपूर्वलक्षणं वसन्ततिलकाख्यं वृत्तम् ।

(क्कौ) एतत् दैन्यरूपं सुतशोकस्य पुत्रविषयकस्य शोकस्य विचेष्टितं कर्म सुतशोक एवैवं त्वां विचेष्टयतीत्यर्थः ।

**संजयः**—महाराज ! किं वायं लोकवादो वितथो 'न घटस्य कूपपतने रज्जुरपि तत्र प्रक्षेप्तव्या ' इति । (क्क)

**दुर्योधनः**—अपुष्कलमिदम् । उपक्रियमाणाभावे किमुपकरणेन ? (इति रोदिति । )(क्कः)

**धृतराष्ट्रः**—(दुर्योधनं परिष्वज्य । ) वत्स ! समाश्वसिहि । समाश्वासय चास्मानिमामतिदीनां मातरं च । (क्च)

**दुर्योधनः**—तात ! दुर्लभः समाश्वास इदानीं युष्माकम् । किं तु (क्चा)

कुन्त्या सह युवामद्य मया निहतपुत्रया ।
विराजमानौ शोकेऽपि तनयाननुशोचतम् ॥ ४॥

---

(क्क) लोकवादो लोकोक्तिः । तामेवाह नेति घटस्य कूपपतने कूपे पतने तत्र कूपे रज्जुः घटाधारभूताऽपि न प्रक्षेप्तव्या इति लोकवाद इत्यनेन संबन्धः । नायं लोकवादो वितथ इति भावः । अत एव च मृतेष्वपि घटस्थानीयेषु शते पुत्रेषु नैव रज्जुस्थानीयो भवानपि मरणायानुमोदनीय इति भावः । अत्र रज्जुस्तत्रैव प्रक्षेप्तव्येत्यादयः पाठा अयुक्ता इत्युपेक्षिताः ।

(क्कः) इदं घटस्य कूपपतन इत्यादि वचनं अपुष्कलं अव्यापकं नाव्यभिचरितं न सर्वत्रापि प्रवर्तमानमित्यर्थः । कुत एतत्तदाह । उपक्रियमाणेति । उपक्रियमाणस्य उपकारे विषयीभूतस्य अभावे अविद्यमानत्वे उपकरणेनोपकारसाधनेन किं? न किंचित्फलमित्यर्थः । अत एव च मया येषां साहाय्यमाधेयं त एव चेन्न सन्ति मे भ्रातरस्तदा न मया किमपि प्रयोजनमिति भावः । एवं च यत्रोपकरणस्यैकस्मिन्नुपक्रियमाणे विनष्टेऽप्युपक्रियमाणान्तरलाभः सुघटस्तत्रैव लोकवादस्यास्य प्रवृत्तिर्न पुनः सर्वत्रेति भावः ।

(क्च) परिष्वज्य आलिङ्ग्य । समाश्वसिहि धीरो भव । अस्मान्मामित्यर्थः । अस्मदो द्वयोश्चेति बहुवचनम् । समाश्वासय सान्त्वय ।

(क्चा) इदानीं युष्माकं समाश्वासः सान्त्वनं दुर्लभः दुःखेन लब्धुं शक्यः । अलभ्य इति यावत् ।

(४) किंतर्हि समाचरणीयमित्याह कुन्त्येति । अद्य मया कर्त्रा निहतपुत्रया कुन्त्या पाण्डुभार्यया सह शोकेऽपि विराजमानौ शत्रूणामशेषतो विनिर्मूलनाद्विशेषेण शोभमानौ युवां

**गान्धारी**—जाद ! एदं एव्व संपदं प्पभूदं जं तुमं वि दाव एक्को णाणुसोचइदव्वो । ता जाद ! प्पसीद । एसो अंजली । णिवट्टेहि समरव्वावारादो । अपच्छिमं करेहि पिदुणो वअणम् । ( जात ! एतदेव सांप्रतं प्रभूतं यत्त्वमपि तावदेको नानुशोचितव्यः । तज्जात ! प्रसीद । एष तेञ्जलिः । निवर्तस्व समरव्यापारात् । अपश्चिमं कुरु पितुर्वचनम् ) (क्चि)

**धृतराष्ट्रः**—वत्स ! शृणु वचनमम्बाया, मम च निहताशेषबन्धुवर्गस्य । पश्य । (क्ची)

---

त्वं च मे माता चेति द्वौ तनयानात्मनः पुत्राननुशोचतम् शोकविषयीकुरुतम् । पुत्रविषयकं शोकं कुरुतमित्यर्थः । एतेनाद्यैव सर्वानपि पाण्डवान्निर्मूल्याहं प्राणान्परित्यक्ष्यामीति दुर्योधनाभिप्रायो व्यज्यते । पथ्यावक्त्रं वृत्तम् ।

(क्चि) जात वत्स । एकः त्वमपि न अनुशोचितव्यः शोकविषयीकरणीयः अस्माभिरितिशेषः । त्वामुद्दिश्यास्माभिर्न शोकः करणीय इत्यर्थः इति यत् एतत् एव सांप्रतमस्मिन् विप्रतीपवर्तिनि समये प्रभूतं बहु । मृताः किलापरे पुत्रास्तथापि यत्त्वमेकोऽपि जीवसि तदेतदपि बहु, प्रतिकूलो हीदानीं नः समय इति भावः। अत्र 'यत्त्वमपि तावदेको जीवसि । कमन्यमनुशोचिष्यामि । अकालस्ते समरस्य ।' इत्यपि पाठः । तत्र कमन्यमनुशोचिष्यामीति न शोभते । त्वामेवानुशोचिष्यामीत्यर्थात् । एवमपरेऽपि द्वित्रा अयुक्ता इत्युपेक्षिताः पाठाः । तत् यस्मादिदं प्रभूतं तस्मात् । ते तुभ्यं अञ्जलिः प्रणामार्थमारचित इति भावः । अयं ते प्रणाम इत्यर्थः । अत्र शीर्षाञ्जलिरित्यपि पाठः । तत्र शीर्षे कृतोऽञ्जलिः प्रणामः । निवर्तस्व निवृत्तो भव । अत्र निवर्त्यतामित्यपि क्वचित्पाठः । तत्र णिज् निरर्थकः । निवृत्यतामितिपाठेपि उत्तरवाक्यानुरोधेन कर्तरि लोट आवश्यकत्वं द्रष्टव्यमन्यथा भग्नक्रमत्वापत्तेः । समरव्यापारात्समरकर्मणः । पितुर्वचनमाज्ञारूपं अपश्चिमं पश्चिमं चरमं न भवति तथाभूतं कुरु । यदि पितुर्वचनमुल्लङ्घ्य समरे प्रवर्त्स्यसि तदा शोकार्तपिता ते मरिष्यतीति चरम एवायं तदीय आदेशः स्यात्तद्यथैवं न स्यात्तथा कुर्विति भावः ।

(क्ची) अम्बाया मातुर्गान्धार्याः । निहताशेषबन्धुवर्गस्य निहतः शत्रुभिर्मारितः अशेषः सर्वः बन्धूनां बान्धवानां वर्गः समूहो यस्य तथाभूतस्य । मम च वचनं शृणु अनुतिष्ठेति यावत् । बान्धवशोकाकुलस्य मे न पुनः शोकान्तरे पातनं ते युक्तमिति भावः।

दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ
कर्णस्यात्मजमग्रतः शमयतो भीतं जगत्फाल्गुनात् ।
वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना
मानं वैरिषु मुञ्च तात ! पितरावन्धाविमौ पालय ॥ ५ ॥

---

(५) नायं संग्रामसमय इत्याह । दायादा इति । ययोर्बलेन साहाय्यभूतेन दायादाः दायं पित्रादिद्रव्यमदन्त्युपभुञ्जते तथाभूता ज्ञातयः पाण्डवा इत्यर्थः । 'दायादौ ज्ञातिपुत्रयोः' इति विश्वः । न गणिताः गणनाविषयीकृताः संभाविता इति यावत् । अस्माभिरिति शेषः । अस्तित्वेन संभाव्यमानाः किल गणनायां विषयीक्रियन्ते । ततश्चातिमात्रमेव दुर्बला इति नास्माभिः संख्यानविषयीकृता दायादा इति भावः । एतेन द्रोणभीष्मयोः सामर्थ्यातिशयः पाण्डवानां च ततः क्षुद्रत्वं द्योत्यते । तौ द्रोणभीष्मौ स्वनामख्यातौ वीरौ हतौ वैरिभिरित्यर्थात् । अत्र दायादा इत्यत्र देवा वा इत्यपि पाठः । तत्राऽप्यर्थो वा शब्दः। देवा अपीत्यर्थः । अप्रसिद्धः पुनरप्यर्थे वाशब्द इत्युपक्षितोयं पाठोऽस्माभिः । कर्णस्य आत्मजं पुत्रं वृषसेनं अग्रतः कर्णस्येत्यर्थात् शमयतो मारयतः फाल्गुनात् फल्गुनीनक्षत्रे जातादर्जुनात् । 'श्वेताश्वः फाल्गुनो जिष्णुरि' त्यर्जुनपर्यायेषु शारदीनाममाला । 'भीत्रार्थानां भयहेतुरि' ति पञ्चमी । तत्र जात इत्यणः श्रविष्ठाफल्गुनीत्यादिना लुकि लुक् तद्धित लुकीति स्त्रीप्रत्ययलुकि च फल्गुन इति ततः प्रज्ञादित्वात्स्वार्थेऽणि फाल्गुन इति रूपम् । निरुक्तं चैतन्महाभारते 'उत्तराभ्यां च पूर्वाभ्यां फल्गुनीभ्यामहं दिवा । जातो हिमवतः पृष्ठे तेन मां फाल्गुनं विदुः ॥' इति । कर्णस्यात्मजमिति दुराधर्षत्वं व्यज्यते । कर्णस्याग्रत इति चाघटनीयस्यार्थस्य घटनात्कालस्यात्यन्तमेव प्रतिकूलत्वं ध्वन्यते । 'शमनं शान्तिवधयो' रिति मेदिनी । अत्र शमयता भीतं न बीभत्सुनेत्यपि पाठः स च ग्राम्यत्वादुपेक्ष्यः । मे वत्सानां त्वदितरेषां पुत्राणां निधनेन मरणेन त्वय्येव शेषप्रतिज्ञत्वे हेतुभूतेन । अधुनेदानीं रिपुः शत्रुर्भीमः त्वयि सावशेषत्वनिमित्तभूते दुर्योधने शेषप्रतिज्ञः शेषा अवशेषवती प्रतिज्ञा शत्रुहननरूपा यस्य तथाभूतः । शेषशब्दादर्शआद्यच् । तन्निमित्तमेव सावशेषाऽस्य प्रतिज्ञेति भावः । मे वत्सानामिति मत्सदृशवीर्याणामिति व्यज्यते । अशेषाणामपि प्रतिज्ञानुसारेण हननात्त्वापि नास्ति विजयाधिगमप्रत्याशेति च द्योत्यते । अतः हे तात वत्स । 'वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः । शिष्योऽनुजश्च वक्तव्य' इति दर्पणम् । वैरिषु शत्रुषु विषये मानं मुञ्च त्यज । संग्रामाभिनिवेशतो निवर्तस्वेति भावः । इमौ ते पुरतः स्थितौ अन्धावित्यपरित्याज्यत्वं चावश्यं

**दुर्योधनः**—समरात्प्रतिनिवृत्य किं मया कर्तव्यम्? ।

**गान्धारी**—जाद! जं पिदा दे विउरो वा भणादि । ( जात! यत्पिता ते विदुरो वा भणति । )

**संजयः**—देव! एवमिदम् ।

**दुर्योधनः**—संजय! अद्याप्युपदेष्टव्यमस्ति? । **(क्चु)**

**संजयः**—देव! यावत्प्राणिति तावदुपदेष्टव्यभूमिर्विजिगीषुः प्रज्ञावताम् । **(क्चू)**

**दुर्योधनः**—(सक्रोधम् ।) शृणुमस्तावद्भवत एव प्रज्ञावतोऽस्मान्प्रति प्रतिरूपमुपदेशम् । **(क्चे)**

---

पालनीयत्वं च द्योत्यते । पालय रक्ष । संग्रामं गतस्य नास्ति ते जीवितप्रत्याशा त्वदभावे चान्धयोरावयोः पालयितृशून्ययोः क्षते क्षारसेकवत् परमं कष्टमिति भावः । पाल रक्षण इति चौरादिकाल्लोट् । अत्र वैरिविषयकमानत्यागे वाक्यान्तरार्थस्य हेतुतया वाक्यगतहेतुकं काव्यलिङ्गमलङ्कारः । स च संग्रामं गतस्त्वमवश्यं मरिष्यसि प्रतिकूलत्वात्कालस्येति वस्तु ध्वनयति । अत्र तृतीयपादे 'वत्सानां निधनाच्च मारुतिरसौ शेषप्रतिज्ञस्त्वयि' इत्यपि पाठः । अयमेव च साधुः । मे वत्सानामिति हि दुर्योधनं विहायोक्तं न शोभत इति । शार्दूलविक्रीडितं वृत्तम् ॥

**(क्चु)** अद्यापि इदानीमपि गरीयस्यां हानौ संवृत्तायां प्रसक्तेऽपि संग्रामे । नायमुपदेशावसरः । कर्तव्ये ह्यविनिश्चित उपदेश उपयुज्यते । मम तु विनिश्चितमिदानीमेतदिति।

**(क्चू)** विजिगीषुः शत्रून् विजेतुमिच्छुः पुरुषः । यावत्प्राणिति जीवति तावत् प्रज्ञावतां बुद्धिमतां उपदेष्टव्यभूमिः उपदेशपात्रम् । यावज्जीवन्ति तावदुपदेष्टव्या एव प्रज्ञावद्भिर्विजिगीषव इत्यर्थः । प्रज्ञावतामिति कृत्यानां कर्तरि वेति षष्ठी । प्राणितीति अन प्राणन इत्यत आदादिकाल्लटि रुदादिभ्यः सार्वधातुक इति रुदादित्वादिट् । अनितेरिति णत्वम् । अत्र पाठान्तराण्यसङ्गतानीत्युपेक्षितानि।यत्त्वत्र 'संपन्नश्च प्रकृतिभिर्महोत्साहः कृतश्रमः । जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः ।' इति जगद्धरेणोपन्यस्तं विजिगीषुलक्षणं प्रकृतेऽनुपयुक्तम् । दुर्योधनस्योक्तलक्षणलक्षितत्वाभावेन विजिगीषुत्वाभावप्रसक्तेरिति ।

**(क्चे)** सक्रोधमिति । संजयस्य प्रतिकूलभाषित्वात्क्रोधः । सासूयमिति त्वपपाठः। तत्रत्र ।कमत्र क्रोधेनेति दुर्योधनक्रोधस्यैव प्रकाशनादिति । प्रज्ञावत इति सोत्प्रासाक्तिः।

**धृतराष्ट्रः**—वत्स ! युक्तवादिनि संजये किमत्र क्रोधेन ? । यदि प्रकृतिमापद्यसे तदहमेव भवन्तं ब्रवीमि । श्रूयताम् । (क्चै)

**दुर्योधनः**—कथयतु तातः ।

**धृतराष्ट्रः**—वत्स ! किं विस्तरेण ? । संधत्तां भवानिदानीमपि युधिष्ठिरमीप्सितपणबन्धेन । (क्चो)

**दुर्योधनः**—तात ! तनयस्नेहवैक्लव्यादम्बा बालिशत्वेन संजयश्च काममेवं ब्रवीतु । युष्माकमप्येवं व्यामोहः ? । अथ वा प्रभवति पुत्रनाशजन्मा हृदयज्वरः । अन्यच्च ! तात ! अस्खलितभ्रातृशतस्तदाऽवधीरितवासुदेवसामोपन्यासः संप्रति दृष्टपितामहाचार्यानुजराजचक्रविपत्तिः स्वशरीरमात्रस्नेहादुदात्तपुरुषव्रीडावहमसुखावसानं च कथमिव करिष्यति दुर्योधनः सह पाण्डवैः संधिम् ? । अन्यच्च नयवेदिन्संजय ! (क्चौ)

---

अस्मान्प्रति अस्मद्विषये प्रतिरूपं योग्यम् । अत्रात्मनि वहुवचनस्य संजये चैकवचनस्य प्रयोग उपदेशानधिकारित्वं संजयस्येति दुर्योधनाभिप्रायमभिव्यञ्जयति ।

(क्चै) युक्तवादिनि युक्तं योग्यं वदितुं शीलं यस्य तथाभूते अत्र सञ्जये क्रोधेन किं ? न किमपि फलमित्यर्थः । प्रकृतिं विकाराभावं शान्तिमिति यावत् । आपद्यसे प्राप्नोषि तत् तर्हि ।

(क्चो) इदानीमपि अस्मिन्नपि काले ईप्सितपणबन्धेन ईप्सितेन अभीष्टेन पणबन्धेन समयकरणेन करणभूतेन युधिष्ठिरं धर्मं ( युधि संग्रामे स्थिरः अविचलः । गवियुधिभ्यां स्थिर इति षत्वं हलदन्तात्सप्तम्याः संज्ञायां इत्यलुक् ) सन्धत्ताम् वशीकरोतु क्रियाफलस्य कर्तृगामित्वात् आत्मनेपदं आत्मार्थं सन्धत्स्वेतिभावः । "तान्सर्वानभिसन्दध्यात्" इतिमनुस्मृतौ सम्पूर्वकस्य दधातेर्वशीकरणार्थत्वं द्रष्टव्यम् । सन्धिकरणार्थत्वे तु कर्मणो धात्वर्थानुप्रविष्टत्वात् अकर्मकत्वं स्यात् । तदाहुः "धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया " इति ।

(क्चौ) तनयस्नेहवैक्लव्यात् तनयेषु पुत्रेषु विषये यः स्नेहः प्रेम तेन यत् वैक्लव्यं व्याकुली भावः तस्मात् एवंवचनेहेतुभूतात् अम्बा माता । बालिशत्वेन अज्ञत्वात् । हेतौ तृतीया "शिशावज्ञे च बालिशः " इत्यमरः । कामं ब्रवीतु अनिष्टमपि वचनमेतदनु-

हीयमानाः किल रिपोर्नृपाः संदधते परान् ।
दुःशासनेन हीनोऽहं सानुजः पाण्डवोऽधुना ॥ ६ ॥

**धृतराष्ट्रः**—वत्स ! एवं गतेऽपि मत्प्रार्थनया न किंचिन्न करोति युधिष्ठिरः। अन्यच्च सर्वं दैवापकृष्टं मन्यते युधिष्ठिरः । (**क्च**)

---

मन्य इत्यर्थः । 'अकामानुमतौ काम' मित्यव्ययकोषः । 'युष्मदो गौरव ' इति बहुवचनम्। व्यामोहः भ्रमः । अन्यथाबुद्धिरिति यावत् । पुत्रनाशजन्मा पुत्राणां नाशात् जन्म यस्य तथाभूतः हृदयज्वरः मनसस्तापः प्रभवति ईष्टे । यद्भवानप्येवम्ब्रवीति तदेतत् ते मनस्तापस्यैव चेष्टितमित्यर्थः। सर्वथा न युक्तं सन्धातुमिति भावः।तदा सन्ध्यर्थं श्रीकृष्णागमनसमये अस्खलितभ्रातृशतः न स्खलितं रणे पतितं भ्रातॄणां शतं यस्य तथाभूतः । अवधीरितवासुदेवसामोपन्यासः अवधीरितः अवज्ञातः वासुदेवस्य श्रीकृष्णस्य साम्नः सम्बन्धी उपन्यासः वचनविशेषः येन तथाभूतः । सति विभवे तिरस्कृतरिपुप्रार्थन इत्यर्थः । दृष्टेति । दृष्टा पितामहस्य भीष्मस्य आचार्यस्य गुरोर्द्रोणस्य अनुजानां कनीयसां भ्रातॄणां राजचक्रस्य नृपतिसमूहस्य ( राज्ञां, चक्रस्य सैन्यस्य चेति वा ) विपत्तिः नाशः येन तथाभूतः । "व्रज सैन्यरथाङ्गयोः " इति चक्रपर्यायेषु मेदिनी । दुर्योधन इत्यात्मनामोल्लेखः अभिमानातिशयं द्योतयति । स्वशरीरमात्रस्नेहात् केवलं आत्मदेहविषयकात् प्रेम्णः हेतुभूतात् । उदात्तपुरुषव्रीडावहं उदात्तानां महतां पुरुषाणां व्रीडावहं लज्जाकरं । "उदात्तोदातृमहतोः " इति हेमचन्द्रः । असुखावसानं असुखं दुःखं अवसाने यस्य तथाभूतं पश्चात्तापजनकत्वात् इतिभावः । नयवेदिन् नीतिज्ञानशील ।

(६) हीयमाना इति । रिपोः शत्रोः अपेक्षया हीयमानाः अपकृष्यमाणाः नृपाः परान् रिपून्सन्दधते तदुक्तं अनुमत्य वशीकुर्वन्ति । अपकर्षवन्त उत्कर्षवता सन्धिं कुर्वन्तीत्यर्थः। किलेति प्रसिद्धौ । 'अलीके च प्रसिद्धौ च' इति किलशद्बार्थेषु अव्ययकोशः।अधुना इदानीम् । अहं दुर्योधनः दुःशासनेन एतत्संज्ञकेन भ्रात्रा । उपलक्षणमेतत् अपरेषां भ्रातॄणां अनुजैरित्यर्थः हीनः शून्यः पाण्डवः पाण्डुपुत्रो युधिष्ठिरः सानुजः अनुजैः सहितः । एवं च अपकृष्टेन मया उत्कर्षशाली युधिष्ठिरः सन्धिं नानुमन्येतेति भावः। अत्र परानित्यत्र 'कथं' इति उत्तरार्धे च 'दुःशासने हते हीनाः सानुजाः पाण्डवाः कथं 'इति 'दुःशासने हते हीनाः पाण्डवाः सानुजे कथं' इति च पाठः । एते पुनः पाठा अयुक्ता इति समुपेक्षिता अस्माभिः । पथ्यावक्त्रं वृत्तम् ।

(**क्च**) एवंगते इत्थंसति । दृश्यतेहि गच्छतेरपि विद्यमानार्थकत्वं क्वापि 'हृदयगतो इत्यादौ । न किञ्चिन्न करोति न खलु तथाविधं किमपि यन्न करिष्यतीत्यर्थः।क्रुद्धो

**दुर्योधनः**—कथमिव ? । **(क्वः)**

**धृतराष्ट्रः**—वत्स ! श्रूयतां प्रतिज्ञा युधिष्ठिरस्य । नाहमेकस्यापि भ्रातुर्विपत्तौ प्राणान्धारयामीति । बहुच्छलत्वात्सङ्ग्रामस्यानुजनाशमाशङ्कमानो यदैव भवते रोचते तदैवासौ सज्जः संधातुम् । ( **क्ट** )

**संजयः**—एवमिदम् ।

**गान्धारी**—जाद ! उपपत्तिजुत्तं पडिवज्जस्स पिदुणो वअणम् । ( जात ! उपपत्तियुक्तं प्रतिपद्यस्व पितुर्वचनम् । ) **(क्टा)**

**दुर्योधनः**—तात ! अम्ब ! संजय !

एकेनापि विनाऽनुजेन मरणं पार्थः प्रतिज्ञातवा-
न्भ्रातॄणां निहते शतेऽभिलषते दुर्योधनो जीवितुम् ।
तं दुःशासनशोणिताशनमरिं भिन्नं गदाकोटिना
भीमं दिक्षु न विक्षिपामि कृपणः संधिं विदध्यामहम् ।। ७ ।।

---

वर्तमानसामीप्ये भविष्यति लट् । सम्भाव्य निषेधनिवर्तने द्वौ प्रतिषेधौ ' इति वामनवचनान्नञो द्विः प्रयोगः । दैवापकृष्टं दैवेन अपकृष्टं आकृष्टं आक्रान्तमितियावत् । दैवाधीनमिति भावः ।

**(क्वः)** कथमिव केन प्रकारेण इव कस्मादिवेत्यर्थः। एष च न किञ्चिन्न करोतीत्यत्र प्रश्नः ।

**(क्ट)** प्रतिज्ञामाह नाहमिति। विपत्तौ सत्यां नाशे सति प्राणान् धारयामि जीविष्यामीत्यर्थः । वर्तमानसामीप्ये लट् । इति प्रतिज्ञेत्यनेन सम्बन्धः । बहुच्छलत्वात् बहूनि च्छलानि कपटानि यस्मिंस्तस्य भावः बहुच्छलत्वं तस्मात् । सन्धातुं सन्धिं कर्तुम् । भवते इति रुच्यर्थानां प्रीयमाण इति चतुर्थी ।

**(क्टा)** उपपत्तियुक्तं उपपत्त्या स्वार्थोपष्टम्भकयुक्त्या युक्तम् । प्रतिपद्यस्व स्वीकुरु । यदेतद्युक्तिसिद्धमभिहितं पित्रा तदनुतिष्ठेत्यर्थः ।

(७) एकेनेति । पार्थः पृथापुत्रो युधिष्ठिरः । एतेनासामर्थ्यं द्योत्यते । एकेनापि एकमात्रेणापि अनुजेन कनीयसा भ्रात्रा । पृथग्विनेति तृतीया । विना विरहितः । एक-

**गान्धारी:**—हा जाद दुस्सासण! हा मदङ्कदुल्ललिद! हा जुअराअ! अस्सुदपुव्वा क्खु कस्स वि लोए ईदिसी विअत्ती। हा! वीरसदप्पसविणी हदगन्धारी दुक्खसदं प्पसूदा। ण उण सुदसदम्। (हा जात दुःशासन! हा मदङ्कदुर्ललित! हा युवराज! अश्रुतपूर्वा खलु कस्यापि लोके ईदृशी विपत्तिः। हा वीरशतप्रसविनी हतगान्धारी दुःखशतं प्रसूता। न पुनः सुतशतम्।) (**क्टि**)

(सर्वे रुदन्ति।)

**संजयः**—(बाष्पमुत्सृज्य।) तात! अम्ब! प्रतिबोधयितुं महाराजमिमां भूमिं युवामागतौ। तदात्मापि तावत्संस्तभ्यताम्। (**क्टी**)

**धृतराष्ट्रः**—वत्स दुर्योधन! एवं विमुखेषु भागधेयेषु त्वयि चामुञ्चति

---

स्यापि भ्रातुर्विनाश इत्यर्थः। मरणं प्रतिज्ञातवान्। दुर्योधन इति सामर्थ्यातिशयो व्यज्यते। दुर्योधनः कर्ता भ्रातॄणां शते निहते शत्रुभिर्मारितेऽपि जीवितुं अभिलषते इच्छति। स्वरितेत्त्वादात्मने पदम्। अत्यन्तमेतद्विसदृशमत एव च न युक्तमिति भावः। अहं कर्ता तं दुःशासनशोणिताशनं दुःशासनस्य शोणितं रक्तं अश्नाति पिबतीति यावत् तथाभूतम्। कृत्यल्युटो बहुलमिति ल्युट्। अनेन क्षमानर्हत्वं द्योत्यते। अरिं शत्रुं भीमं गदाकोटिना गदाग्रेण भिन्नं विदारितं चूर्णीकृतमिति यावत्। दिक्षु न विक्षिपामि। कृपणः दीनः सन् संधिं विदध्यां कुर्याम्। अत्रविपरीतलक्षणया नैतत्संघटत इत्यर्थः। यद्वाऽत्र विक्षिपामि विदध्यामित्यत्र प्रश्ने काकुः। एवं करिष्यामीति संभाव्यते किमित्यर्थः। नैतद्दृश्यत इति भावः। अत्र अभिलषत इत्यत्र विषहत इत्यपि क्वचित्पाठः। स च सुगमः। तुर्ये च चरणे 'भीमं दिक्षु न विक्षिपत्यनुनयं तस्मिन्विधत्ते कथं' इत्यपि पाठस्तत्र च कथं न विक्षिपति तस्मिन्ननुनयं च विधत्त इत्यर्थः। अनुनयो विनयः। शार्दूलविक्रीडितं वृत्तम्।

(**क्टि**) हा इति। ईदृशी इयमिव भवदनुभूतेव दृश्यते तथाभूता कस्यापि विपत्तिर्मरणरूपा अश्रुतपूर्वा पूर्वं न श्रुता। वीरेति वीराणां शूराणां पुत्राणां शतं प्रसूते तथाभूता हतगान्धारी निन्द्या गान्धारी दुःखशतं प्रसूता। न पुनः पुत्र शतम्। अत्र पुत्राणां पुत्रत्वं प्रतिषिध्य दुःखशतत्वस्थापनादपह्नुतिरलङ्कारः। 'प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुति' रिति लक्षणात्। सा च दुःखातिशयमभिव्यञ्जयति।

(**क्टी**) प्रतिबोधयितुमुपदेष्टुम्। संस्तभ्यतां स्थिरीक्रियतां धैर्येण योज्यतामित्यर्थः

सहजं मानमरिषु त्वदेकशेषजीवितावलम्बनेयं तपस्विनी गान्धारी कमवलम्बतां शरणमहं च ? । (क्ट)

**दुर्योधनः**—श्रूयतां यत्प्रतिपत्तुमिदानीं प्राप्तकालम् । (क्टू)

कलितभुवना भुक्तैश्वर्यास्तिरस्कृतविद्विषः
प्रणतशिरसां राज्ञां चूडासहस्रकृतार्चनाः ।
अभिमुखमरीन्क्रुद्धान्घ्नन्तोः हताः शतमात्मजा
वहतु सगरेणोढां तातो धुरं सहितोऽम्बया ॥ ८ ॥

---

(क्ट) विमुखेषु पराङ्मुखेषु प्रतिकूलेषु सत्स्वित्यर्थः भागधेयेषु भाग्येषु । संदृश्यते किल भाग्यवाचिभ्यः शब्देभ्यः कविभिः प्रयुज्यमानं बहुवचनम् । 'सा निन्दन्ती स्वानि भाग्यानि बाला ।' इत्यादौ । अत्र च तत्तत्फलजनकस्य दैवस्य पार्थक्यविवक्षया बहुवचनं तदनङ्गाकारे च एकवचनमिति बोध्यम् । भागरूपनामभ्य इति धेयः स्वार्थे । अरिषु शत्रुविषये । सहजं सह जायते तथाभूतं आजन्मसिद्धं स्वाभाविकमित्यर्थः । त्वदेकशेषजीवितावलम्बना । त्वमेव एकः शेषोऽवशेषो येषां तथाभूतानि जीवितस्यावलम्बनानि यस्यास्तथाभूता । प्रनष्टत्वदितरावलम्बनेत्यर्थः । एतेन न युक्तं तवेदानीमेतद्वचनातिक्रमणमिति द्योत्यते । तपस्विनी अनुकम्पनीया दीनेति यावत् । 'तपस्वी तापसे चानुकम्प्ये त्रिष्वि' ति मेदिनी । शरणं रक्षितारं 'शरणं गृहरक्षित्रो' रित्यमरः । अहं चेति अवलम्बै इति विपरिणामेन संबध्यते ।

(क्टू) इदानीं यत्प्रतिपत्तुं स्वीकर्तुं प्राप्तकालं तच्छ्रूयतामित्यन्वयः । यत्तदोर्नित्यसंबन्धात्तदिति संबध्यते ।

(८) कलितेति । कलितानि आक्रान्तानि भुवनानि जगन्ति यैस्ते, भुक्तं ऐश्वर्यं ईश्वरभावो यैस्ते, तिरस्कृता विद्विषः शत्रवो यैस्ते, प्रणतानि नम्रीभूतानि शिरांसि येषां तथाभूतानां राज्ञां चूडासहस्रकृतार्चनाः चूडानां शिखानां सहस्रैः कृतं अर्चनं पूजनं येषां तथाभूताः । परः सहस्रैर्भूपतिभिः शिरसा प्रणता इत्यर्थः । 'चूडा शिखायां वलभौ' इति विश्वः । क्रुद्धान् कोपं प्राप्तानरीन् अभिमुखं संमुखं यथा तथा घ्नन्तः प्रहरन्तः । एतेन शौर्यातिशयो द्योत्यते । शत शतसंख्यावन्तः आत्मजाः पुत्रा हताः शत्रुभिर्मारिताः । शतमात्मजा इति शतशब्दस्य नित्यनपुंसकतया नित्यैकवचनतया च विशेषणविशेष्यभावः । यथा 'दारान्वन्भुवस्त्रिलोकजननीं वन्दे गिरां दैवतम्' इत्यादौः । तदुक्तं 'लिङ्गसंख्यावि-

विपर्यये त्वस्याधिपतेरुल्लङ्घितः क्षात्रधर्मः स्यात् । (क्टे)

(नेपथ्ये महान्कलकलः ।)

**गान्धारी**—( आकर्ण्य । सभयम् । ) जाद ! कहिं एदं हाहाकारमिस्सं तूररसिद सुणीअदि । ( जात ! कुत्रैतत् हाहाकारमिश्रं तूर्यरसितं श्रूयते । ) (क्टै)

**संजयः**—अम्ब ! भूमिरियमेवंविधानां भीरुजनत्रासजननी महानिनादानाम् । (क्टो)

---

भेदेऽपि विशेषणविशेष्यता । विभक्तिः पुनरेकैव विशेषणविशेष्ययोः ॥' इति । अतः अम्बया सहितो युक्तस्तातः पिता भवान् सगरेण एतन्नामकेन सूर्यवंश्येन राज्ञा ऊढां धृतां धुरं वहतु धारयतु । सगरपक्षे शतमित्यसंख्येयवाचि । अत्रेदमनुसन्धेयम् । 'आसीदयोध्याधिपतिः सगरो नाम भूपतिः । अपुत्रत्वाद्दूयमानस्तपस्तेपे स धार्मिकः ॥ तपसाराधितस्तेन प्रसन्नोऽभून्मुनिर्भृगुः । तस्य भार्याद्वये पुत्रजनिं प्राह महातपाः ॥ असमञ्जाभिधं ज्येष्ठा प्रासूत तनयं परा । षष्टिं पुत्रसहस्राणि भार्याभूमिपतेस्ततः ॥ असमञ्जो दुराचारः क्षिप्रं निर्वासितः पुरात् । अंशुमालीव जज्ञेऽस्य तनयोऽप्यंशुमानिति । सगरो हयमेधेन यष्टुमैच्छदथो नृपः । षष्टिः पुत्रसहस्राणि न्ययुङ्क्त तुरगावने ॥ अपाहरद्धयं शक्रो राक्षसीं तनुमास्थितः । भूपपुत्रास्तमन्वेष्टुमखनन्सकलां क्षितिम् । कपिलस्य मुनेरश्वं सविधेऽमी व्यलोकयन् । भस्मसादकरोदेतांस्तार्जितः स महामुनिः ।' इति । विशेषतश्च वृत्तमिदं वाल्मीकीये रामायणे बालकाण्डे ३८–४२ सर्गेषु द्रष्टव्यम् । अत्र च सगरेणोढां धुरं तातो वहत्वित्युक्तेरन्येनोढां धुरं कथमन्यो वहत्वित्याशङ्कायां सादृश्यमाक्षिप्यते ततश्च सगरेणोढां धुरमिवेत्यर्थलाभः । एवं चासंभवतो वस्तुसबन्धस्य बिम्बानुबिम्बबोधकत्वान्निदर्शनालङ्कारः। 'संभवन्वस्तुसंबन्धोऽसंभवन्वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना ॥' इति लक्षणात् । सगरेणोढायाः धुरो वहने च चरणत्रयगतोऽर्थो हेतुरिति काव्यलिङ्गं चैतयोः सङ्करः । हरिणी वृत्तम् । नसमरसला गः षड्वेदैर्हयैर्हरिणी मता ।' इति लक्षणात् ।

(क्टे) अस्य मदुक्तस्यार्थस्य विपर्यये वैपरीत्ये तु क्षात्रधर्मः उल्लङ्घितः अतिक्रान्तः स्यात् । न चैतद्युक्तं, समुपस्थितायामपि हि महीयस्यां विपदि धैर्यादविचलनमेव क्षत्रियाणां धर्म इति ।

(क्टै) हाहाकारमिश्रं हाहाशब्दोच्चारमिश्रं कुत्रोऽत्र करणसामान्यार्थकस्योच्चारणरूपविशेषणोपसंहारादिति । तूर्यरसितं वाद्यध्वनिः ।

(क्टो) एवंविधानां ईदृशानां महानिनादानां महतां शब्दानाम् । 'आन्महत'

**धृतराष्ट्रः**—वत्स संजय ! ज्ञायताम् । अतिभैरवः खलु विस्तारी हाहारवः । कारणेनास्य महता भवितव्यम् । **(क्टौ)**

**दुर्योधनः**—तात ! प्रसीद । पराङ्मुखं खलु दैवमस्माकम् । यावदपरमपि किंचिदत्याहितं न श्रावयति तावदेवाज्ञापय मां सङ्ग्रामावतरणाय । **(क्टं)**

**गान्धारी**—जाद ! मुहुत्तअं दाव मं मन्दभाइणीं समस्ससेहि । ( जात ! मुहूर्तं तावन्मां मन्दभागिनीं समाश्वासय । **(क्टः)**

**धृतराष्ट्रः**—वत्स ! यद्यपि भवान्समराय कृतनिश्चयस्तथापि रहः परप्रतीघातोपायश्चिन्त्यताम् । **(क्ठ)**

---

इत्यादिनाऽऽत् । इयं भूमिः स्थानम् । भीविंति भीरूणां भयशीलानां जनानां त्रासं भयं जनयति तथाभूता । कृत्यल्युटो बहुलमिति ल्युट् । टित्वान्ङीप् ।

**(क्टौ)** ज्ञायतां किमेतदिति शेषः । खलु निश्चयेन अतिभैरवः अतिशयेन भीषणः । विस्तारी विस्तरणशीलः हाहारवः हाहा इति शब्दः अस्तीति शेषः । हाहारवो- ज्ञायतामिति तु नान्वयः । एकवाक्यत्वे खलुपदस्य वैयर्थ्यापातात् । अस्य हाहारवस्य । अन्यथा विस्तरणशीलत्वाद्यनुपपत्तेरिति भावः ।

**(क्टं)** अपरमपि इतः पूर्ववृत्तेभ्योऽन्यदपि अत्याहितं महाभीतिं न श्रावयति दैवमिति कर्तृपदमत्राध्याह्रियते । संग्रामावतरणाय संग्रामप्रवेशार्थम् । तादर्थ्ये चतुर्थी । आज्ञापय मामिति शेषः । अनुमन्यस्व संग्रामं प्रतीत्यपि पाठः । संग्रामं प्रति संग्रामविषय इत्यर्थः । यद्वा संग्राममनुमन्यस्वेत्यर्थः पूर्व एव तु पाठः समीचीनः ।

**(क्टः)** मन्दभागिनीं मन्दोऽल्पः भागो दैवं तदस्त्यस्यास्ताम् । अत इनिठनाविंतीनौ ऋन्नेभ्य इति ङीप् । बहुव्रीहिणैव निर्वाहे पुनरिनिविधानं तु कवीनां निरङ्कुशत्वादिति बोध्यम् । मुहूर्तं क्षणम् । 'मुहूर्तमल्पकालेऽपी' ति शब्दार्णवात् । समाश्वासय सान्त्वय सुखय वेत्यर्थः । अलमिदानीमेव संग्रामेऽवतीर्येति भावः ।

**(क्ठ)** समराय युद्धं कर्तुम् । क्रियार्थोपपदस्य चेति चतुर्थी । रहः एकान्ते 'रहश्चोपांशु चालिङ्गे' इत्येकान्तपर्यायेष्वमरः । परप्रतीघातोपायः परेषां शत्रूणां प्रतीघातस्य मारणस्य उपायः । 'मारणं प्रतिघातनम्' इत्यमरः । रह इति प्रतीघातान्वयि न पुनश्चिन्तनान्वयि । अन्यथा 'हन्तुं न योग्या रह' इति दुर्योधनोक्तं न संगच्छेतेति द्रष्टव्यम् ।

**दुर्योधनः**—

प्रत्यक्षं हतबान्धवा मम परे हन्तुं न योग्या रहः

किं वा तेन कृतेन तैरिव कृतं यन्न प्रकाशं रणे। ( अ ९ )

**गान्धारी**—जाद! एआई तुमम्। को दे सहाअत्तणं करिस्सदि?।

( जात! एकाकी त्वम्। कस्ते साहाय्यं करिष्यति? ) (*)

**दुर्योधनः**—

एकोऽहं भवतीसुतक्षयकरो मातः कियन्तोऽरयः?

साम्यं केवलमेतु दैवमधुना निष्पाण्डवा मेदिनी ॥ ९ ॥

---

(अ ९) प्रत्यक्षमिति। इतः प्रभृति 'निष्पाण्डवा मेदिनी' त्यन्तमेकं पद्यम्। तस्य चैतदादिममर्धम्। द्वितीयं पुनरेकोऽहमित्यादि। प्रत्यक्षं समक्षं हतबान्धवाः हता मारिता बान्धवा मदीया बन्धवो यैस्तथाभूताः परे शत्रवः मम रहः एकान्ते हन्तुं योग्या न। यथा तैर्मे बान्धवाः प्रत्यक्षं हता एवमेतेऽपि मया प्रकाश एव हन्तव्या इति भावः। तैरिव। मयेति शेषः। यत् रणे प्रकाशं अनावृतं यथा तथा न कृतं तेन कृतेन वा किम्? न किंचित्फलमित्यर्थः। अप्रकाशं हि तेषां वधे कृतेऽपि नाहं यशोभागी स्यां प्रत्युत दूषणास्पदमेवेति निष्फल एवायमायास इति भावः। अत्र 'प्रत्यक्षं हतबान्धवस्य न परान् हन्तुं रयो मे क्षमः।' इत्यपि क्वचित्पाठः।

(*) सहायमन्तरा प्रकाशं शत्रुहननमसंभवनीयं बहुत्वाच्छत्रूणामिति संभावयन्ती गान्धारी प्राह। जातेति। एकाकी असहायः। एकादाकिनिच्चासहाय इत्याकिनिच्।

(९) उत्तरयत्युत्तरार्धेन। एकोऽहमिति। हे मातः! भवतीसुतक्षयकरः भवत्याः सुतानां पुत्राणां दुःशासनादीनां क्षयस्य करः कारकः। त्वत्पुत्रनाशहेतुरित्यर्थः। एतेन विषादातिशयो द्योत्यते। अत्र 'भवदात्मजक्षयकर' इति चेत्सम्यगभविष्यत्पाठः। भवतो हि सर्वनाम्नः 'एवं तर्हि सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्य' इति भाष्यकारोक्त्या पुंवद्भावे भवत्सुतक्षयकर इत्येव स्याद्रूपं नैव पुनर्भवतीसुतक्षयकर इति। पुंवद्भावप्रतिषेधस्य विकल्पस्यापि वा दुरुपपादत्वादिति। न च 'फिञ्द्री' ति परिगणनया पुंवद्भावे सर्वनामत्वमिति वाच्यम्। पुंवद्भावोऽपि भवतः सर्वनामत्वे प्रयोजनमिति च 'भवत्याः पुत्रो भवत्पुत्र' इति कौस्तुभ उक्तत्वात्। फिञ्द्रीत्यादे-

( नेपथ्ये । कलकलानन्तरम् । )

भो भो योधाः! निवेदयन्तु भवन्तः कौरवेश्वराय! इदं महत्कदनं प्रवृत्तम्। अलमप्रियश्रवणपराङ्मुखतया । यतः कालानुरूपं प्रतिविधातव्यमिदानीम् । तथा हि । ( कठा )

---

रुदाहरणमात्रत्वस्य भाष्यादावुक्तेश्चेति । यत्तु जगद्धरः 'भवतीत्यत्र पुंवद्भावाभावः प्रियादिपाठात् स्त्रियाः पुंवदिति योगविभागाद्वे'ति प्राह तदेतन्न समञ्जसम्। प्रियादिषु सुतशब्दस्य पाठाभावायोगविभागस्य चादर्शनादिति । अहं एकः असहाय इत्यर्थः । यथा त्वं ब्रूषे तथैवैतदिति भावः । परं त्वित्यध्याह्रियते । अरयः शत्रवः कियन्तः किं परिमाणं येषां तथाभूताः? शत्रूणामपि संख्या न भूयसीत्यर्थः । एतेनामीभिः समं संग्रामे न साहाय्यापेक्षेति गम्यते । केवलं दैवं कर्तृ साम्यं समत्वं वैषम्याभावं प्रक्षोभशून्यत्वमित्यर्थः एतु आप्नोतु । ततः किमित्याह अधुनेति । अधुना इदानीमेव मेदिनी पृथ्वी निष्पाण्डवा निर्गताः पाण्डवा यस्यास्तथाभूता पाण्डवविरहितेत्यर्थः । भविष्यतीति शेषः । कृतं साहाय्येन दैवमात्रमपि चेद्वैषम्यमुज्झिष्यति तदा विनापि साहाय्यं विनैव च विलम्बं शत्रून्निर्मूलयिष्यामीति भावः । विना दैवानुकूल्यं निष्फलः पुरुषकार इति भावः । तथा ह्याहुर्नीतिविदः 'पौरुषं दैवसंपत्त्या काले फलति पार्थिव । त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्फलावहम् ॥' इति । अत्र साम्यमित्यत्र साह्यमिति शाम्यमिति च संदृश्यते पाठान्तरं क्वापि । कश्चित्पुनः सह्यं केवलमेतदेवमधुनेति श्लाघ्यं केवलमस्त्विति च पाठः । तत्र सह्यं केवलमिति पाठोऽसंगतत्वादेवोपेक्ष्यः । साह्यमिति सहशब्दात्ष्यञि साधु सहभावं साहाय्यकारितामिति भावः । शाम्यमिति शमशब्दात्स्वार्थे ष्यञि निष्पद्यते शममित्यर्थः । न चैष युक्तः शिरोवेष्टनेन प्राणायामायास इत्युपेक्ष्योऽयं पाठः । श्लाघ्यं प्रशंसनीयं अनुकूलमिति यावत् । अयमपि पाठः क्लिष्टत्वात्समुपेक्ष्यः । साम्यपदस्य च प्रक्षोभाभावार्थकत्वं 'दोषसाम्यमरोगते'त्यादिषु द्रष्टव्यम् । निष्पाण्डवेत्यत्र 'इदुदुपधस्य चाप्रत्ययस्ये'ति षत्वम् । एवं च यदल्पसंख्याकैरपि पाण्डवैरेवंविधां हानिमनुप्रापिताः स्मस्तत्र केवलं दैवप्रातिकूल्यमेव नो हेतुर्नैव पुनः पौरुषं तेषां, ममापि चेद्दैवमनुकूलं स्यात्तदा क्षणादेव पाण्डवानुन्मूलयिष्यामि। दैवस्य च पुरुषकारविकलस्य पङ्गुत्वादनुज्ञायतां मे संग्रामावतरणलक्षणः पुरुषकार इति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(कठा) कौरवेश्वराय दुर्योधनाय । निवेदयन्तु कथयन्तु । कथनीयमाह इदमिति। कदनं युद्धमिति शब्दकल्पद्रुमः । 'कदनं मारणं मन्थ' इति पुरुषोत्तमदेवस्तु मारणार्थकत्वं

त्यक्तप्राजनरश्मिरङ्किततनुः पार्थाङ्कितैर्मार्गणै-
र्वाहैः स्यन्दनवर्त्मनां परिचयादाकृष्यमाणः शनैः ।
वार्तामङ्गपतेर्विलोचनजलैरावेदयन्पृच्छतां
शून्येनैव रथेन याति शिबिरं शल्यः कुरूञ्शल्ययन् ॥ १० ॥

**दुर्योधनः**—( श्रुत्वा । साशङ्कम् । ) आः ! केनेदमविस्पष्टमशनिपातदारुण-मुद्घोषितम्? कः कोऽत्र भोः ? **( क्ठि )**

---

कदनशब्दस्याह । मारणक्रियोपलक्षितत्वाच्च युद्धेऽपि रूढोऽयं शब्दः । प्रवृत्तमारब्धम् । संवृत्तमिति पाठे तु जातमित्यर्थः । अलमिति । सुलभं हि महति कदनेऽप्रियाणां श्रवण-मिति । कालानुरूपं कालोचितमित्यर्थः । प्रतिविधातव्यं प्रतिकर्तव्यम् । प्रतिविधानविषय-माह तथाहीति ।

(१०) त्यक्तेति । त्यक्तप्राजनरश्मिः त्यक्ताः प्राजनं तोत्रं रश्मयः प्रग्रहाश्च येन तथाभूतः । कर्णमरणव्याकुलतया तुरगसंयमनासामर्थ्यादिति भावः । पार्थाङ्कितैः पार्थस्य अर्जुनस्य अङ्कश्चिह्नं शराणां स्वीयत्वोन्नयनार्थं कृतं नामाङ्कनादि तत्संजातं येषु तथाभूतैः । पार्थ इति अङ्कश्चिह्नं संजातो येष्विति वा । पार्थनामचिह्नितैरित्यर्थः । मार्गणैः शरैः । अङ्किततनुः चिह्नितशरीरः । अर्जुनमुक्तैर्बाणैर्विद्धगात्र इत्यर्थः । वाहैः अश्वैः कर्तृभिः स्यन्दनवर्त्मनां रथमार्गाणां परिचयात् हेतोः शनैः मन्दं यथातथा । चोदयितुरभावान्मन्द-त्वम् । आकृष्यमाणः नीयमान इत्यर्थः । पृच्छतां जनानाम् । शेषे षष्ठी । पृच्छद्भ्य इत्यर्थः अङ्गपतेः अङ्गदेशाधिपतेः कर्णस्य संबन्धिनीं वार्तां वृत्तान्तं विलोचनजलैः नेत्रजलैः अश्रु-भिः करणभूतैः आवेदयन् कथयन् । अश्रुभिरेव कर्णस्य मरणं सूचयन्नित्यर्थः । पृच्छत इत्यपि पाठः । शल्यः कर्णस्य सारथिः कर्ता शून्येन कर्णरहितेनैव रथेन कुरून् कौरवान् शल्ययन् शल्ययुक्तान्कुर्वन् दुःखितान् कुर्वन्नित्यर्थः। शिबिरं सेनानिवेशस्थानं याति गच्छति। शल्ययन्निति शल्यशब्दादर्शआद्यजन्तात्तत्करोतीतिणिजन्ताच्छता । अत्र कम्पयन्नित्यपि पाठः । स एव च श्रुतिकटुत्वदोषशून्यत्वात्साधुः । योज्यतामत्र युक्तः प्रतीकार इति भावः । 'प्राजनं तोदनं तोत्रं ' इति 'किरणप्रग्रहौ रश्मी ' इति ' कलम्बमार्गणशरा ' इति 'वाजिवाहार्वगन्धर्वा ' इति चामरः । शार्दूलविक्रीडितं वृत्तम् ।

**(क्ठि)** अशनिपातदारुणं वज्रपातवद्भयङ्करम् । अत्र ज्ञायतामिति क्वचिदधिकः पाठः। उद्घोषितम् उच्चैरुच्चारितम् ।

( प्रविश्य संभ्रान्तः । ) (क्ठी)

**सूतः**—हा! हताः स्मः । ( इत्यात्मानं पातयति । ) (क्ठु)

**दुर्योधनः**—अयि! कथय ।

**धृतराष्ट्रसंजयौ**—कथ्यतां कथ्यताम् ।

**सूतः**—आयुष्मन्! किमन्यत्? । (क्ठू)

शल्येन यथा शल्येन मूर्छितः प्रविशता जनौघोऽयम् ।
शून्यं कर्णस्य रथं मनोरथमिवाधिरूढेन ॥ ११ ॥

---

(क्ठी) संभ्रान्तो भीतस्त्वरितो वा सूतस्येदं विशेषणम् ।

(क्ठु) हताः मृतप्राया इत्यर्थः स्मः । स्वामिनः कर्णस्य मरणादिति भावः । अस्मदो द्वयोश्चेति बहुवचनम् । क्वचित्पुनर्हतोऽस्मीत्येव पाठः। आत्मानं पातयति भूमाविति शेषः । भीत्या च शोकेन च व्याकुलीभूतत्वादात्मनो भूमौ पातनम् ।

(क्ठू) आयुष्मन् राजन् । 'आयुष्मन् रथिनं सूतः (संबोधयेत् )' इति वचनात् । अत्र किं कथयामि देवेत्यपि पाठान्तरम् ।

(११) शल्येनेति । मनोरथमिव अस्माकं कर्णविषयकमाशंसितमिव शून्यं फलविरहितं पक्षे रथिना कर्णेन शून्यं च रथं अधिरूढेन आरूढेन प्रविशता शिबिरमित्यर्थात् । शल्येन कर्णस्य सारथिना नृपविशेषेण शल्येन यथा बाणाग्रादिनेव अयं जनौघो लोकसमूहः मूर्छितः मूर्छां प्रापितः । अत्र शून्यं रथमधिरूढेनेत्येतस्य मूर्छितत्वे हेतुत्वात्काव्यलिङ्गमलङ्कारः । शल्येन यथा शल्येनेत्युपमा चेत्यनयोः सङ्करः । अत्र शल्येनेत्यत्र स्वल्पेनेत्यपि क्वचित्पाठः । स चासम्बद्धत्वादुपेक्ष्यः । द्वितीयास्मिन् शल्येनेत्यत्र नकारात्प्रागेव चरणस्यावसितत्वाद्यतिभङ्गोऽत्र दुर्वार एव । यतिः सर्वत्र पादान्त इत्युक्तत्वात् । 'पदान्ते सा शोभां व्रजति पदमध्ये त्यजति च ।' इत्युक्तेश्च । 'श्वेतमाण्डव्यमुख्यास्तु नेच्छन्ति मुनयो यति'मिति श्वेतमाण्डव्यादीनां मते यतेरेवाभावाद्वा कथंचित्परिहरणीयो दोषः । अनुमन्यतेऽपि क्वचिद्यतेः पदमध्यगतत्वं तथापि तत्तत्रैव यत्र मध्ये यतिपाते पूर्वो वाऽपरोऽपि वा भाग एकमात्रवर्णको न स्यात् । तथा ह्याहुः 'क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् । यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ।' इति । अत्र च न इत्येकवर्णक एवापरो भाग इति कृतं पल्लवितेन । आर्या जातिः । तल्लक्षणं तूक्तं कालिदासेन 'यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ।' इति ।

**दुर्योधनः**—हा वयस्य कर्ण! । (इति मोहमुपगतः ।) (कंठे)

**गान्धारी**—जाद! समस्सस समस्सस। (जात! समाश्वसिहि समाश्वसिहि।)

**संजयः**—समाश्वसितु समाश्वसितु देवः ।

**धृतराष्ट्रः**—भोः! कष्टं कष्टम् ।

भीष्मे द्रोणे च निहते य आसीदवलम्बनम् ।
वत्सस्य मे सुहृच्छूरो राधेयः सोऽप्ययं हतः ॥ १२ ॥

वत्स! समाश्वसिहि समाश्वसिहि । ननु भो हतविधे! (कंठे)

अन्धोऽनुभूतशतपुत्रविपत्तिदुःखः
शोच्यां दशामुपगतः सह भार्ययाहम् ।
अस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे
दुर्योधनेऽपि हि कृतो भवता निराशः ॥ १३ ॥

---

(कंठे) मोहमुपगतः मूर्छां प्राप्तः ।

(१२) भीष्म इति । भीष्मे द्रोणे च अवलम्बनभूते निहते शत्रुभिर्मारिते सति यः अवलम्बनं आश्रयः आसीत् सः अयं मे वत्सस्य पुत्रस्य दुर्योधनस्य सुहृन्मित्रं शूरो वीरः राधेयः राधापुत्रः कर्णोऽपि हतः शत्रुभिर्मारितः । तदेतत्कष्टमिति पूर्वेण संबन्धः । अत्र शूर इत्यत्र प्रेयानित्यपि पाठः । तदपेक्षया च शूर इत्येवोचितः । अवलम्बने हि हेतुमेष द्योतयतीति ।

(कंठे) ननु भो इति संबोधने।हत विधे निन्द्य दैव।'विधिर्विधाने दैवेऽपी' त्यमरः।

(१३) अन्ध इति । भार्यया पत्न्या सह अन्धः अनुभूतशतपुत्रविपत्तिदुःखः अनुभूतं शतावयवकस्य पुत्रस्य पुत्रसमुदायस्य विपत्तेर्मरणस्य सम्बन्धि दुःखं येन तथाभूतः । अत्र शतपुत्रशब्दे पुत्रशब्दः पुत्रसमुदाये लाक्षणिकः ततश्च शतशब्देन समं शाकपार्थिवादित्वात्समासः । अवयवशब्दश्चोत्तरपदम् । तस्य च शाकपार्थिवादित्वाल्लोपः । अन्यथा हि द्विगौ शतपुत्रीति स्यात् । संज्ञात्वाभावाच्च न दिक्संख्ये संज्ञायामिति समासः । विगृहीतं चैवं द्विगोर्लुगनपत्य इति सूत्रे भाष्ये त्र्यवयवां विद्यामधीते त्रैविद्य इति भगवता पतञ्जलिना । विशेषस्तु दिक्संख्ये संज्ञायामिति सूत्रे मनोरमायां द्रष्टव्यः । शोच्यां शोच-

वत्स दुर्योधन ! समाश्वसिहि समाश्वसिहि । समाश्वासय तपस्विनीं मातरं च । (कठो)

**दुर्योधनः**—( लब्धसंज्ञः । )

अयि कर्ण कर्णसुखदां प्रयच्छ मे
गिरमुद्गिरन्निव मुदं मयि स्थिराम् ।
सततावियुक्तमकृताप्रियं प्रियं
वृषसेनवत्सल ! विहाय यासि माम् ? ॥ १४ ॥

( इति पुनर्मोहमुपगतः )

---

नीयां दशामुपगतः प्राप्तः अहं भवता कर्त्रा अशेषितसुहृद्गुरुबन्धुवर्गे अशेषितः निरवशेषीकृतः सुहृदां मित्राणां बन्धूनां च वर्गः समूहो यस्य तथाभूते अस्मिन् दुर्योधनेऽपि दुर्योधनविषयेऽपि निराशः आशारहितः कृतः हि निश्चयेन । कर्णमरणमाकर्णयन्न खलु दुर्योधनस्तूष्णीम्भावमासेवेत । संग्रामं च प्रविष्टो न जीविष्यतीत्ययमपि तावदस्मान्पालयिष्यतीति नास्तीदानीं प्रत्याशेतिभावः । मूर्छामनुप्राप्तं दुर्योधनमप्रत्यापन्नसंज्ञमन्यथैवोत्प्रेक्षमाणस्य वा वचनमिदं धृतराष्ट्रस्य । वसन्ततिलकाख्यं वृत्तम् ।

(कठो) तपस्विनीं अनुकम्पनीयाम् ।

(१४) अयीति । अयि हे कर्ण ! मयि मद्विषये स्थिरामचञ्चलां मुदं प्रीतिं उद्गिरन्निव उद्वमन्निव अन्तर्गतां प्रीतिं बहिः प्रकाशयन्निवेत्यर्थः । त्वं मे मह्यं कर्णसुखदां श्रोत्रयोः सुखदात्रीं गिरं प्रतिवचनरूपां प्रयच्छ देहि । दाण् दान इत्यतः प्रार्थनायां लोट् । पाघ्रेत्यादिना च यच्छादेशः। वृषसेनवत्सल वृषसेन एतन्नाम्नि स्वपुत्रे वत्सल स्नेहयुक्त कर्ण! सततावियुक्तं सततं निरन्तरं अवियुक्तं भवताऽविरहितं त्वया सह सर्वदैवैकत्र स्थितमित्यर्थः । एतेन विरहस्यासह्यत्वं द्योत्यते । एकत्रावस्थाने च शक्यमप्रियकरणं तस्यैव च कृतत्वाद्गच्छामीति चेत्तदपि नेत्याह अकृताप्रियमिति । न कृतं अप्रियं त्वत्प्रियविरोधि कर्म येन तथाभूतम्। एवमपि त्वमुदासीन इत्यत एव गच्छामीति चेत्तदपि नास्तीत्याह प्रियमिति। प्रियं तव प्रीत्यास्पदं मां विहाय यासि गच्छसीति प्रश्ने काकुः । वृषसेनवत्सलेत्यनेन सततावियुक्ते अकृताप्रिये प्रिये च वृषसेने परलोकं गतवति यादृशी ते दशा सैवेदानीं त्वयि गते ममापि स्यादिति न युक्तं ते गमनमिति द्योत्यते । स्वयमनुभूतप्रणयिजनवियोगदुःखेनापि तावन्नाहं त्वया तथाविधे व्यसने विनिपातनीय इति भावः । वृषसेनवत्सलेति याने

( सर्वे समाश्वासयन्ति । )

**दुर्योधनः—**

मम प्राणाधिके तस्मिन्नङ्गानामधिपे हते ।
उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात का कथा? ॥ १५ ॥

अपि च ।

शोचामि शोच्यमपि शत्रुहतं न वत्सं
दुःशासनं तमधुना न च बन्धुवर्गम् ।
येनातिदुःश्रवमसाधु कृतं तु कर्णे
कर्तास्मि तस्य निधनं समरे कुलस्य ॥ १६ ॥

---

हेतुः, सर्वापेक्षया प्रधानत्वात्पुत्रस्नेहस्येति तु तर्कवाचस्पतिः । न चोद्गिरतेः प्रयोगादत्र ग्राम्यत्वमित्याशङ्कनीयम् । मुख्ये ह्यर्थे प्रयुज्यमाना उद्गिरत्यादयो ग्राम्यत्वाय प्रकल्पन्ते नैव पुनर्गौणे । गौणश्चात्रास्यार्थोऽन्तर्वर्तिनो बहिःकरणमित्येवंरूप इति । तदुक्तमाचार्यदण्डिना 'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥' इति । यमकाख्यः शब्दालङ्कारः । 'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ।' इति लक्षणात् । मञ्जुभाषिणी वृत्तम् । 'सजसा जगौ च यदि मञ्जुभाषिणी' ति लक्षणात् ।

(१५) समाश्वसिहीति ब्रुवन्तं धृतराष्ट्रं प्रतिवदति ममेति । मम प्राणाधिके प्राणेभ्योऽप्यधिके प्राणापेक्षयापि प्रिय इत्यर्थः । तस्मिन्प्रसिद्धे अङ्गानां देशविशेषाणां अधिपे प्रभौ कर्णे हते शत्रुभिर्मारिते सति हे तात पितः । अहं उच्छ्वसन् जीवन्नपि लज्जे आश्वासे निर्वृतिविषये कथा का? आश्वासस्तु सुदूरमेवापास्त इति भावः । पथ्यावक्त्रं वृत्तम् ।

(१६) अनन्तरकरणीयं प्रतिजानीते शोचामीति । अधुना अस्मिन् समये शत्रुहतं शत्रुभिर्मारितं शोच्यं शोचनीयं अपि तं वत्सं दुःशासनं, च बन्धुवर्गं बन्धुसमूहं न शोचामि । तु किन्तु येन कर्णे एतन्नामके वीरे अतिदुःश्रवं अतिशयेन दुःखेन श्रोतुं शक्यं असाधु कृतं आचरितम् । कर्णो हत इत्यर्थः । तस्य असाधुकारिणः कुलस्य वंशस्य समरे संग्रामे निधनं मरणं कर्तास्मि । अनद्यतने भविष्यति लुट् । अत्र न च बन्धुवर्गमित्यपि पाठः । स च नयुक्तो विशेषाधायकत्वाभावात् । समुच्चायकपदाभावेन न्यूनपदत्वप्रसक्ते-

**गान्धारी**—जाद! सिढिलेहि दाव क्खणमेत्तं बप्फमोक्खम् । ( जात! शिथिलय तावत्क्षणमात्रं बाष्पमोक्षम् ) (कठौ)

**धृतराष्ट्रः**—वत्स! क्षणमात्रं परिमार्जयाश्रूणि । (कठं)

**दुर्योधनः**—

मामुद्दिश्य त्यजन्प्राणान्केनाचिन्न निवारितः ।
तत्कृते त्यजतो बाष्पं किं मे दीनस्य वार्यते? ॥१७॥

सूत! केनैतदसंभवनीयमस्मत्कुलान्तकरणं कर्म कृतं स्यात्? । (कठः)

**सूतः**—आयुष्मन्! एवं किल जनः कथयति ।

भूमौ निमग्नचक्रश्चक्रायुधसारथेः शरैस्तस्य ।
निहतः किलेन्द्रसूनोरस्मत्सेनाकृतान्तस्य ॥ १८ ॥

---

थेति । येनातिदुःश्रवमसाधु कृतं न कर्णे कर्णस्य तस्य निधने निधनं कुलस्येति तु जगद्धराद्दतः पाठः । स चायमसंबद्धत्वादुपेक्षणीयः। न ह्यतिदुःश्रवं कर्णेन कृतमित्यनेन प्रियो दुर्योधनस्य कर्ण इति प्रत्येतुं शक्यं प्रतीतेऽपि वा यो न कर्णे दुःश्रवं करोति, तस्य निधने कुलस्य निधनमिति नैतदुपपन्नम् । अङ्गीकृते चास्मिन् पाठे नोत्तरत्र गान्धारीधृतराष्ट्रयोर्वचनस्य संगतिः संभवतीति । वसन्ततिलकाख्यं वृत्तम् ।

(कठौ) बाष्पमोक्षम् अश्रुमोचनक्रियाम् । शिथिलय मन्दीकुरु ।

(कठं) क्षणमात्रं क्षणपरिमितं कालं अश्रूणि परिमार्जय प्रोञ्छय ।

(१७) मामिति । अत्र य इति तत्पदप्रयोगवशाल्लभ्यते । यः मामुद्दिश्य मदर्थमित्यर्थः प्राणान् त्यजन् केनचित्केनापि न निवारितः दीनस्य तदभावाद्दैन्यमापन्नस्य मे तत्कृते बाष्पं अश्रु त्यजतः सतः किं कस्माद्वार्यते वारणं क्रियते भवद्भिरित्यर्थात्संबध्यते । अश्रुमोक्षमात्रेणात्मानं कृतार्थयतो नोचितः प्रतिबन्ध इति भावः ।

(कठः) असंभवनीयं असंभवविषयं अशक्यसंघटनमित्यर्थः । अस्मत्कुलान्तकरणं अस्माकं वंशस्य नाशकारि । कर्णमरणे कुलनाशस्यावश्यंभावित्वात्कुलान्तकरणमिति कर्मविशेषणम् । अतः परं 'केनेदमसंभावितमस्मत्कुलान्तकरं कर्म कृतम् । ' इति धृतराष्ट्रोक्तिः क्वचिदधिका, स्पष्टार्था चेयम्।

(१८) भूमाविति । भूमौ पृथिव्यां निमग्नं चक्रं रथस्य चक्रं यस्य तथाभूतः। ब्राह्मणशापवशाद्भूमौ मग्नचक्र इति भावः । स च शापवृत्तान्तः कर्णपर्वणि ४९ अध्याये

**दुर्योधनः**—कष्टं भोः कष्टम् ।

कर्णाननेन्दुस्मरणात्क्षुभितः शोकसागरः ।
वाडवेनेव शिखिना पीयते क्रोधजेन मे ॥ १९ ॥

तात ! अम्ब ! प्रसीदतम् । (**क्ड**)

---

द्रष्टव्यः । कर्णः कर्ता । अस्मत्सेनाकृतान्तस्य अस्माकं सेनायाः सैन्यस्य कृतान्तो यम इव तस्य । 'कृतान्तो यमुनाभ्राता' इति यमपर्यायेष्वमरः । चक्रायुधसारथेः चक्रं सुदर्शनाख्यं आयुधं यस्य स श्रीकृष्णः सारथिर्यस्य तस्य । भगवतानुगृहीतस्येत्यर्थः । तस्य प्रसिद्धस्य । इन्द्रसूनोः अर्जुनस्य । अर्जुनो हि कुन्त्यामिन्द्राज्जात इति । शरैर्बाणैर्निहतः मारितः किल । अत्र अस्मत्सेनाकृतान्तस्येत्युपमया सेनापि विनिहतेति वस्तु व्यज्यते । अत्र 'भूम्यां निमग्नचक्रस्तु स चक्रायुधसारथेः । संख्ये किल हतो बाणैरस्मत्सेनान्तकारिणः ॥' इत्यपि क्वचित्पाठः । एतदपेक्षया तु बहुपुस्तकसंवादी सरसरमणीयश्चास्मदादृतः पाठः । आर्या जातिः ।

(१९) कर्णेति । कर्णाननेन्दुस्मरणात् कर्णस्य आननं मुखमेव इन्दुः तस्य स्मरणात् चिन्तनात् मनस्यवतारणादित्यर्थः । क्षुभितः संचलितः उद्वेलतामनुप्राप्त इति यावत् । मे शोकसागरः शोकरूपः समुद्रः कर्मभूतः वाडवेन वडवायास्तुरग्याः संबन्धिना और्वेण इव क्रोधजेन क्रोधाज्जायमानेन शिखिना अग्निना पीयते निरवशेषीक्रियत इत्यर्थः । पा पान इत्यतः कर्मणि यक् । घुमास्थेत्यादिना ईत्वं च । क्षुभित इति क्षोभतेःक्षुभ्नातेःक्षुभ्यतेर्वा निष्ठायां रूपम् । गणत्रये ह्यसौ पठ्यते धातुः । तदाह देवः 'क्षुभ्नाति क्षोभते क्षुभ्येदिति सञ्चलने क्षुभेः ।' इति । क्षुब्धेति तु मन्थ एव निपात्यते । अन्यत्र तु क्षुभितमित्येवेति माधवः । शोकक्रोधयोः परस्परविरोधित्वात्क्रोधेन शोकविनाशः । क्रोधजेन शिखिना पीयत इति क्रोधस्यात्यन्तिकत्वं द्योत्यते । अत्र कर्णानन इन्दुत्वारोपः शोके सागरत्वारोपे हेतुरिति परम्परितं रूपकमलङ्कारः । उत्तरार्धे च वाडवेनेवेत्युपमा चेत्यनयोः सङ्करः । अस्ति किल दक्षिणस्यां दिशि ध्रुवप्रदेशादधः सागरान्तर्गतः कोऽप्यग्निर्यं किल वडवायाः ( अश्वस्त्रियाः ) सकाशात्संभूततया वाडव इति वडवानल इति चाचक्षते । एष किल सागरं शोषयतीति पौराणिकाः । 'याम्ये तु तुस्या वडवानलश्चे' ति भास्करः । पथ्यावक्त्रं वृत्तम् ।

(**क्ड**) प्रसीदतम् प्रसन्नौ भवतम् । युवामिति शेषः । षद्लृगतावित्यतो लोट् । पाघ्रेत्यादिना च सीदादेशः ।

ज्वलनः शोकजन्मा मामयं दहति दुःसहः ।
समानायां विपत्तौ मे वरं संशयितो रणः ॥ २० ॥

**धृतराष्ट्रः**—(दुर्योधनं परिष्वज्य रुदन् ।) **(क्डा)**

भवति तनय नित्यं संशयः साहसेषु
द्रवति हृदयमेतद्भीममुत्प्रेक्ष्य भीमम् ।
अनिकृतिनिपुणं ते चेष्टितं मानशौण्ड
च्छलबहुलमरीणां संगरं हा हतोऽस्मि ॥२१॥

---

(२०) ज्वलन इति । मयाऽनुभूयमानः दुःसहो दुःखेन सोढुं शक्यः । ईषत्सुदुः-ष्विति खल् शोकजन्मा शोकात् कर्णविषयकाज्जन्म यस्य तथाभूतः ज्वलनोऽग्निः कर्ता।दहति भस्मीकरोति तापातिशयं मयि जनयतीत्यर्थः। एवं च जीवन्नप्यहं ज्वलनेनामुना प्राणैर्वियोक्ष्य इति भावः । अतः विपत्तौ दुःखे समानायां सत्यां तुल्ये सति । शोकाग्निना दाहे संग्रामप्र-वेशे च दुःखस्य तुल्यत्वे सतीत्यर्थः । संशयितः विजयविषयकसंदेहविशिष्टः रणः संग्राम एव मे वरं मनागिष्टः । तूष्णीमवस्थितस्य शोकाग्निना मरणापेक्षया संग्रामं प्रविष्टस्य पौरुषं प्रकाश्यैव मरणं ज्याय इति भावः । अतः संग्रामावतरणानुज्ञाप्रदानेन प्रसीदतमिति संबन्धः । अत्र 'शोकज्वलनजन्मा मां तापो दहति दुःसह' इत्यपि पाठः। संभवति ज्वलनस्य दाह-कर्तृत्वे तापे तत्कर्तृत्वारोपे प्रयोजनाभावादुपेक्षितोऽयमस्माभिः । पथ्यावक्त्रं वृत्तम् ।

**(क्डा)** परिष्वज्य आलिङ्ग्य रुदन् । समुपस्थितवियोगसंभावनया रुदितम् ।

(२१) मातावत्साहसं कार्षीरित्याह । भवतीति । हे तनय पुत्र दुर्योधन साह-सेषु सहसाकृतेषु कर्मसु अविमृश्यकृतेषु कार्येष्वित्यर्थः । नित्यं संशयः विजयविषयको जीवितविषयकोऽपि वा संदेहः भवति तत एव च नात्र भवता प्रवर्तितव्यमिति भावः । अत्र 'भवति तनयलक्ष्मीः साहसेष्वीदृशेषु' इत्यपि पाठः । तत्र चातः परं किन्त्वित्यध्याहा-र्यम् । न केवलं विजयविषयकः संशयोऽपि तु जीवितविषयकोऽपीत्याह द्रवतीति । भीमं भीमं भयंकरं उत्प्रेक्ष्य संभाव्य भीमस्य भीमकर्मतां संभाव्येत्यर्थः । एतत् हृदयं मनः द्रवति द्रवी भवति। दहतीति पाठे तप्यत इत्यर्थः। ननु भोः शूरोऽहं, का मे भीमसे-नाद्भीतिरिति चेत्तत्राह। अनिकृतिनिपुणमिति। हे मानशौण्ड मानेनाभिमानेन शौण्ड विख्या-त'शौण्डोविख्यातमत्तयोः ।' इति हैमः। ते चेष्टितं व्यापारः अनिकृतिनिपुणं निकृतौ शाठ्ये निपुणं चतुरं न भवति तथाभूतं अस्ति 'निकृतिः शठशाठ्ययो' रिति हैमः । अभिमानि-

**गान्धारी**—जाद ! तेण एव्व सुदसदकदन्तेण विओदलेण समं समल मग्गासि ? । (जात ! तेनैव सुतशतकृतान्तेन वृकोदरेण समं समरं मार्गसि? )(क्टि)

**दुर्योधनः**—तिष्टतु तावद्वृकोदरः ।

पापेन येन हृदयस्य मनोरथो मे
सर्वाङ्गचन्दनरसो नयनामलेन्दुः ।
पुत्रस्तवाम्ब ! तव तात ! नयैकशिष्यः
कर्णो हतः सपदि तत्र शराः पतन्तु ॥२२ ॥

---

तयाऽयशोजन्यां मानहानिमसहिष्णुर्विनैव शाठ्यं चेष्टस इति भावः । अरीणां संगरं युद्ध तु च्छलबहुलं कपटप्रचुरम् । तत एव च नास्ति ते विजयस्य जीवितस्यापि वा प्रत्याशेति भावः । अत एव च हा इति शोके हतोऽस्मि मृतोऽस्मि संग्रामं प्रविष्टस्य तवाप्रतिनिवृत्तौ त्वदेकजीवितोऽहमवश्यं मरिष्यामीत्यर्थः । अत्र संगरमिति नपुंसके प्रयुक्तं, न चैततत्क्काप्येवं संदृष्टम् । सर्वत्रापि हि संगर इति पुंस्येव प्रयुज्यतेऽयं शब्द इति । तथापि तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्यकृद्वचनात्कथंचित्समाधेयम् । वस्तुतः पुनः साधितेऽपि साधुत्वे दुर्वारमस्याप्रयुक्तत्वम् । तत एव संयुगमिति पठनीयमिति नो बुद्धिः । काव्यलिङ्गमलङ्कारः। मालिनी वृत्तम्। 'ननमयययु तेयं मालिनी भोगिलोकै' रितिलक्षणात् ।

(क्टि) सुतशतकृतान्तेन सुतानां मत्पुत्राणां शतस्य कृतान्तो यम इव नाशकरः तेन । वृकोदरेण भीमेन । मार्गसि अन्विच्छसि प्रार्थयस इति यावत् । प्रश्ने काकुः । सुतशतकृतान्तेनेति विजये नैराश्यमभिव्यञ्जयति ।

(२२) पापेनेति । येन कर्त्रा मे हृदयस्य मनोरथः मनोरथविषयीभूतः इत्यर्थः । एतेनात्यन्तप्रियत्वं ध्वन्यते! सर्वाङ्गचन्दनरसः सर्वेषामङ्गानां शरीरावयवानां चन्दनरस इव सुखदायित्वात् । नयनयोः अमलः निर्मलः निष्कलङ्क इत्यर्थः इन्दुः चन्द्र इव शान्तिप्रदत्वादिति भावः । अमल इति प्रसिद्धाच्चन्द्रमस आधिक्यं द्योत्यते । हे अम्ब मातः तव पुत्रः पुत्रतुल्यः । हे तात पितः तव नयैकशिष्यः नये नीतौ नीतिशास्त्राध्ययन इत्यर्थः शिष्यः कर्णः हतो मारितः तत्र तस्मिन्पुरुषे अर्जुन इत्यर्थः सपदि सत्वरम् शराः मे बाणाः पतन्तु । तमेवादितो हनिष्यामि किं वृकोदरेणेति भावः । 'द्राङ्मङ्क्षु सपदि द्रुतम् ।' इत्यमरः । लुप्तोपमालङ्कारः । वसन्ततिलकावृत्तम् ।

सूत! अलमिदानीं कालातिपातेन । सज्जं मे रथमुपाहर । भयं चेत्पाण्डवेभ्य-स्तिष्ठ । गदामात्रसहाय एव समरभुवमवतरामि । (क्डी)

**सूतः**—अलमन्यथा संभावितेन । अयमहमागत एव । (क्डु) (इति निष्क्रान्तः ।)

**धृतराष्ट्रः**—वत्स दुर्योधन ! यदि स्थिर एवास्मान्दग्धुमयं ते व्यवसायस्त-त्संनिहितेषु वीरेषु सेनापतिः कश्चिदभिषिच्यताम् (क्डू)

**दुर्योधनः**—नन्वभिषिक्त एव ।

**गान्धारी**—जाद ! कदरो उण सो जस्सिं आसं ओलम्बिस्सम् ।
(जात! कतर : पुनः स यस्मिन्नाशामवलम्बिष्ये । ) (क्डे)

---

(क्डी) अतिपातेन अतिक्रमेण । पाण्डवेभ्यः पाण्डवानां सकाशात् भयं चेत्तव भीतिश्चेत् पाण्डवेभ्यो बिभेषि चेदित्यर्थः । तर्हीति शेषः । समरभुवं युद्धभूमिं अवतरामि प्रविशामि ।

(क्डु) अन्यथा अन्यप्रकारेण अहं पाण्डवेभ्यो बिभेमीत्येवंरूपेण संभावितेन संभा-वनेन । नपुंसके भावे क्तः । अलम् । नान्यथा संभावनीयमित्यर्थः । अयं एतत्क्षणवर्ती अहं आगत एव प्राप्त एव । अविलम्बितमेव सज्जं रथं गृहीत्वाऽऽगमिष्यामीत्यर्थः ।

(क्डू) अस्मान् दग्धुं अयं ते व्यवसायो युद्धनिश्चयः । दृश्यते हि निश्चयार्थकत्वं व्यवसायशब्दस्य । यथा 'व्यवसायात्मिका बुद्धिरेकैव कुरुनन्दन ।' इत्यादौ । सन्निहितेषु समीपवर्तिषु वीरेषु मध्ये । यतश्च निर्धारणमिति सप्तमी । सेनापतिः अभिषिच्यताम् अभि-षिक्तः क्रियताम्, सैनापत्येऽभिषिच्यतां, सेनापतिः क्रियतामित्यर्थः ।

(क्डे) कतर इति । कतम इत्यर्थः।प्राकृते सर्वेषामपि विधीनां बहुलं प्रवृत्त्या डत-रस्थाने डतमस्यापि प्रवृत्तेः संभवात् । तदुक्तं प्राकृतशब्दानुशासने 'बहुलम् १।१।१७' इति । व्याख्यातं च त्रिविक्रमदेवेन 'अधिकारोऽयमाशास्त्रपरिसमाप्तेः । यत्प्राकृते लक्षणं-वक्ष्यते तद्बहुलं भवतीति । ततश्च । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥' इति । यद्वा कौरववीराणां निधनेन शल्यस्याश्वत्थाम्नश्चेति द्वयोरेव केवलमवशिष्टतां संभावयन्त्याः प्रश्नः कतरः पुन-रिति शल्याश्वत्थाम्नोः कतर इति । यस्मिन्सति आशां भवद्विजयविषयिणीमित्यर्थः अवल-म्बिष्ये आश्रयिष्यामि ।

**धृतराष्ट्रः**—किं वा शल्य उत वाश्वत्थामा ? ।

**संजयः**—हा कष्टम् ।

गते भीष्मे हते द्रोणे कर्णे च विनिपातिते ।
आशा बलवती राजञ्शल्यो जेष्यति पाण्डवान् ॥ २३ ॥

**दुर्योधनः**—किं वा शल्येनोत वाश्वत्थाम्ना ? । **(कडै)**

कर्णालिङ्गनदायी वा पार्थप्राणहरोऽपि वा ।
अनिवारितसंपातैरयमात्माश्रुवारिभिः ॥ २४ ॥

(नेपथ्ये कलकलं कृत्वा ) **(कडो)**

---

(२३) गत इति । हे राजन् धतराष्ट्र! भीष्मे गते सति परलोकमिति शेषः। एतेन भीष्मस्य दुर्जेयत्वमभिव्यज्यते । क्वचित्पुनर्गत इत्यत्र हत इत्येव पाठः । द्रोणे द्रोणाचार्ये हते सति । कर्णे विनिपातिते मारिते सति । शल्य एतन्नामको वीरः पाण्डवान् जेष्यति इत्याशा बलवती प्रबला । विपरीतात्र लक्षणा । भीष्मसदृशानां दुर्जयतमानामपि पाण्डवैर्निहतत्वेन क्षुद्रतमः शल्यस्तान् जेष्यतीति निरवकाशैवेयमाशेति भावः । पथ्यावक्त्रं वृत्तम् ।

**(कडै)** उतवा अथवा । एतच्च वचनं क्वचिन्नास्त्येव ।

(२४) कर्णेति । कर्णस्य दिवं गतस्य राधेयस्य आलिङ्गनं ददाति तथाभूतः । मरणस्य दातेत्यर्थः । पूर्वं मृतस्य कर्णस्य ह्यालिङ्गनं न हि विना मरणं सुघटमिति । वा अथवा। पार्थप्राणहरः अर्जुनस्य प्राणानां हारकः । वा इत्यव्ययं चकारवद्द्विरपि प्रयुज्यते। द्वितीयं पुनरेतदुक्तार्थमेवेति द्रष्टव्यम् । अयं भवत्पुरोवर्ती आत्मा मदीयो देहः अनिवारितसंपातैः न निवारितः संपातः पतनं वृष्टिरिति यावत् येषां तथाभूतैः अविरतधारं पतद्भिरित्यर्थः अश्रुवारिभिः अश्रुरूपैर्जलैः करणभूतै अभिषिक्त इति पूर्वेण संबन्धः । अत्रादित एव कर्णालिङ्गनदायीति वचनान्मरणस्यैवावश्यं भावित्वमिति संभाव्यते । स्वयमेव शत्रूणां निराकरणे प्रभविष्णुर्नेच्छामि शल्यमश्वत्थामानमपि वा सैनापत्येभिषेक्तुमिति भावः। पथ्यावक्त्रं वृत्तम् ।

**(कडो)** कलकलं कृत्वा भीमार्जुनौ वदत इति शेषः । कलकलं कृत्वेति क्वचिन्नास्ति ।

भो भोः कौरवबलप्रधानयोधाः ! अलमस्मानवलोक्य भयादितस्ततो गमनेन । कथयन्तु भवन्तः कस्मिन्नुद्देशे सुयोधनस्तिष्ठतीति । (क्डौ)

(सर्वे ससंभ्रममाकर्णयन्ति । ) (क्डं)

(प्रविश्य संभ्रान्तः ) (क्डः)

**सूतः**—आयुष्मन् ! (क्त)

प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः । ॥२५॥ अ

**सर्वे**—कश्च कश्च ? । (क्ता)

**सूतः**—

स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः ॥२५॥आ

---

**(क्डौ)** भो भो इति । कौरवबले प्रधाना मुख्या योधा वीराः । इतस्ततः अत्र तत्र । स्वाभीष्टे यत्रकापि प्रदेश इत्यर्थः । गमनेन अलम् । अत्र गन्तुमित्यपि कचित्पाठः स स्थानौचित्यादुपेक्षितः । भवन्तः कर्तारः सुयोधनो दुर्योधनः । उद्देशे प्रदेशे तिष्ठतीति कथयन्त्विति पूर्वेण संबन्धः ।

**(क्डं)** ससंभ्रमं सभयम् । 'संभ्रमौ साध्वसादरौ' इति त्रिकाण्डशेषः ।

**(क्डः)** संभ्रान्तो भीतः सूतः ।

**(क्त)** आयुष्मन् रथिन् दुर्योधन ! 'आयुष्मन् रथिनं सूतः ( ब्रूयात् )' इति दर्पणवचनात् ।

**(२५ अ)** प्राप्ताविति । इतस्ततः अत्र तत्र सर्वत्रेति यावत् । त्वां पृच्छन्तौ त्वद्विषयकं प्रश्नं कुर्वाणौ एकरथारूढौ एकस्मिन् रथे आरूढौ प्राप्तावित्युत्तरार्धेण संबद्धम् ।

**(क्ता)** कश्च कश्चेति प्राप्ताविति शेषः । कचित्पुनरत्र कश्चेत्येकमेव पदं संदृश्यते तन्न युक्तम् पुरुषद्वयविषयकत्वात्प्रश्नस्य ।

**(२५ आ)** सः अनुभूतप्रभावः प्रसिद्धो वा कर्णारिः कर्णस्य शत्रुर्हन्तेति यावत् । अर्जुन इत्यर्थः । च किं च सः प्रसिद्धोऽनुभूताचारो वा । क्रूरः वृककर्मा वृकस्य कोकस्य लांडगा इति महाराष्ट्रभाषया ख्यातस्य हिंस्रस्य पशोरिव कर्म क्रिया यस्य तथाभूतः।अतिमात्रं नृशंस इत्यर्थः। वृकोदरो भीमः इत्येतौ द्वौ प्राप्ताविति पूर्वेण संबन्धः। अत्र प्रयुक्तस्य

**गान्धारी**—(सभयम् ।) जाद, किं एत्थ पडिपज्जिदव्वम् । (जात, किमत्र प्रतिपत्तव्यम् । (क्ति)

**दुर्योधनः**—ननु संनिहितैवेयं गदा (क्ती)

**गान्धारी**—हा हदम्हि मन्दभाइणी । (हा हतास्मि मन्दभागिनी । (कु)

**दुर्योधनः**—अम्ब ! अलमिदानीं कार्पण्येन । संजय, रथमारोप्य पितरौ शिबिरं प्रतिष्ठस्व । समागतोऽस्माकं शोकापनोदी जनः । (कू)

---

तच्छब्दस्यार्थेन यच्छब्देन संबन्धः । उक्तं चात्रविषये व्यक्तिविवेके श्रीमता महिमभट्टेन 'यत्र यत्तदोरेकतरनिर्देशेनोपक्रमस्तत्र तत्प्रत्ययमर्शिना तदितरेणोपसंहारो न्याय्यः । तयोरप्यनुवाद्यविधेयत्वेनेष्टत्वात् ××× स चायमनयोरुपक्रमोपसंहारो द्विविधः शाब्द आर्थश्चेति । तत्रोभयोरुपादाने सति शाब्दः । ××× एकतरस्योपादाने सत्यार्थः । तदितरस्यार्थसामर्थ्येनाक्षेपात् । तत्र **तदः केवलस्योपादाने सत्यार्थस्त्रिविधः** प्रसिद्धानुभूतप्रक्रान्तवस्तुविषयतयोपकल्पितसन्निधिना यदा तस्याभिसंबन्धात् । इति । अत्रोद्वेगाख्यं गर्भसन्ध्यङ्गम् भीमार्जुनजनिताया भीतेरुपनिबन्धनात् । तदाह विश्वनाथः 'नृपादिजनिता. भीतिरुद्वेगः परिकीर्तित' इति । पथ्यावक्त्रं वृत्तम् ।

(क्ति) जात वत्स! अत्र अस्मिन्ननयोरागमने किं प्रतिपत्तव्यमङ्गीकर्तव्यं प्रतिविधातव्यमिति यावत् । अत्र क्वचित् सांप्रतं प्रतिपत्तव्यमिति क्वचिच्च प्रतिपत्तव्यामित्यत्र कर्तव्यमित्यपि पाठः ।

(क्ती) नन्विति संबुद्धौ हे मातरित्यर्थः । इयं गदा सन्निहितैव समीपे वर्तत एव। उपक्रान्तगदायुद्ध एतौ चूर्णयिष्यामीति भावः ।

(कु) हा इति दुःखे । मन्दोऽल्पः भागो दैवं मन्दभागः सोऽस्त्यस्यास्तथाभूता । हताऽस्मि मारितास्मि दैवेनेति शेषः । दुर्योधनावलम्बितं हि मे जीवितं स च मेऽल्पभाग्यत्वादारब्धगदायुद्धो भीमार्जुनाभ्यां हन्येतैवततश्च तदेकनिबन्धनं ममापि जीवितं विनंक्ष्यतीति भावः । अत्र क्वचिदहमित्यधिकः पाठः । क्वचित्पुनः सांप्रतं पापेति ।

(कू) कार्पण्येन दीनतया । पितरौ रथमारोप्य शिबिरं सेनानिवेशस्थानं प्रतिष्ठस्व प्रयाहि । प्रपूर्वकात्तिष्ठतेः 'समवप्रविभ्यःस्थ' इत्यात्मने पदम् । अत्र प्रस्थापयेति [illegible]नि च क्वचित्पाठः । स च नादृतोऽस्माभिर्णिचः प्रयोजनाभावात् । रथमारोपितानां [illegible] [illegible]म्यत इति । अस्माकं शोकापनोदी शोकमपनोदितुं शीलं यस्य तथा- एतयोर्हि निहनने शोकोऽपयास्यतीति ।

**धृतराष्ट्रः**—वत्स! क्षणमेकं प्रतीक्षस्व यावदनयोर्भावमुपलभे । (क्के)

**दुर्योधनः**—तात! किमनेनोपलब्धेन? । (क्कै)

( ततः प्रविशतो भीमार्जुनौ । )

**भीमः**—भो भोः सुयोधनानुजीविनः! किमिति संभ्रमादयथातथं चरन्ति भवन्तः? । अलमावयोः शङ्कया । (क्को)

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनमरुत्पाण्डवा यस्य दासाः ।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥ २६ ॥

---

(क्के) यावत् अनयोर्भीमार्जुनयोर्भावमभिप्रायं उपलभे जानामि तावदेकं क्षणं प्रतीक्षस्व प्रतिपालय ।

(क्कै) अनेन भावेन उपलब्धेन ज्ञातेन किं न किमपि फलमित्यर्थः । अत्र क्वचित्तद्गम्यतामिति पाठः ।

(क्को) अयथातथं अयथावत् अयुक्तप्रकारमित्यर्थः । आवयोः संबन्धिन्या । शेषे षष्ठी । शङ्कया भीत्या अलम् । अत्रान्तरा कथयत तावदिदमावयोरागमनं स्वामिनस्तस्य कुरुपतेरिति क्वचिदधिकः पाठः । स च नापेक्ष्यते । यो ह्यतः प्राग्भावी कुत्र दुर्योधन इति प्रश्नः स एष उत्तरत्र पद्ये भवतीति न ह्यतःप्रागेव कथयतास्मा आवयोरागमनमिति प्रश्नः संभवतीति ।

(२६) कर्तेति । असौ दुर्योधनः क्व कुत्र आस्ते उपविशति विद्यत इति यावत् तत् कथयत । कीदृशो दुर्योधनः? द्यूतच्छलानां द्यूतस्य संबन्धिनां छलानां छद्मनां ( कपटानां ) शाठ्यानां वा कर्ता । 'छलं छद्मस्खलितयोरि' ति हैमः । 'छलं स्खलितशाठ्ययोरि' ति मेदिनी च । पुनः कीदृशः? जतुमयशरणोद्दीपनः जतुमयं लाक्षानिर्मितं यच्छरणं गृहं तस्य उद्दीपनः दीपयिता दाहकदित्यर्थः । 'शरणमगारं निवसनमि' ति गृहपर्यायेषु हलायुधः । सः प्रसिद्धः अभिमानी अहङ्कारवान् । कृष्णेति । कृष्णाया द्रौपद्याः केशानामुत्तरीयस्य च व्यपनयने दूरीकरणे मरुत् वायुरिव । अत्र मरुदित्यत्र पटुरिति विश्वनाथाद्यादृतः पाठः । यस्य पाण्डवा दासाः । राजा भूपतिः । दुःशासनादेः दुःशासनप्रमुखस्य अनुजशतस्य कनिष्ठभ्रातॄणां शतस्य गुरुः उपदेष्टा ज्यायान् वा । अङ्गराजस्य अङ्गदेशा-

**धृतराष्ट्रः**—संजय ! दारुणः खलूपक्षेपः पापस्य । (**क्तौ**)

**संजयः**—तात! कर्मणा कृतनिःशेषविप्रियाः संप्रति वाचा व्यवस्यन्ति । (**क्तं**)

**दुर्योधनः**—सूत! कथय गत्वोभयोरयं तिष्ठतीति । (**क्तः**)

**सूतः**—यथाज्ञापयति देवः । (तावुपसृत्य ।) ननु भो वृकोदरार्जुनौ! एष महाराजस्तातेनाम्बया च सह न्यग्रोधच्छायायामुपविष्टस्तिष्ठति । (**क्थ**)

---

धिपतेः कर्णस्य मित्रम् । द्रष्टुं एनं साक्षात्कर्तुमभ्यागतौ प्राप्तौ स्वः । अस्तेर्लट् । रुषा रोषेण नाभ्यागतौ स्वः आवामिति शेषः । अत्र न रुषेत्यत्र पुरुषा इत्यपि क्वचित्पाठः । न रुषेत्यत्मावयोः शङ्क्येत्यत्र हेतुतामावहति । अत्र विधीयमानया स्तुत्या निन्दा गम्यत इति व्याजस्तुतिरलङ्कारः । 'उक्ता व्याजस्तुतिः पुनः । निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः ।' इति लक्षणात् । अत्र च प्रियसदृशानामप्यपराधसूचकतयाऽप्रियाणां वाक्यानामुपनिबन्धनाच्छलं नाम वीथ्यङ्गम् । तदुक्तं दर्पणे । प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य च्छलनाच्छलमि' ति । स्रग्धरा वृत्तम् । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयमिति लक्षणात् ।

(**क्तौ**) पापस्य दुष्टस्य भीमस्य उपक्षेपः वचनारम्भो वचनोपन्यासो वा दारुणः खलु भयानक एव । उपक्षेपो भर्त्सनेति तर्कवाचस्पतिः । क्वचित्पुनरुपक्षेपस्थान आक्षेप इति प्रक्षेप इति च पाठः । तत्राक्षेपो निन्दावचनम् । पापस्येति च कर्तरि षष्ठी ।

(**क्तं**) तातेति । तात पितः! धृतराष्ट्रस्य पितृतुल्यत्वात्तातेति वचनम् । कर्मणा संग्रामादिव्यापारेण । कृतनिःशेषविप्रियाः कृतं निःशेषं सकलं विप्रियं अप्रियं यैस्तथाभूताः । वाचा करणभूतया व्यवस्यन्ति उद्युञ्जते । वाग्व्यापारं कुर्वन्तीत्यर्थः ।

(**क्तः**) उभयोः भीमार्जुनयोः कथय । कथयितव्यमाह अयमिति । इतीत्यस्य कथयेत्यनेन संबन्धः । क्वास्ते दुर्योधन इति प्रश्नस्योत्तरमेतत् ।

(**क्थ**) यथाऽऽज्ञापयति देव इति तथा करोमीति शेषः । तौ भीमार्जुनौ उपसृत्य उपगत्य । महाराजो दुर्योधनः । न्यग्रोधच्छायायां वटवृक्षच्छायायाम् । 'न्यग्रोधो बहुपाद्वट' इत्यमरः । उपविष्टः तिष्ठति अस्ति ।

**अर्जुनः**—आर्य ! प्रसीद । न युक्तं पुत्रशोकोपपीडितौ पितरौ पुनरस्मद्दर्शनेन भृशमुद्वेजयितुम् । तद्गच्छावः । (कथा)

**भीमः**—मूढ ! अनुल्लङ्घनीयः सदाचारः । न युक्तमनभिवाद्य गुरून्गन्तुम् । ( उपसृत्य । ) संजय ! पित्रोर्नमस्कृतिं श्रावय । अथवा तिष्ठ । स्वयमेव श्रावयावः ( इति रथादवतरतः ) (किथ)

**भीमः**—विश्राव्य स्वकर्म नाम च वन्दनीया गुरवः (कथी)

**अर्जुनः**—( उपगम्य । ) तात ! अम्ब !

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम् ॥ २७ ॥

---

(कथा) आर्य ज्येष्ठभ्रातर्भीम ! प्रसीद प्रसादं कुरु । अनुगृहाण मामित्यर्थः । कोऽसौ प्रसाद इत्याह नेति । पुत्रेति पुत्राणां संबन्धिना शोकेनोपपीडितौ पितरौ मातापितृतुल्यौ गान्धारीधृतराष्ट्रौ प्रति अस्मद्दर्शनेन आवयोः पुत्रप्रणाशहेतुभूतयोर्दर्शनेन भृशमत्यन्तं उद्वेजयितुं न युक्तम् । तत् तस्मात् गच्छावः । अतो गमनरूपमेव प्रसादं कुर्वित्यर्थः । 'प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु' इति मेदिनी ।

(किथ) सदाचारः सतामाचारः अनुल्लङ्घनीयः नातिक्रमणीयः ।सदाचारमाह नेति गुरून्वृद्धान् अनभिवाद्य अप्रणम्य गन्तुं न युक्तम् । पित्रोर्गान्धारीधृतराष्ट्रयोः नमस्कृतिं अस्मत्कृतं नमस्कारं श्रावय ।

(कथी) स्वकर्म स्वस्य कर्म नामेति स्वस्येति संबध्यते । विश्राव्य श्रावयित्वा । नाम्ना सामान्यतोऽवगतस्य पुरुषस्य तदितरव्यावृत्तये कर्मणो विश्रावणम् । वस्तुतः पुनर्नाम्न एव कीर्तनमनुशिष्यते मुनिभिः । तथाह्युक्तं मनुना 'अभिवादात्परं विप्रो ज्यायांसमभिवादयन् । असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत् ।' इति । अत्र च स्वं कर्मेत्युचितः पाठः स्वं स्वीयम् ।

(२७) कर्म नाम च श्रावयति सकलेति । हे तात ! हे अम्बेति पृथक्पृथगत्र संबध्यते नैव तु समुच्चित्य । तत एव च त इत्येकवचनमुपपद्यते । ते तव पुत्रैः कर्तृभूतैः यत्र

**भीमः—**

चूर्णिताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाञ्चति ॥ २८ ॥

**धृतराष्ट्रः—**दुरात्मन्वृकोदर ! न खल्विदं भवतैव केवलं सपत्नानामपकृतम् । यावत्क्षत्रं तावत्समरविजयिनो जिता हताश्च वीराः । तत्किमेवं विकत्थनाभिरस्मानुद्वेजयसि ? । **(क्थु)**

---

यस्मिन्कर्णे सकलरिपुजयाशा सकलानां सर्वेषां रिपूणां आत्मनः शत्रूणां जयस्य पराभवस्य संबन्धिनी आशा बद्धा कृता । यः किल सर्वानप्यात्मनः शत्रून्पराजेष्यत इत्याशंसितमित्यर्थः । यस्य कर्णस्य गर्वेण अहंकारेण कर्त्रा लोकः भुवनं तृणमिव तृणवत् परिभूतः तिरस्कृतः, परिपूर्वो भवतिस्तिरस्कारे । तस्य राधासुतस्य राधाया नाम रथकारभार्यायाः पुत्रस्य कर्णस्य रणशिरसि संग्राममुखे निहन्ता । एतेन शौर्यातिशयो द्योत्यते । अयं पुरोवर्ती मध्यमः पाण्डवः पाण्डुपुत्रः अर्जुनः कर्ता हे पितरौ वां युवां प्रति प्रणमति नमस्करोति । न चात्रात्मप्रशंसा दोषतयाऽर्जुनस्याशङ्कितुं युक्ता । भूतो ह्यसावेतदुक्तोऽर्थः । न चास्ति भूतार्थशंसिन आत्मप्रशंसादोष इति । तदाह दण्डी 'आत्मप्रशंसादोषस्तु नास्ति भूतार्थशंसिनः।' इति। अत्र 'मध्यमः पाण्डुपुत्रः, फाल्गुनः पाण्डवोऽयम् ' इत्यपि पाठः । मालिनी वृत्तम् । 'ननमययुतेयं मालिनी भोगिलोकैः । ' इति लक्षणात् ।

(२८) चूर्णितेति । चूर्णिताः चूर्णीकृता अशेषाः सर्वेऽपि कौरव्याः कौरवा येन तथाभूतः । अत्र अशेषा इति नञोऽल्पार्थत्वं बोध्यम् । तेन दुर्योधनस्य शिष्टत्वेऽपि नाशेषत्वहानिरिति । यद्वा सामर्थ्यातिशयवशाद्दुर्योधनमगणयतो भीमस्योक्तिश्चूर्णिताशेषकौरव्य इति । चूर्णितपदं सामर्थ्यातिशयमभिव्यञ्जयति । दुःशासनासृजा दुःशासनस्य रक्तेन करणभूतेन क्षीबो मत्तः । चूर्णितस्य दुःशासनस्य रुधिरं पीत्वा मत्त इत्यर्थः । एतेन प्रतिज्ञापूरणं द्योत्यते । 'मत्ते शौण्डोत्कटक्षीबा ' इत्यमरः । सुयोधनस्य दुर्योधनस्य ऊर्वोर्भङ्क्ता भञ्जकर्ता। अयं पुरोवर्ती भीमः कर्ता। शिरसा करणभूतेन अञ्चति पूजयति नमस्करोतीत्यर्थः । वामिति शेषः । अञ्चु गतिपूजनयोरित्यतो लट् । अत्र प्रतिज्ञोल्लेखाद्व्यवसायाख्यं विमर्शसन्धेरङ्गम् । 'व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसंभव ' इतिवचनात् । अत्र च चूर्णितस्थाने निहतेति शिरसाञ्चतीत्यत्र च शिरसा नत इति विश्वनाथाद्यादृतः पाठः । पथ्यावक्त्रं वृत्तम् ।

**(क्थु)** दुरात्मन् दुष्टहृदय वृकोदर भीम ! सपत्नानां शत्रूणां ( सह पतत्येकस्मिन्नर्थे सपत्न इति शब्दकल्पद्रुमः ) अपकृतं अपकारः कृतः । यावत्क्षत्रं क्षत्रियजातिः

**भीमः**—तात ! अलं मन्युना । (**क्थू**)

कृष्णा केशेषु कृष्टा तव सदसि वधूः पाण्डवानां नृपैर्यैः

सर्वे ते क्रोधवह्नौ कृशशलभकुलावज्ञया येन दग्धाः ।

एतस्माच्छ्रावयेऽहं न खलु भुजबलश्लाघया नापि दर्पा-

त्पुत्रैः पौत्रैश्च कर्मण्यतिगुरुणि कृते तात साक्षी त्वमेव ॥ ( २९ )

---

तावत् । सर्वैरपि क्षत्रियैरित्यर्थः । तदत्र क्षत्रसाधारणे कर्मणि नास्ति ते प्रशंसावसर इति भावः । विकत्थनाभिरात्मश्लाघाभिः करणभूताभिः । उद्वेजयसि खेदयसि । अत्र दुरात्मन् वृकोदरेत्यतःपरं ' मा तावद्विकत्थयात्मानम् । ' इत्यधिकं क्वापि । क्वचित्पुनः क्षत्रमि-त्यत्र क्षात्रमित्यपि पाठः । तत्र स्वार्थेऽण् ।

(**क्थू**) मन्युना क्रोधेन । 'मन्युर्दैन्ये क्रतौ क्रुधी ' त्यमरः । अत्र अलमलमिति अलमिदानीमित्यपि च क्वचित्पाठः । न पुनरत्र कश्चिद्विशेष इति बहुपुस्तकसंवादेवादृतः पाठोऽस्माभिः ।

(२९) कृष्णेति । तव सदसि सभायां यैर्नृपै राजभिः कर्तृभूतैः पाण्डवानां पाण्डुपुत्राणामस्माकं वधूः भार्या केशेषु कृष्टा केशेषु गृहीत्वा कृष्टेत्यर्थः । एतेनापराधस्य दुःसहत्वं व्यज्यते । तव सदसीति त्वयाऽप्येतन्नोचितमाचरितं यदविनयमाचरन्तोऽप्येते न प्रतिषिद्धा इति गम्यते । ते सर्वे येन यस्मात्कारणात् कृशशलभकुलावज्ञया कृशस्य शलभानां पतङ्गानां कुलस्य सम्बन्धिन्याऽवज्ञयाऽवमानेन । यथा कृशाः पतङ्गा अवमन्यन्ते तद्वदव-मत्येत्यर्थः । 'समौ पतङ्गशलभौ' इत्यमरः । क्रोधवह्नौ क्रोधरूपाग्नौ दग्धाः भस्मीकृताःमयेति शेषः । क्रुद्धेनावमत्य निहता इत्यर्थः । एतस्मात्कारणादहं श्रावये स्वीयं कर्मेति शेषः।भुज-बलश्लाघया आत्मनो भुजयोः बलस्य श्लाघया प्रशंसया हेतुभूतया न खलु नैव श्रावये । नात्रात्मनो भुजबलप्रशंसा हेतुरित्यर्थः । अपि किंच दर्पात् गर्वाद्धेतुभूतात् न श्रावये । तत् कुतः स्वकर्मश्रावणमित्याह । हे तात ! पुत्रैः पौत्रैश्च कृते अतिगुरुणि अतिशयेन महतीति निन्दाभिव्यज्यते । कर्मणि विषये त्वमेव साक्षी साक्षाद्द्रष्टा साक्षाज्ज्ञातेत्यर्थः । दृशे-र्ज्ञानार्थकत्वस्यापि दर्शनात् । तेनान्धत्वेऽपि धृतराष्ट्रस्य न क्षतिः । यतश्च त्वमेव साक्षी ततः फलमपि तस्य कर्मणस्त्वमेव श्रावणीय इत्यत एव श्रावय इति भावः । अत्र कृष्टा केशेषु कृष्णेत्यपि क्वचित्पाठः । स च विधेयाविमर्षभीरुभिः परित्याज्यः । वधूरित्यत्र पुर इत्यपि क्वचित्पाठः । वधूरित्येव तु साधुः । संबन्धप्रदर्शनेन रिपुविनाशप्रवृत्तेर्न्याय्यत्वद्योतनात् । एतस्मादित्यत्र च तात त्वामिति क्वचित् । तत्र तातेति पौनरुक्त्यमावहति।कृशेत्यत्र च कृत-

दुर्योधनः—अरेरे मरुत्तनय! किमेवं वृद्धस्य राज्ञः पुरतो निन्दितव्यमात्मकर्म श्लाघसे। अपि च। (क्थे)

> कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
>
> प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी।
>
> अस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
>
> बाह्वोर्वीर्यातिरेकद्रविणगुरुमदं मामजित्वैव दर्पः? ॥ ३० ॥

---

मिति न युक्तम्। त्वमेवेत्यत्र च भव त्वमित्यपि पाठः। येन दग्धा एतस्माच्छ्रावय इत्यत्रैतच्छब्दस्तच्छब्दसमानार्थकः। अत एव च यदोपक्रान्तस्यानेनोपसंहारः। तदाह विश्वनाथः 'यत्तदोर्नित्यसंबन्ध इति न्यायादुपक्रान्तस्य यच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये **तच्छब्दसमानार्थतया प्रतिपाद्यमाना** इदमेतददःशब्दा विधेया एव भवितुं युक्ता' इति। अत्र क्रोधे वह्नित्वारोपाद्रूपकमलङ्कारः। शलभकुलानामवज्ञया च शत्रूणां दाहस्य संबन्धासंभवात्तत्तुल्यया ऽवज्ञयेति बिम्बानुबिंबभावो बोध्यत इति निदर्शनालङ्कारोऽपीत्यनयोः संसृष्टिः। स्रग्धरा वृत्तम्।

**(क्थे)** अरेरे इति सक्रोधाह्वाने। मरुत्तनय वायुपुत्रेति गालिः। व्यभिचारजन्येतिभावः। वृद्धस्येति विकत्थनानर्हत्वं द्योत्यते। पुरत इति न साधु। अत्र हि अस्तातिनैव भवितव्यं तस्मिंश्च सति पुरस्तादित्येव रूपं भवतीति केचित्। पुरः शब्दात्प्रातिपदिकाद्धात्वर्थ इति णिचि टिलोपे पचाद्यचि आद्यादित्वात्तसौ च वा पुरत इति रूपमिति दुर्घटवृत्तिः। वस्तुतः पुनर्निरङ्कुशाः कवयः। अपि चेत्यत्र श्वशुरे इत्यपि पाठः।

(३०) भीमार्जुनौ प्रत्याह कृष्टेति। द्यूतदासी द्यूतेन दासीभूता तव भीमस्य तव अर्जुनस्य पशोः पशुतुल्यस्य विवेकशक्तिशून्यस्येत्यर्थः। तस्य प्रसिद्धस्य राज्ञो युधिष्ठिरस्य। राज्ञ इति सोत्प्रासोक्तिः। तयोर्नकुलसहदेवयोश्च वा भार्या पत्नी। एतेनामानुषोऽयमाचार इति निन्दा गम्यते। भुवनपतेः जगदधीश्वरस्य मम आज्ञया भूपतीनां राज्ञां प्रत्यक्षं समक्षं केशेषु। गृहीत्वेति शेषः। कृष्टा। तदहमेवास्याः कर्षणहेतुरिति भावः। अस्मिन् भार्याकेशकर्षणजन्ये वैरानुबन्धे द्वेषसंबन्धे ये नरेन्द्रा राजानो हता मारितास्तैः किमपकृतं अपराद्धं युष्माकमिति शेषः तद्वद। न किंचिदप्येभिरपकृतमिति वृथैवायं तद्वधायास इति भावः। बाह्वोर्बाहुसंबन्धिनः। षष्ठ्या वीर्यातिरेकादिपदघटितेन वीर्यपदेन संबन्धः। वीर्यातिरेकद्रविणगुरुमदं वीर्यस्य बलस्येतियावत् यः अतिरेकः अतिशयः तदेव द्रविणं धनं तेन गुरुर्महान् **मदो गर्वो यस्य तथाभूतम्।** भुजबलगर्वितमित्यर्थः। मां अजित्वा अपराभूयैव दर्पः अहं-

( भीमः क्रोधं नाटयति । )

**अर्जुनः**—आर्य ! प्रसीद । किमत्र क्रोधेन ? । **(कथै)**

अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ? ॥ ३१ ॥

**भीमः**—अरेरे भरतकुलकलङ्क !

अत्रैव किं न विशसेयमहं भवन्तं
दुःशासनानुगमनाय कटुप्रलापिन् ! ।
विघ्नं गुरुर्न कुरुते यदि मत्कराग्र-
निर्भिद्यमानरणितास्थनि ते शरीरे ॥ ३२ ॥

---

कार इति प्रश्ने काकुः । आनर्जित्यैव मामहङ्कारं बिभर्षि किमित्यर्थः । नैतद्युक्तमितिभावः। अत्र कृष्टेत्यादिभाषितस्य रोषोत्थितत्वात्संफेटाख्यं विमर्षसंधेरङ्गम् । तदाहुः ' संफेटो रोष-भाषितम् । 'इति । उक्तपूर्वलक्षणं स्रग्धरावृत्तम् ।

**(कथै)** प्रसीद शान्तो भव । प्रसीद किमत्र क्रोधेनेति क्वचिन्नास्ति ।

(३१) अप्रियाणीति । हतभ्रातृशतः हतं अस्माभिर्मारितं भ्रातॄणां शतं यस्य तथाभूतः । अत एव दुःखी।वाचा वाङ्मात्रेण शक्तः समर्थः।वक्तुं समर्थ इत्यर्थः । कर्मणा न समर्थः। कर्तुमसमर्थ इत्यर्थः । एष दुर्योधनः अप्रियाणि अस्मदनिष्टानि करोति । वाङ्मात्रेण प्रलपति कर्तुं पुनर्नैव किंचिदपि शक्नोतीति भावः । अतः अस्य प्रलापैर्निरर्थकैर्वचनैः का व्यथा ? न कापीत्यर्थः । एतदीयवचनानां प्रलापमात्रत्वेन पीडाया अनिष्पत्तेर्नात्र प्रयोजनं क्रोधस्येति भावः। अत्र दुर्योधनवचनजनितस्यापमानस्य कार्यार्थं सहनाच्छादनं नाम विमर्षसन्धेरङ्गम् । तदाहुः। 'तदाहुश्छादनं पुनः । कार्यार्थमपमानादेः सहनं खलु यद्भवेत् ।' इति । पथ्यावक्त्रं वृत्तम् ।

(३२) अत्रैवेति । हे कटुप्रलापिन् ! कटु अप्रियं प्रलपितुं शीलं यस्य तथाभूत दुर्योधन ! 'अप्रियेऽपि कटुः' इति त्रिकाण्डशेषः।यदि गुरुरर्जुनः । तेनैव क्रोधस्य प्रतिषिद्धत्वात् । मत्कराग्रनिर्भिद्यमानरणितास्थनि मम कराग्रेण निर्भिद्यमानानि चूर्णीभवन्ति तत एव च रणितानि शब्दायितानि अस्थीनि यस्य तथाभूते ते शरीरे देहविषये विघ्नं न कुरुते तदेति शेषः । यदि त्वच्छरीरनिर्भेदने गुरुर्नान्तरायं कुर्यात्तदेति भावः । अहं भीमः भवन्तं

अन्यच्च मूढ !

शोकैः स्त्रीवन्नयनसलिलं यत्परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविघटने यच्च साक्षीकृतोऽसि ।
आसीदेतत्तव कुनृपतेः कारणं जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥ ३३ ॥

**दुर्योधनः**—दुरात्मन् ! भरतकुलापसद ! पाण्डवपशो ! नाहं भवानिव विकत्थनाप्रगल्भः । किं तु (**कथो**)

---

त्वां दुःशासनानुगमनाय दुःशासनस्य अनुगमनार्थं अत्रैव अस्मिन्नेव स्थले न विशसेयं किं विशसितुं हिंसितुं न शक्नुयां किम् । अपि तु अवश्यं शक्नुयामित्यर्थः । सत्यप्येवं यदिदानीमुपेक्ष्यसे तत्र केवलं गुरुकृतोऽन्तराय एव हेतुर्न तु सामर्थ्याभाव इति भावः । शसु हिंसायामित्यतः शकि लिङ्चेति लिङ् । अत्र कराग्रेत्यत्र गदाग्रेत्यपि क्वचित्पाठः । वसन्ततिलकावृत्तम् ।

(३३) भवतु तावदिदानीं गुरुकृतो विघ्नः प्रागेव त्वितः प्रवृत्ते संग्रामे कुतस्त्वयाऽहं न विशसित इति चेत्तत्राह । **शोकैरिति** । युष्मत्कुलकमलिनीकुञ्जरे युष्माकं कुलमेव कमलिनी कमलानि सन्त्यास्यां तथाभूता कमलवल्ली । पुष्करादिभ्य इतीनिः । तस्याः कुञ्जर इव निर्मूलयितरि भीमसेने मयि क्रुद्धे कोपं प्राप्ते सत्यपि । त्वं यच्छोकैः कर्तृभूतैः स्त्रीवत् नयनसलिलं अश्रूणि परित्याजितोऽसि, नैव कोपमापाद्य शत्रुषु समभिपातितोऽसीति भावः । यच्च भ्रातुर्दुःशासनस्य वक्षःस्थलविघटने उरःस्थलविदारणे साक्षीकृतः उदासीन इव साक्षाद्द्रष्टा कृतोऽसि । नैव तु वीरसहजं विक्रमं लम्भितोऽसीति भावः । एतदेव कुनृपतेः दुष्टस्य राज्ञः तव जीवितस्य कारणमभूत् । न खलु स्त्रीवद्रुदन्तं नापि वाऽवलम्ब्यौदासीन्यं पश्यन्तं शूरा विनिघ्नन्तीत्यत एव न त्वं मया निहतः । यदि तु प्रावर्त्स्यः संग्रामे तदाऽवश्यं त्वां न्यहनिष्यमिति भावः । अत्र क्वचिच्छोकं स्त्रीवदित्यपि पाठः । स च न युक्तः । न ह्यश्रूणि शोकस्य परित्यागाय प्रकल्पन्ते । किन्तर्हि शोकत एतानि जायन्त इति । कारणमित्यत्र च कारणेति क्वचित् । उपमालङ्कारः । मन्दाक्रान्ता वृत्तम् ।

(**कथो**) भरतकुलापसद भरतकुले नीच 'निहीनोऽपसदोजाल्म' इति नीचपर्यायेष्वमरः । विकत्थनाप्रगल्भः आत्मश्लाघायां प्रगल्भः प्रतिभायुक्तः । प्रतिभा च नवनवोन्मेषशालिनी बुद्धिः 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ।' इत्युक्तेः । यथाऽऽत्मश्लाघायामेव ते मतिः स्फुरति नैवं ममेति भावः । 'प्रगल्भः प्रति भान्वित' इत्यमरः ।

द्रक्ष्यन्ति नचिरात्सुप्तं बान्धवास्त्वां रणाङ्गणे ।
मद्गदाभिन्नवक्षोऽस्थिवेणिकाभीमभूषणम् ॥ ३४ ॥

**भीमः**—(विहस्य ।) यद्येवं, नाश्रद्धेयो भवान् । तथापि प्रत्यासन्नमेव कथयामि । **(क्थौ)**

पीनाभ्यां मद्भुजाभ्यां भ्रमितगुरुगदाघातसंचूर्णितोरोः
क्रूरस्याधाय पादं तव शिरसि नृणां पश्यतां श्वः प्रभाते ।
त्वन्मुख्यभ्रातृचक्रोद्दलनगलदसृक्चन्दनेनानखाग्रं
स्त्यानेनार्द्रेण चाक्तः स्वयमनुभविता भूषणं भीममस्मि ॥३५॥

---

(३४) कीदृशस्तर्ह्यहमिति क्रियानिर्देशमुखेनाह । द्रक्ष्यन्तीति । बान्धवास्ते बन्धव इत्यर्थः रणाङ्गणे संग्रामभूमौ नचिरात् अविलम्बितमेव मद्गदाभिन्नवक्षोस्थिवेणिकाभीमभूषणम् मम गदया भिन्ना या वक्षःसंबन्धिनी अस्थ्नां वेणिका वेणीतुल्या मालिका । वेणीवद्ग्रथितत्वादुरोस्थ्नां वेणीसादृश्यम् । सैव भीमं भूषणं यस्य तथाभूतं सुप्तं निद्रितं भूमौ पतितं मृतमिति यावत् द्रक्ष्यन्ति । अचिरादेव ते बन्धूनां समक्षं संचूर्ण्य वक्षःस्थलं त्वां निहनिष्यामीत्यर्थः । पथ्यावक्त्रं वृत्तम् ।

**(क्थौ)** विहस्येति दुर्योधनवचनस्यात्मनोऽनुकूलार्थत्वसंभावनाद्धासः । यदि एवं भवदुक्तप्रकारं अस्ति तदा भवान्न अश्रद्धेयः अविश्वसनीयः । यथा भवानाह तथैव हि संपत्स्यत इति । भीमानुकूलश्चेत्थं दुर्योधनवचनार्थः । रणाङ्गणे बान्धवाः त्वां भीमं न चिरादविलम्बितमेव मम गदाभिन्नानि त्वद्गदयाचूर्णानि यानि वक्षोस्थीनि तेषां वेणिकैव भीमं भूषणं यस्य तथाभूतं द्रक्ष्यन्ति । अत्र मत्पदस्यास्थिपदेन साकं संबन्धो न तूत्तरेण गदापदेनेति । प्रत्यासन्नं समीपवर्ति ।

(३५) पीनाभ्यामिति—श्वः आगामिनि दिवसे प्रभाते प्रातःकाले नृणां मनुष्याणां पश्यतां सतां पश्यतो नरान् अनादृत्येत्यर्थः 'षष्ठी चानादरे' इति षष्ठी । एतेन पश्यतां प्रतीकारासामर्थ्यद्योतनमुखेनात्मनः शौर्यातिशयो व्यज्यते । पीनाभ्यां स्थूलाभ्यां 'ओप्यायी वृद्धौ' इत्यतो 'गत्यर्थे' त्यादिना क्तः, 'ओदितश्चेति' नत्वं, 'प्यायः पी' इति च पीभावः । मद्भुजाभ्यां मम भुजाभ्यां बाहुभ्यां करणभूताभ्यां भ्रमितगुरुगदाघातसंचूर्णितोरोः भ्रमिता या गुरुः गदा तस्याः घातेन संचूर्णिते ऊरुणी यस्य तथाभूतस्य क्रूरस्य तव दुर्योधनस्य शिरसि पादं आधाय आत्मनः चरणं निधाय । स्त्यानेन घनीभूतेन । 'स्त्यै-

( नेपथ्ये । )

भो भो भीमसेनार्जुनौ! एष खलु निहताशेषारातिचक्र आक्रान्तपरशुरामाभिरामयशाः प्रतापतापितदिङ्मण्डलस्थापितस्वजनः श्रीमानजातशत्रुर्देवो युधिष्ठिरः समाज्ञापयति । (कथं)

**उभौ**—किमाज्ञापयत्यार्यः? ।

( पुनर्नेपथ्ये । )

कुर्वन्त्वाप्ता हतानां रणशिरसि जना वह्निसाद्देहभारा-
नश्रून्मिश्रं कथंचिद्ददतु जलममी बान्धवा बान्धवेभ्यः ।

---

ध्यै शब्दसंघातयोः' इत्यतो निष्ठायां 'संयोगादेरातो धातोर्यण्वत' इति निष्ठातस्य नः, आर्द्रेण क्लिन्नेन च । त्वन्मुख्येति—त्वं मुख्यो यस्मिन् तथाविधं यद्भ्रातॄणां बन्धूनां चक्रं समूहः तस्य उद्दलनेन शकलीकरणेन गलत् प्रस्रवत् असृक् शोणितमेव चन्दनं तेन करणभूतेन आनखाग्रं नखाग्रपर्यन्तं अक्तो म्रक्षितो लिप्त इत्यर्थः 'अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु' इत्यतो निष्ठा । 'यस्य विभाषेति' इडभावः । म्रक्षणं च माखणें इति महाराष्ट्रभाषायां ख्यातम् । प्रयुज्यते च म्रक्षणपदमेतदर्थे आयुर्वेदे '× × × गव्यपयसा म्रक्षयेदविशङ्कितः' इत्यादौ । स्वयं भीमं भयंकरं भूषणं अनुभविता । अनुपूर्वाद्भवतेः कर्तरि तृन् । 'न लोके'त्यादिना षष्ठीप्रतिषेधाच्च भूषणपदाद्द्वितीया । अस्मीति विभक्तिप्रतिरूपकं अहमित्यर्थकमव्ययम् । यद्वा अस्मीति 'वर्तमानसामीप्ये वर्तमानवद्वे' ति भविष्यति लट् । अनुभविता भविष्यामीत्यर्थः । अत्र असृजि चन्दनत्वारोपात् रूपकमलंकारः । स्रग्धरावृत्तं, लक्षणं पुनः प्रोक्तमेव प्राक् ।

(कथं) निहताशेषारातिचक्रः निहतं अशेषं सकलं अरातीनां द्वेष्टॄणां चक्रं समूहो यस्य तथाभूतः ( न राति ददाति सुखमित्यरातिः ) 'विश्वमशेषं कृत्स्नं' इति सकलपर्यायवचनः, 'वृन्दं चक्रकदंबके' इति समूहपर्यायेषु हैमः । आक्रान्तेति—आक्रान्तं आसादितं परशुरामस्य अभिरामं सुन्दरं यशः येन तथाभूतः । 'दानादिप्रभवा कीर्तिः शौर्यादिप्रभवं यशः' इति शब्दकल्पद्रुमे माधवी । प्रतापेति । प्रतापेन तेजसा तापितेषु दिशां मण्डलेषु स्थापिताः परिपालनार्थं प्रतिष्ठापिताः स्वजनाः स्वीया लोका येन तादृशः 'प्रतापस्तापतेजसो' रिति मेदिनी । अजातशत्रुः न जातः शत्रुः द्वेष्यो यस्य सः । देवो राजा युधिष्ठिरः ( युधि युद्धे स्थिरः अचञ्चलः । 'तत्पुरुषे कृति बहुलमि'त्यलुक्, 'गवियुधिभ्यां स्थिर' इति षत्वम् । 'युधिष्ठिर' इति संज्ञेयं ज्यायसः पाण्डुपुत्रस्य । ) अत्र परशुरामयशसो युधिष्ठिरेणाक्रमणासंभवात्तत्सादृश्यमाक्षिप्यत इति निदर्शनालङ्कारः ।

मार्गन्तां ज्ञातिदेहान्हतनरगहने खण्डितान्गृध्रकङ्कै-

रस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ॥३६॥

**उभौ**—यदाज्ञापयत्यार्यः । (इति निष्क्रान्तौ ।)

(नेपथ्ये ।) (क्थः)

---

(३६) युधिष्ठिरस्याज्ञामाह कुर्वन्त्विति । आप्ताः सन्निकृष्टाः संबन्धिनः पुत्र-भ्रात्रादयः जनाः कर्तारः । 'विशुध्यति त्रिरात्रेण मातराप्तांश्च बाधवान् ।' इति मनु-टीकायामाप्तान् स्वसन्निकृष्टान् सहोदरभ्रातृभगिन्यादीनिति कुल्लूकः । रणशिरसि संग्राम-मुखे हतानां शत्रुभिर्मारितानां स्वीयपुरुषाणां देहभारान् शरीरसमूहान् वह्निसात् अग्न्य-धीनान् कुर्वन्तु अग्निना संयोजयन्त्वित्यर्थः । 'देये त्रा च' इति वैकल्पिकः सातिः । अमी बान्धवा बन्धवः कर्तारः कथंचित् दुःखावेगस्य दुर्निरोधत्वात् महता संकटेनेत्यर्थः, अश्रून्मिश्रं अश्रुभिः नयनजलैः उन्मिश्रं युक्तं जलं प्रेताय देयं सलिलं बान्धवेभ्यः प्रेतेभ्यो बन्धुभ्यो ददतु यच्छन्तु । किं च बान्धवा हतनरगहने हतैः नरैः गहने दुर्गमे रणशिरसीत्यनु षज्यते । यद्वा हतानां नराणां गहनं काननं तस्मिन् । तत्तुल्यानां हतपुरुषाणां संख्यातिगा-मिनां विद्यमानत्वेन गहनत्वोक्तिः । गृध्रकङ्कैः गृध्रैः कङ्कैश्च पक्षिविशेषैः खण्डितान् शकली-कृतान् ज्ञातिदेहान् बान्धवशरीराणि मार्गन्तां अन्विच्छन्तु । भ्वादेर् समाप्तत्वेन मार्गतिरप्या-त्मनेपदी भौवादिक इति केचित् । 'मार्गन्तामित्यात्मनेपदं गणकृतानित्यत्वात्' इति धातु-दीपिकायां दुर्गादासविद्यावागीशः । 'मृग्यन्तां ज्ञातिदेहा हतनरगहने खण्डिता गृध्रकङ्कैः' इत्येव तु पठितुं युक्तम् । दृश्यते च 'मृग्यन्तामि' ति क्वचित्पाठः । रिपुभिः अस्मच्छ-त्रुभिः सह अयं भास्वान् सूर्यः अस्तं अदर्शनं प्रयातो गतः । अत इति शेषः । बलानि आत्मीयानि सैन्यानि संह्रियन्तां तत इतो व्यापारितानि प्रत्यानीयन्तामित्यर्थः । अत्र मार्ग-न्तामिति मार्गणे गृध्रकङ्कैः खण्डितानिति पदेन हेतुप्रदर्शनात्पदार्थगतहेतुकं काव्यलिङ्गमलं-कारः । रिपुभिः सह भास्वानस्तं प्रयात इत्यत्र च सहार्थस्य बलादेकं अस्तगमनं द्वयोर्वा-चकमिति सहोक्तिरलंकारः । तदुक्तं दर्पणे 'सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः । सा सहोक्तिर्मूलभूताऽतिशयोक्तिर्यदा भवेत् ॥' इति । बलसंहरणे च भास्वतो रिपुबलानां च अस्तगमनं हेतुतयोपनिबद्धमिति वाक्यगतहेतुकं काव्यलिङ्गम् । तेन तुरीये चरणे द्वयोः संकर इति । किंचात्र विरोधस्य प्रशमनात् शक्तिर्नाम विमर्षसंधेरङ्गम् । तदाहुः 'शक्तिः पुनर्भवेत् । विरोधस्य प्रशमनमि' ति । स्रग्धरावृत्तम् ।

(क्थः) नेपथ्ये अश्वत्थामा वदतीति शेषः ।

अरे रे गाण्डीवाकर्षण बाहुशालिन्! अर्जुन! अर्जुन! क्वेदानीं गम्यते? । (क)

कर्णक्रोधेन युष्मद्विजयि धनुरिदं त्यक्तमेतान्यहानि
प्रौढं विक्रान्तमासीद्वन इव भवतां शूरशून्ये रणेऽस्मिन् ।
स्पर्शी स्मृत्वोत्तमाङ्गे पितुरनवजितन्यस्तहेतेरुपेतः
कल्पाग्निः पाण्डवानां द्रुपदसुतचमूघस्मरो द्रौणिरस्मि ॥३७॥

---

(क) गाण्डीवाकर्षण गाण्डीवस्य नाम धनुष आकर्षण आकृष्टः । केचित्तु गाण्डीवाकर्षणबाहुशालिन्नित्येकमेव पदं मन्यन्ते । तेषां मते गाण्डीवस्याकर्षणे शरप्रक्षेपार्थं विकर्षणे बाहुशालिन् सामर्थ्यसंपन्न इत्यर्थः । अर्जुनार्जुनेति संभ्रमे द्विरुक्तिः । इदानीं अस्मत्प्राप्तिसमये क्व गम्यते यत्र क्वापि गच्छन्तं भवन्तं व्यापादयिष्यामीति नेदानीं भवता कुत्रापि गन्तुं शक्यमिति भावः ।

(३७) कर्णेति मयेति कर्तृपदमध्याह्रियते युष्मद्विजयि युष्मान्विजेतुं पराभवितुं शीलं यस्य तथाभूतमिदं मत्करे वर्तमानं धनुः कर्णक्रोधेन कर्णविषयकेण कोपेन एतानि अहानि दिनानि त्यक्तम् । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । अस्मिन् शूरशून्ये मदभावात् वीररहिते रणे युद्धे वन इव अरण्य इव भवतां युष्माकं पाण्डवानां प्रौढं प्रगल्भमित्युपहासः विक्रान्तं विक्रमः।विपूर्वात् क्रमेः नपुंसके भावे क्तः । आसीत्। अस्तेर्लङ् । संप्रति पुनः, अनवजितन्यस्तहेतेः न अवजितः पराभूतः, न्यस्ताः भूमौ निहिता हस्तात्स्वयं परित्यक्ता इत्यर्थः, हेतयः आयुधानि येन तथाभूतश्च तस्य । पितुर्जनकस्य द्रोणस्य उत्तमाङ्गे प्रधानावयवे शिरसि स्पर्शं केशग्रहणार्थं भवत्पक्ष्येण कृतं स्मृत्वा उपेतः समीपं प्राप्तः पाण्डवानां पाण्डुपुत्राणां भवतां कल्पाग्निः प्रलयाग्निः संहारकर इत्यर्थः । द्रुपदसुतचमूघस्मरः द्रुपदस्य नाम राज्ञः सुतस्य धृष्टद्युम्नसंज्ञस्य चम्वाः सेनाया घस्मरः भक्षकः समूलं नाशयितेति यावत् । 'सृघस्यदः क्मरच्' इति भक्षणार्थकात् घसेः क्मरच् । द्रौणिः द्रोणपुत्रोऽश्वत्थामा अस्मि । कर्णाय क्रुध्यता मया युष्मद्विजये समर्थमपि धनुः कालमेतावन्तं परित्यक्तमित्यत एव कानन इव यथेच्छमत्र रणे भवद्भिर्विक्रान्तम् । नासीद्धि कश्चिदप्यत्र शूर इति । संप्रति पुनः पितुरवमानं भवत्कृतं संस्मरन् भवतां च धृष्टद्युम्नस्य च संहारे प्रभविष्णुरनुप्राप्तोऽस्मि । तन्नेदानीं कुत्रापि गन्तुं शक्यमिति भावः । अत्र द्वितीयचरणे प्रौढं विक्रान्तमिति स्तुत्या वाच्यया निन्दाया गम्यमानत्वात् व्याजस्तुतिरलंकारः । पाण्डवानां कल्पाग्निरिति च रूपकम् । स्रग्धरा वृत्तम् ।

**धृतराष्ट्रः**—(आकर्ण्य सहर्षम् ।) वत्स दुर्योधन! द्रोणवधपरिभवोद्दीपितक्रोधपावकः पितुरपि समधिकबलः शिक्षावानमरोपमश्वाथमश्वत्थामा प्राप्तः । तत्प्रत्युपगमनेन तावदयं संभाव्यतां वीरः । (क्र)

**गान्धारी**—जाद! पच्चुग्गच्छ एदं महाभाअम् । (जात! प्रत्युद्गच्छैनं महाभागम् ।)

**दुर्योधनः**—तात! अम्ब! किमनेनाङ्गराजवधाशंसिना वृथायौवनशस्त्रबलभरेण? । (क्रि)

**धृतराष्ट्रः**—वत्स! न खल्वस्मिन्काले पराक्रमवतामेवंविधानां वाङ्मात्रेणापि विरागमुत्पादयितुमर्हसि । (क्री)

( प्रविश्य )

**अश्वत्थामा**—विजयतां कौरवाधिपतिः ।

---

(क्र) सहर्षमिति दुर्योधनसाहाय्यार्थमपेक्ष्यमाणस्याश्वत्थाम्नः स्वयमुपस्थितत्वाद्धर्षः । द्रोणेति । द्रोणस्य वध एव परिभवः शत्रुकृतस्तिरस्कारः तेनोद्दीपितः अतिशयेन प्रदीपितः क्रोधपावकः अग्निसदृशः क्रोधो यस्य तथाभूतः । निसर्गत एव क्रोधोऽस्य वह्निना सदृशः परदाहकरः तत्रापि च परिभवेनोद्दीपित इति किमु वक्तव्यं शत्रुक्षपणसामर्थ्यमेतस्येति भावः । पितुर्द्रोणाचार्यात् समधिकबलः शिक्षावान् धनुर्वेदाध्ययनसंपन्नः अमरोपमः अमरसदृशः मरणरहित इत्यर्थः । प्रत्युपगमनेन प्रत्युद्गमनेन । करणे तृतीया । तावत् सत्वरं संभाव्यतां समान्यताम् ।

(क्रि) अङ्गराजवधाशंसिना अङ्गराजस्य कर्णस्य वधं आशंसते इच्छति तथाभूतः तेन । वृथेति वृथा व्यर्थः यौवनस्य तारुण्यस्य शस्त्रबलस्य आयुधसामर्थ्यस्य च भरो यस्य तथाभूतस्तेन । भरपदं यथावसरमुपयुक्तत्वाभावं द्योतयति । तत एव च वैयर्थ्यम् ।

(क्री) अस्मिन् वर्तमाने विषमतम इति भावः । पराक्रमवतामिति विरागोत्पादनानर्हत्वे हेतुः । एवंविधानां ईदृशानां स्वयमेव साभिनिवेशं त्वद्रिपुवधे प्रवृत्तानामित्यर्थः । वाङ्मात्रेणापि केवलया वाचापि विरागं अपरागं अप्रणयमित्यर्थः । उत्पादयितुं जनयितुं नार्हसि न योग्यो भवसि ।

**दुर्योधनः**—(उत्थाय।) गुरुपुत्र! इत आस्यताम्। (इत्युपवेशयति।)

**अश्वत्थामा**—राजन्दुर्योधन!

कर्णेन कर्णसुभगं बहु यत्तदुक्त्वा
यत्सङ्गरेषु विहितं विदितं त्वया तत्।
द्रौणिस्त्वधिज्यधनुरापतितोऽभ्यमित्र-
मेषोऽधुना त्यज नृप प्रतिकारचिन्ताम्॥३८॥

**दुर्योधनः**—(साभ्यसूयम्।) आचार्यपुत्र! (क्नु)

अवसानेऽङ्गराजस्य योद्धव्यं भवता किल।
ममाप्यन्तं प्रतीक्षस्व कः कर्णः कः सुयोधनः?॥३९॥

---

(३८) कर्णेनेति। कर्णेन कर्त्रा यत् कर्णसुभगं श्रवणहारि तत् बहु उक्त्वा। संगरेषु युद्धेषु। तत्तत्स्थाने संवृत्तं युद्धमपेक्ष्य बहुवचनम्। यत् विहितं कृतं तत् त्वया दुर्योधनेन कर्त्रा विदितं ज्ञातम्। बहु किल कर्णसुभगं प्रोक्तं नैव तु किमपि कृतमिति भावः। हे नृप राजन् दुर्योधन एषः अस्मत्स्वरूपः द्रौणिः द्रोणपुत्रस्तु। आत्मनो नाम्नः कीर्तनाच्छौर्याभिमानो व्यज्यते। अधिज्यधनुः अधिरूढा ज्या यत्तथाविधं धनुर्यस्य तथाभूतः सज्जधन्वा सन्नित्यर्थः। समासान्तविधेरनित्यत्वान्नानङ्। धनुषश्चेति विकल्पेनानङिति जगद्धरोक्तिर्हेया संज्ञायामेवानङो विकल्पनादिति। अधुना अस्मिन् काले। अभ्यमित्रं अमित्राणां शत्रूणां अभिमुखम्। लक्षणेनाभिप्रती इत्यव्ययीभावः। आपतितः प्राप्त इत्यर्थः। अतः प्रतिकारचिन्तां प्रतिकारस्य वैरनिर्यातनस्य संबन्धिनीं चिन्तां मुञ्च त्यज। 'वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा' इत्यमरः। शत्रूनभिपतितः समूलमेवैताभिर्मूलयितुं प्रभवामीति नास्ति ते चिन्तायाः प्रयोजनमिति भावः। वसन्ततिलकावृत्तम्।

(क्नु) साभ्यसूयमिति। आत्मनःसुहृत्तमस्य कर्णस्य निन्दनादसूया।

(३९) अवसान इति। भवता अङ्गराजस्य कर्णस्य अवसाने नाशे सति नाशोत्तरमिति यावत्। योद्धव्यं किल अतः मम दुर्योधनस्यापि अन्तं नाशं प्रतीक्षस्व प्रतिपालय। यथा कर्णनाशं यावन्न युद्धवानसि एवं ममापि नाशं यावन्न युद्धस्वेति भावः। कुत एतदित्याह। कर्णः कः सुयोधनो दुर्योधनश्च कः? य एव कर्णः स एव सुयोधनो य एव च सुयोधनः ते द्वयोरभिन्नत्वादेकतरस्यावशिष्टत्वेऽपि न त्वया योद्धुं युक्तं प्रतिज्ञाव्या। पथ्यावक्त्रं वृत्तम्।

**अश्वत्थामा**—( स्वगतम् । ) कथम्! अद्यापि स एव कर्णे पक्षपातः ? अस्मासु च परिभवः ? । (प्रकाशम् । ) राजन्कौरवेश्वर! एवं भवतु । ( इति निष्क्रान्तः (क्नू)

**धृतराष्ट्रः**—वत्स! क एष ते व्यामोहो? यदस्मिन्नपि काल एवंविधस्य महाभागस्याश्वत्थाम्नो वाक्पारुष्येणापरागमुत्पादयसि । (क्के)

**दुर्योधनः**—किमस्याप्रियमनृतं च मयोक्तम्? किं वा नेदं क्रोधस्थानम्? पश्य— (क्कै)

अकलितमहिमानं क्षत्रियैरात्तचापैः
समरशिरसि युष्मद्भाग्यदोषाद्विपन्नम् ।
परिवदति समक्षं मित्रमङ्गाधिराजं
मम खलु कथयास्मिन्को विशेषोऽर्जुने वा ॥ ४० ॥

---

(क्नू) अद्यापि वर्तमाने दिवसेऽपि इदानीमपीत्यर्थः । स एव पूर्व एव । पक्षपातः प्रणयः । अस्मास्विति बहुमानार्हत्वं द्योत्यते । परिभवः अनादरः । 'अनादरः परिभव' इत्यमरः । कौरवेश्वर कौरवाणां ईश्वर । एतेन न त्वमस्माकं प्रभुरिति व्यज्यते । एवं भवदुक्तवत् । भवतोऽप्यन्तं प्रतीक्षिष्य इत्यर्थः । एतेन कोपो व्यज्यते ।

(क्के) व्यामोहोऽज्ञानम् । अस्मिन्नपि विषमतमेऽपीत्यर्थः । एवंविधस्य ईदृशस्य साहाय्याधानक्षमस्येत्यर्थः । वाक्पारुष्येण वाचः पारुष्यं परुषत्वं तेन करणभूतेन । कठोरया वाचेत्यर्थः । अपरागं अप्रणयम् । अत्र क्वचिद्यदिति क्वचिच्च महाभागस्येति नास्ति । क्वचित्पुनरपरागस्थाने विराग इत्येव पठ्यते । विरागः प्रणयाभावः ।

(क्कै) अप्रियमनिष्टम् अनृतमसत्यम् । इदं वक्ष्यमाणं कर्णनिन्दात्मकं कर्म । क्रोधस्थानत्वं विवृणोति पश्येति ।

(४०) अकलितेति । आत्तचापैः आत्ताः गृहीताश्चापा धनूंषि यैस्तथाभूतैः । आङ्पूर्वाद्ददातेर्ग्रहणार्थकान्निष्ठा । अच उपसर्गात्त इति तः । क्षत्रियैः कर्तृभूतैः अकलितमहिमानं न कलित इयत्तया विज्ञातो महिमा महत्त्वं यस्य तथाभूतम् । आजानसिद्धशस्त्रपाटवैः क्षत्रियैरपि नास्य महिमा विज्ञातुं शक्यः किं पुनरध्ययनजडेनाश्वत्थामसदृशेन ब्राह्मणेनेति भावः । युष्मद्भाग्यदोषात् युष्माकं भवतां कुरुवंश्यानां भाग्यदोषात् दैवदोषात् हेतु-

**धृतराष्ट्रः**—वत्स! तत्रापि कोऽत्र दोषः? अवसानमिदानीं भरतकुलस्य। संजय! किमिदानीं करोमि मन्दभाग्यः? (विचिन्त्य।) भवत्वेवं तावत्। संजय! मद्वचनाद्ब्रूहि भारद्वाजमश्वत्थामानम्। (क्रो)

स्म ति न भवान्पीतं स्तन्यं विभज्य सहामुना?
मम च मृदितं क्षौमं बाल्ये त्वदङ्गविवर्तनैः?।
अनुजनिधनस्फीताच्छोकादतिप्रणयाच्च त-
द्गिकृतवचने माऽस्मिन्क्रोधश्चिरं क्रियतां त्वया ॥४१॥

---

भूतात्। नैव तु संग्रामेऽपाटवादिति भावः। समरशिरसि युद्धमध्ये विपन्नं मृतमित्यर्थः। मम मित्रं सखायं अङ्गाधिराजं अङ्गदेशाधिपतिं कर्णं समक्षं प्रत्यक्षं परिवदति निन्दति। परिपूर्वो वदतिर्निन्दायाम्। 'परीवादापवादवदि' ति निन्दापर्यायेष्वमरः। अतः अस्मिन्नश्वत्थाम्नि अर्जुने कर्णहन्तरि मध्यमपाण्डवे वा कः खलु मम मते विशेषो भिन्नभावः तदेतत् कथय। अर्जुनस्येवास्यापि कर्णवधहेतुत्वाद्द्वयोरपि मन्मते तुल्यत्वमेवेति नास्य-विषये मया किंचिदप्रियमनृतं वा प्रोक्तमिति भावः। मालिनीवृत्तम्। 'ननमयययुतेयं मालिनी भोगिलोकै' रिति लक्षणात्।

(क्रो) अत्र अस्मिन्नश्वत्थामनिराकरणे को दोषः कोऽपराधः? न कश्चिदपीत्यर्थः। इदानीं भरतकुलस्य भरतवंशस्यास्मद्वंशस्येत्यर्थः। अवसानं समाप्तिः। भरतवंशस्यायं विनाशकाल इत्यर्थः। एवं वक्ष्यमाणप्रकारं करिष्य इति शेषः। भारद्वाजं भरद्वाजकुलोत्पन्नम्। अश्वत्थाम्नो हि पितामहो नाम्ना भरद्वाज इति।

(४१) वक्तव्यमाह स्मरतीति। भवान् अश्वत्थामा कर्ता अमुना दुर्योधनेन सह विभज्य विभागं कृत्वा पीतं प्राशितं स्तन्यं गान्धार्याः स्तनोद्भूतं पयः कर्मभूतम्। ( स्तनयोर्भवं स्तन्यं 'शरीरावयवाच्चे' ति यत् ) च किंच बाल्ये तव बालभावे त्वदङ्गविवर्तनैः तव अङ्गस्य शरीरस्य विवर्तनैः तत इतः संचलनैः करणभूतैः मृदितं मर्दनं प्राप्तं मम क्षौमं दुकूलं ( पट्टवस्त्रम् ) कर्मभूतम्। तद्धि क्षुमाया अतस्या जवस इति महाराष्ट्रभाषायां ख्याताया वल्कलैर्विनिर्मीयत इति। न स्मरतीति प्रश्ने काकुः। स्मरत्येवेति भावः।गान्धार्या स्वीयं स्तन्यं स्वसुतैः सह विभज्य पाययित्वा पोषितो मया च स्वीयाङ्के गृहीत्वा लालितस्त्वं यथा दुर्योधनस्तथैवास्मत्पुत्रस्थानीय एवेत्यर्थः। तत तस्मात् अनुजनिधनस्फीतात् अनुजानां कनीयसां सोदराणां निधनेन मरणेन स्फीतात् वृद्धिं प्राप्तात् स्फायी वृद्धावित्यतः

**संजयः**—यदाज्ञापयति तातः । (इत्युत्तिष्ठति । )

**धृतराष्ट्रः**—अपि चेदमन्यत्त्वया वक्तव्यम् ।

यन्मोचितस्तव पिता वितथेन शस्त्रं
यत्तादृशः परिभवः स तथाविधेऽभूत् ।
एतद्विचिन्त्य बलमात्मनि पौरुषं च
दुर्योधनोक्तमपहाय विधास्यसीति ॥ ४२ ॥

---

स्फायः स्फी निष्ठायामिति स्फीभावः । शोकात् हेतुभूतात् च किंच अतिप्रणयात् अत्यन्तानुरागात् हेतुभूतात् । आत्यन्तिको हि प्रणयो न किंचिन्न भाषयतीति हेतोरितिभावः । विकृतवचने विकृतं विकारमन्यथाभावं प्राप्तं अनुचितमिति यावत् वचनं भाषितं यस्य तथाभूतेऽस्मिन् दुर्योधनविषये त्वया कर्त्रा चिरं दीर्घकालं क्रोधः मा क्रियताम् न क्रियताम् । नायं माङ् किन्तु निषेधार्थको माशब्दस्तेन नात्र माङ्लिङ् । अस्मिन्निति वैषयिकाधारत्वविवक्षायां सप्तमी । क्रोधस्यात्र प्रकृष्टस्याविवक्षणाद्वा । क्रुधद्रुहेत्यत्रहि प्रकृष्टः कोप एव स्वविषयस्य संप्रदानत्वप्रयोजक इत्युक्तम् । अल्पोपि कोपश्चिरं मा क्रियतामित्यर्थः । बाल्ये पुत्रतुल्यामात्मन्यावयोर्वृत्तिं स्मरता परित्यज्यतां दुर्योधनविषयकः कोपो भवतेति भावः। अत्र 'य-द्वचनविकृतिस्तस्यक्रोधो मुधा क्रियते त्वये'ति 'वचनविकृतिष्वस्य क्रोधो मुधा क्रियते त्वया' इति च पाठान्तरम् । आद्यः पुनरत्र पाठोऽनुचितप्रायो द्वितीयस्तु स्पष्टार्थः । हरिणीवृत्तम् । न समरसला गः षड्वेदैर्हयैर्हरिणी मता इति लक्षणात् ।

(४२) अश्वत्थामानं प्रोत्साहयितुमाह यदिति । यत् वितथेन असत्येन गजे मृते त्वं मृत इत्याख्यानरूपेण हेतुभूतेन तव पिता शस्त्रं मोचितस्त्याजितः पाण्डवैरिति शेषः । यत् तथाविधे तादृशे निरुपमे द्रोणविषय इत्यर्थः तादृशः असाधारण इत्यर्थः सः प्रसिद्धस्त्वयाऽनुभूतो वा परिभवः अनादरः अभूत् । एतेन शत्रुनिर्मूलनस्यात्यन्तमावश्यकत्वं ध्वन्यते। एतत् द्वयं, च किंच आत्मनि विद्यमानं बलं शारीरं सामर्थ्यं पौरुषं तेजश्च विचिन्त्य विचार्य दुर्योधनोक्तं दुर्योधनस्य वचनं विहाय त्यक्त्वा विस्मृत्येत्यर्थः । विधास्यसि करिष्यसि । दुर्योधनस्यापभाषितं विस्मृत्यात्मनो बलस्य तेजसश्चानुरूपं चेष्टस्वेतिभावः । प्रयुज्यते च विध्यर्थे लृट्कविभिः क्वापि । 'पौरुषं पुरुषस्य स्याद्भावे कर्मणि तेजसि' इति मेदिनी। इतीत्यस्य वक्तव्यमितिपूर्वेण संबंधः। अत्र तथाविधोऽभूदित्यपि क्वचित्पाठः। स च तादृशपदेन पौनरुक्त्यापत्तेस्त्याज्यः । वसन्ततिलकावृत्तम् ।

**संजयः**—यदाज्ञापयति तातः । (इति निष्क्रान्तः ।)

**दुर्योधनः**—सूत! साङ्ग्रामिकं मे रथमुपकल्पय । (क्रौ)

**सूतः**—यदाज्ञापयत्यायुष्मान् । (इति निष्क्रान्तः ।)

**धृतराष्ट्रः**—गान्धारि! इतो वयं मद्राधिपतेः शल्यस्य शिबिरमेव गच्छाम वत्स! त्वमप्येवं कुरु । (क्रं)

(इति परिक्रम्य निष्क्रान्ताः सर्वे ।)

**इति पञ्चमोऽङ्कः । (क्रः)**

---

(क्रं) सांग्रामिकं संग्रामोपयुक्तम् । उपकल्पय आनयेत्यर्थः ।

(क्रः) मद्राधिपतेर्मद्रदेशाधिराजस्य शल्यस्यैव शिबिरं गच्छामः । सैनापत्यस्वी रणप्रार्थनार्थमितिभावः । इह सर्वत्रापि गच्छाव इत्येव दृश्यते पाठः । सोयं पुनर्वय कर्तृपदेन विरुद्ध इति परित्याज्यः । वत्स दुर्योधन । एवं उक्तप्रकारम् ।

**इति श्रीमत्पण्डितराजवंशावतंसवैयाकरणशेखरश्रीकान्ताचार्यसूरिण छात्रेण श्रीमत्सदाशिवबुधेन्द्रतनुजन्मना राशिवडेकरोपाह्वेन श्रीअप्पाशर्मविद्यावाचस्पतिविद्यालङ्कारमहोपदेशकेन प्रणीतायां बालबोधिन्याख्यायां वेणीसंहार- व्याख्यायां पञ्चमोङ्कः । श्रीसदाशिवा- र्पणमस्तु ॥**

# वेणीसंहारे

## षष्ठोऽङ्कः । (क्प)

( ततः प्रविशत्यासनस्थो युधिष्ठिरो द्रौपदी चेटी पुरुषश्च । )

**युधिष्ठिरः**—(विचिन्त्य निश्वस्य च । ) (क्पा)

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम् ।

---

## श्रीशिवः शरणम् ।

## वालबोधिन्यां नाम वेणीसंहारव्याख्यायां

## षष्ठोऽङ्कः ।

**श्रीगणेशाय नमः ।**

**(क्प)** षष्ठोऽङ्क इति । अत्र पञ्चमाङ्कावसाने भीमदुर्योधनधृतराष्ट्राणां वचनैः सूचितस्य दुर्योधनसंग्रामादिरूपार्थस्य षष्ठाङ्कस्यावतरणादङ्कावतारसंज्ञमर्थोपक्षेपकमिति न विष्कम्भादेर्विनिवेशः ।

**(क्पा)** कथं वा निरन्तरायमेव भीमस्य प्रतिज्ञा पूर्येतेति विचिन्तनम् । अदर्शनं गततया च दुर्योधनस्य दुर्घटत्वं तत्पूर्तेराशङ्कमानस्य कष्टसूचको निःश्वासः ।

**(१)** तीर्ण इति । कथमपि केनापिप्रकारेण अनिर्वचनीयेन प्रकारेण महता प्रयासेनेत्यर्थः । भीष्ममहोदधौ भीष्म एव महानुदधिः सागरस्तास्मिन् तीर्णे उल्लङ्घिते सति । महत्पदं दुस्तरत्वमभिव्यञ्जयति अत एव चोक्तं कथमपीति । आन्महत इति महत आत् । उदकस्योदः संज्ञायामिति चोदादेशः ( उदकानि धीयन्तेऽस्मिन्नित्युदधिः ) । द्रोणानले द्रोणरूपेऽग्नौ । कथमपीत्यत्रापि संबध्यते । निर्वृतेऽस्तंगते प्रशममनुप्राप्ते सतीत्यर्थः । अनलपदं च तापजनकत्वमभिव्यञ्जयति । निर्पूर्वको वृणोतिरस्तंगमनेऽपि संदृष्टः । अत एवोक्तमाभिधानिकैः 'निर्वृतिः सुस्थितावस्तंगमनेऽपि सुखे स्त्रियाम् ' इति । कर्णाशीविषभोगिनि आश्यां दंष्ट्रायां विषं यस्य स आशीविषो विषोल्बण इत्यर्थः स चासौ भोगीसर्पश्च

भीमेन प्रियसाहसेन रभसात्स्वल्पावशेषे जये

सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥ १ ॥

---

कर्ण एवाशीविषभोगी तस्मिन् प्रशमिते हते सति । आशीविषभोगित्वारोपश्च कर्णस्याकारणवैरपरायणतां च वध्यतां चाभिद्योतयति । शल्ये एतत्संज्ञे मद्रदेशाधिपतौ दिवं स्वर्गं याते गते सति । यातपदं च शल्यवधस्यानायाससिद्धत्वमभिव्यञ्जयति । जये स्वल्पावशेषे स्वल्पो दुर्योधनवधमात्ररूपः अवशेषः यस्य तथाभूते सति । प्रतिपक्षवीराणां विनष्टतया केवलस्य च दुर्योधनस्यैवावशिष्टतया जयस्य स्वल्पावशेषत्वे सत्यपीत्यर्थः । प्रियसाहसेन प्रियं साहसं बलात्कार्यकरणरूपं यस्य तथाभूतेन भीमेन कर्त्रा । 'साहसं तु बलात्कारकृतकार्ये' इति मेदिनी । अविमृष्य कृतिः साहसमितिहेमचन्द्रः । रभसात् वेगात् आवेशवशादित्यर्थः । वाचा 'अद्यैव दुर्योधनं हनिष्यामि नोचेत्स्वयं प्राणान्परित्यक्ष्यामि' इत्येवंप्रतिज्ञारूपया वाण्या हेतुभूतया अमी पुरो विद्यमानाः सर्वेपि वयम् । यद्यप्यङ्गुलिनिर्देशानर्हे एव वस्तुनि प्रयोक्तव्योऽदःशब्द इति नियमः । तथाविध एव चादःशब्दस्यावयवार्थोऽपि न दस्यत्यर्हत्यङ्गुलिनिर्देशमिति । तथापि निरङ्कुशा यथेच्छं प्रयुञ्जत इदमेतददःशब्दान्कवयः। जीवितसंशयं जीवितस्य संबन्धिनं संशयं जीविष्यामो वा न वेति रूपं संदेहं समारोपिता आरोपिताः स्मः । जीवितविषयकं संशयमापादिताः स्म इत्यर्थः । यदिहि पूर्येतप्रतिज्ञा भीमस्य तदा जीविष्यामो यदि नैव पूर्येत तदा भीमसेनमरणाद्वयमपि मरिष्याम इति प्रतिज्ञापूर्तेः संशयविषयत्वाज्जीवितसंदेहारोपणम् । समारोपिता इत्यत्रोपसर्गो धात्वर्थानुवर्ती । भीष्मादिषु महोदधित्वाद्यारोपाद्रूपकमलङ्कारः । स चात्र परस्परनिरपेक्षतया स्थलत्रितयेऽवस्थितः । जयस्य स्वल्पावशेषत्वे च पूर्वार्धप्रतिपादितोऽर्थो हेतुरिति वाक्यार्थगतहेतुकं काव्यलिङ्गमलङ्कारः । एवं जयस्य स्वल्पावशेषत्वेऽपि जीवितसंशयारोपणे वाचेति पदं हेतुरिति पदगतहेतुकोऽपि काव्यलिङ्गालङ्कारः । कर्णाशीविषभोगिनीत्यत्र चाशीविषभोगिपदयोरापाततः पुनरुक्तवदवभासमानयोरुभनिबन्धनात्पुनरुक्तवदाभासोऽलङ्कारः । पूर्वेषां तु लक्षणान्युक्तपूर्वाणि । 'आपाततो यदर्थस्य पौनरुक्त्यावभासनम् । पुनरुक्तवदाभासः स भिन्नाकारशब्दगः ॥' इति पुनरुक्तवदाभासलक्षणम् । 'भोगोहिकायो दंष्ट्राशी' 'भोगीभुजङ्गभुजगावि'ति 'कुम्भीनसाशीविषदीर्घपृष्ठा' इति च हैमः । अत्र च जयरूपकार्यस्य ध्वंसप्राप्तिसंभावनाद्विरोधनाख्यं विमर्शसन्धेरङ्गम् । तदाहुः 'कार्यात्ययोपगमनं विरोधनमिति स्मृतम् ।' इति । उक्तपूर्वलक्षणं शार्दूलविक्रीडितं वृत्तम् ।

**द्रौपदी**—(सबाष्पम् ।) महाराअ! पञ्चालिए त्ति किं ण भणिदम्? (महाराज! पाञ्चाल्येति किं न भणितम्?) (क्पि)

**युधिष्ठिरः**—कृष्णे! ननु मया । (पुरुषमवलोक्य ।) बुधक! (क्पी)

**पुरुषः**—देव! आज्ञापय ।

**युधिष्ठिरः**—उच्यतां सहदेवः—'क्रुद्धस्य वृकोदरस्यापर्युषितां प्रतिज्ञामुपलभ्य प्रनष्टस्य मानिनः कौरवराजस्य पदवीमन्वेष्टुमतिनिपुणमतयस्तेषु तेषु स्थानेषु परमार्थाभिज्ञाश्चराः सुसचिवाश्च भक्तिमन्तः पटुपटहरवव्यक्तघोषणाः सुयोधनसंचारवेदिनः प्रतिश्रुतधनपूजाप्रत्युपक्रियाश्चरन्तु समन्तात्समन्तपञ्चकम् । अपि च । (क्पु)

---

(क्पि) पाञ्चाल्याः पञ्चालानामधिपतेर्द्रुपदस्य पुत्र्या मया द्रौपद्या कर्त्र्या 'सर्वे जीवितसंशयमारोपिता' इत्यनेन संबन्धः । किं कस्मात् । न भणितं नोक्तम्? मन्मूलकत्वादेवास्य संग्रामस्याहमेव जीवितसंशयमारोपयित्री सर्वेषामिति भावः ।

(क्पी) कृष्णे द्रौपदि! 'पाञ्चाली द्रौपदी कृष्णा' इति शारदीनाममाला । नन्वित्यवधारणे मया युधिष्ठिरेणैवेत्यर्थः । मत्कृतद्यूतमूलकत्वात्सर्वस्याप्यस्य व्यापारस्याहमेव जीवितसंशयमारोपयितेति भावः । बुधकेति संबोध्यमानस्य पुरुषस्याख्या ।

(क्पु) प्रतिज्ञां 'अद्यैव सुयोधनं हनिष्याम्यन्यथा स्वयं मरिष्यामी' त्येवंरूपाम् । अपर्युषितां पर्युषिता पूर्तिकालं परित्यज्य वर्तमाना न भवति तथाविधाम् । परिपूर्वाद्वसतेः क्तः । वसतिश्चात्र वृत्त्यर्थः । अद्यैव पूरणीयां न तु कालान्तरपातिनीमित्यर्थः । उपलभ्य ज्ञात्वा । उपपूर्वकस्य लभेर्ज्ञानार्थकत्वस्यापि दर्शनात् । 'उपलब्धिर्मतौ प्राप्तावपि ज्ञाने च योषिति ।' इति हि मेदिनी । प्रनष्टस्य अदर्शनं गतस्य । प्रणष्टस्येति पाठस्तु शब्दानुशासनानभिज्ञतामूलक एव । नशेः षान्तस्येति णत्वप्रतिषेधात् । पदवीं गमनमार्गम् । अन्वेष्टुं मार्गितुम् । परमार्थाभिज्ञाः परमार्थतो वस्तुत एवाभिज्ञा न तु तथा संभाविता अपि तद्विपरीता इति भावः । यथार्थाभिज्ञा इत्यपि पाठः । यद्वा परमार्थस्य तथ्यभूतस्यार्थस्याभिज्ञा ज्ञातारः । तज्ज्ञानशीला इति यावत् । एष हि चराणां गुण इति । चरा गूढपुरुषाः । भक्तिमन्तोऽनुरागवन्तः अस्मास्विति शेषः । **पट्विति** पटुना स्फुटेन पटहस्य दुन्दुभिविशेषस्य रवेण शब्देन व्यक्ता घोषणा आत्मनः कर्तव्यस्योच्चैःस्वरेण

पङ्के वा सैकते वा सुनिभृतपदवीवेदिनो यान्तु दाशाः
कुञ्जेषु क्षुण्णवीरुन्निचयपरिचया बल्लवाः संचरन्तु ।
व्याधा व्याघ्राटवीषु स्वपरपदविदो ये च रन्ध्रेष्वभिज्ञा
ये सिद्धव्यञ्जना वा प्रतिमुनिनिलयं ते च चाराश्चरन्तु ॥ २ ॥'

---

प्रकाशनं येषां तथाभूताः । पटहरवानुगतेनोच्चैः स्वरेणात्मनः कर्तव्यं प्रकाशयन्त इत्यर्थः । 'पटुस्तीक्ष्णपटोलयोः । स्फुटे रोगविहीने च' ति हैमः । 'आनकः पटहोऽस्त्री स्या' दिति 'उच्चैर्घुष्टं तु घोषणा' इति चामरः । सुयोधनसंचारवेदिनः सुयोधनस्य दुर्योधनस्य संचारं संचरणप्रकारं विदन्ति जानन्ति तथाभूताः । पदचिह्नादिभिर्दुर्योधनगतिमुन्नयन्त इत्यर्थः। **प्रतिश्रुतेति** । प्रतिश्रुता देयत्वादिना प्रतिज्ञाता धनं द्रव्यं पूजा बहुमानः, प्रत्युपक्रिया प्रत्युपकारश्चेत्येते येभ्यस्तथाभूताः । कृतेऽस्मत्कार्ये धनं वो दास्यामो बहुमानं करिष्यामः प्रत्युपकरिष्यामश्चेति प्रतिज्ञाय नियुक्ता इत्यर्थः । एवं हि फलाशया सविशेषमेते प्रयतरेन्निति । यद्वा धनपूजारूपा प्रत्युपक्रिया बोध्या । समन्तपञ्चकं समन्तात्पञ्चकं ह्रदपञ्चकं यस्य तत्समन्तपञ्चकं कुरुक्षेत्रम् । अस्य हि समन्ततो भगवता परशुरामेण पञ्च ह्रदाः कृता इति । समन्तात्परितः । अन्यत्रापि दृश्यत इत्युक्तेः समन्तायोगेपि द्वितीया ।

(२) कुत्र कीदृशाश्चारा नियोक्तव्या इत्याह पङ्क इति । पङ्के कर्दमे वा सैकते सिकता ( वालुका ) प्रदेशे । सिकताशर्कराभ्यामित्यण्मत्वर्थे । सुनिभृतपदवीवेदिनः सुतरां निभृतां गूढामपि पदवी मार्गं विदन्ति तथाभूता दाशा धीवराः कोळी इति महाराष्ट्रभाषायां ख्याताः मत्स्यग्रहाजीविनः ( दशान्तिमत्स्यान्दाशाः ) । एते हि मत्स्यग्रहणार्थं सरितां तीरे चरन्तः पङ्कादिगतमार्गज्ञाने निपुणा भवन्तीति । सुनिभृतपदवीत्यत्र 'अप्सु च परपदवी' त्यपि पाठः । दाशा इत्यत्र च दासा इति । 'कैवर्ते दाशधीवरा' वित्यमरः । यान्तु दुर्योधनान्वेषणार्थं गच्छन्तु । कुञ्जेषु लतादिभिरावृतेषु देशेषु । निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदर' इत्यमरः । क्षुण्णवीरुन्निचयपरिचयाः क्षुण्णानां चूर्णीभूतानां अत्यन्तं त्रुटितानामित्यर्थः वीरुधां वल्लीनां निचयेषु समूहेषु परिचयो येषां तथाभूताः । गवां चरणाद्यर्थं कुञ्जेषु संततं परिभ्रमणात्किमयं वल्लीक्षोदो मानुषेण कृतः किं वा तदितरेणेति परिचयवशाद्विज्ञातुं समर्था इति भावः । बल्लवा गोपाः कर्तारः संचरन्तु संचारं कुर्वन्तु । क्षुण्णपदं च क्षुदिर् संपेषण इत्यतो निष्ठायां निष्पन्नम् । 'लता प्रतानिनी वीरुदि' त्यमरः । 'गोधुगाभीरबल्लवा' इत्यपि गोपपर्यायेषु स एव । अत्र कुञ्जेष्वित्यत्र कक्षेष्वित्यपि पाठः स चोपेक्ष्यो वीरुत्क्षोदपरिचयवतां कक्षेषु संचरणादेशस्यानौचित्यात् । च किंच । ये रन्ध्रेषु गुहा-

**पुरुषः**—यथाज्ञापयति देवः।

**युधिष्ठिरः**—तिष्ठ । एवं च वक्तव्यः सहदेवः । **(क्पू)**

ज्ञेया रहः शङ्कितमालपन्तः
सुप्ता रुगार्ता मदिराविधेयाः ।

---

दिरूपेषु विषयेऽभिज्ञा व्याघ्रादिर्वाऽत्र निवसति मानुषो वेति जानाना इत्यर्थः । स्वपरपदविदः स्वेषां आत्मीयानां परेषां च पदानि पदचिह्नानि विदन्ति जानन्ति तथाभूताः । व्याघ्राटवीषु व्याधानामेव संचरणेन तेषामेव पदचिह्नैर्भाव्यम् । तानि च तत्र संचरतां तेषामेव परिचितानि स्युः । तद्भिन्नतया च परपदचिह्नान्यपि विदितान्येतेषाम् । तदुक्तं स्वपरेत्यादि। व्याधा मृगवधाजीविनः पुरुषाः कर्तारः। व्याघ्राटवीषु व्याघ्रप्रचुरास्वटवीष्वरण्येषु । शाकपार्थिवादित्वात्समासः । संचरन्त्विति संबध्यते । अत्र क्वचिन्नागव्याघ्राटवीषु श्वपञ्चपुरविद इत्यपि पाठः । स च श्वपञ्चपुरज्ञानस्य प्रकृतानुपयुक्तत्वाद्धेयः । वेति चार्थे ये चेत्यर्थः । चारा गूढपुरुषा हेरइति महाराष्ट्रभाषया ख्याताः । सिद्धव्यञ्जनाः सिद्धानां योगिनां व्यञ्जनं वेषादिरूपं चिह्नमिव व्यञ्जनं येषां तथाभूताः । सिद्धवेषधारिण इत्यर्थः । 'व्यञ्जनं तेमने चिह्ने' इतिमेदिनी । व्यञ्जनपदं च व्यज्यतेऽनेनेतिव्युत्पत्त्या सिद्धत्वानुमितिजननक्षमत्वं वेषादेरभिद्योतयति । तेच तेतु प्रतिमुनिनिलयं मुनिनिलये मुनिनिलये । वीप्सायामव्ययीभावः । निलयं गृहम् । चरन्तु । सिद्धव्यञ्जनानामेव मुनिगृहगतपुरुषज्ञानसंभवात्तेषां तत्र संचरणादेशः । तेषु चाराश्चरन्त्विति पाठस्त्वसंबद्धत्वादुपेक्षितः । स्रग्धरावृत्तम् ।

(क्पू) एवं च वक्ष्यमाणप्रकारेणापि । इदमपरमित्यपि पाठः समीचीनः । अपरं पूर्वोक्तादन्यत् ।

(३) वक्तव्यमाह ज्ञेया इति । रहः एकान्ते शङ्कितं संजातशङ्कं यथा तथा शृणोति वा कश्चिदित्याशङ्कया सहितं यथा तथेत्यर्थः आलपन्तः परस्परं भाषमाणाः पुरुषा ज्ञेयाः क एते किं चालपन्तीति ज्ञातव्या इत्यर्थः । अप्रकाशनीयं किलार्थमेवं प्रवदन्ति यश्चाप्रकाश्यस्तेषां स एव कदाचिदात्मनो जिज्ञासितो भवतीति ते ज्ञेया इत्युक्तम् । एवं सुप्ता निद्रामनुप्राप्ताः एते हि कदाचिदुत्स्वप्नायमानाः परमार्थमुद्गिरन्तीति । ज्ञेया इति पूर्वार्धे सर्वत्र संबध्यते । रुगार्ताः रुजा रोगेणार्ताः पीडिता ज्ञेयाः। एतेऽपि समुपचितायां पीडायां प्रलापेषु रहस्यमुद्गिरन्तो लक्ष्यन्त इति । मन्दिराविधेयाः मदिराया मद्यस्य विधेया दासाः

त्रासो मृगाणां, वयसां विरावो
नृपाङ्कपादप्रतिमाश्च यत्र ॥ ३ ॥

**पुरुषः**—यदाज्ञापयति देवः । (इति निष्क्रम्य पुनः प्रविश्य सहर्षम् ।) देव ! पाञ्चालकः प्राप्तः । (क्पे)

**युधिष्ठिरः**—त्वरितं प्रवेशय ।

**पुरुषः**—(निष्क्रम्य पाञ्चालकेन सह प्रविश्य ।) एष देवः । उपसर्पतु पाञ्चालकः

**पाञ्चालकः**—जयतु जयतु देवः । प्रियमावेदयामि महाराजाय देव्यै च।

**युधिष्ठिरः**—पाञ्चालक ! कच्चिदासादिता तस्य दुरात्मनः पदवी ? (क्पै)

---

अनवरतं मदिरामासेवमाना इत्यर्थः । एतेऽपि मदनाक्रान्ता रहस्यमुद्भेदयन्तीति । मदिराविधेया इत्यत्र वने विचेया इत्यपि पाठः। विचेया अन्वेषणीयाः । यथा पुरुषास्तथा स्थानान्यपि कियन्तिचिज्ज्ञेयानीत्याह त्रास इति । यत्र मृगाणां हारिणानां त्रासः भीतिः तत्सूचिकाश्चेष्टा इत्यर्थः भवन्तीति शेषः। भीरवो हि मृगा मानुषदर्शनतो बिभ्यतीति तेषां चेष्टाभिर्मानुषप्रवेशो विज्ञायेत । प्रविष्टश्च मानुषः कदाचिद्दुर्योधनोऽपि स्यादिति । यत्र वयसां पक्षिणां विरावः शब्दः। कानने हि मानुषदर्शनतो भीताः पक्षिणो विरुवन्तीति । 'खगबाल्यादिनोर्वयः ' इति 'आरवारावसंरावविरावा ' इति चामरः । यत्र च नृपाङ्कपादप्रतिमाः नृपस्याङ्काश्चिह्नं नृपत्वसूचकं मत्स्यादि तद्युक्ताः पादप्रतिमाः चरणप्रतिच्छायाः चरणतलाकृतयइत्यर्थः । सन्तीति शेषः-। तानि स्थानानि ज्ञेयानीति विपारिणामेनान्वयः। राजलक्षणान्वितानां हि पादप्रतिमानां दर्शनं दुर्योधनान्वेषण उपयुज्येतेति । अत्र यत्रेत्यत्र शत्रोरि-त्यपिपाठः। स चायुक्त इत्युपेक्षितः । सामान्यतो हि शक्येत विज्ञातुं राजपदप्रतिमा नैव तु विशेषतोऽमुकस्येति । उपजातिर्वृत्तम् । इन्द्रवज्रोपेन्द्रवज्रयोर्मिश्रणमुपजातिः । तत्रेन्द्रवज्रा लक्षणं 'स्यादिन्द्रवज्रा यदि तौ जगौ गः । ' इति उपेन्द्रवज्रायास्तु 'उपेन्द्रवज्रा प्रथमे लघौ सा 'इति । उपजातेस्तु 'अनन्तरोदीरित (अव्यवहितपूर्वोक्त ) लक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः । ' इति ।

(क्पे) सहर्षमिति प्रवृत्तिज्ञानार्थं प्रहितस्य पाञ्चालकस्य दर्शनाद्धर्षः । पाञ्चालक एतन्नामा दूतः ।

(क्पै) दुर्योधनस्य पदव्या आसादनस्यैव प्रियत्वेन संभावनात्पृच्छति कच्चिदिति ।

**पाञ्चालकः**—न केवलं पदवी । स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः । **(क्पो)**

**युधिष्ठिरः**—साधु भद्र ! प्रियमावेदितम् । अथ दर्शनगोचरं गतः ? **(क्पौ)**

**पाञ्चालकः**—देव ! समरगोचरं पृच्छ **(क्पं)**

**द्रौपदी**—( सभयम् ) कहं, समरगोअरो वट्टइ मे णाहो ? । (कथं, समरगोचरो वर्तते मे नाथः ? ) **(क्पः)**

**युधिष्ठिरः**—(साशङ्कम् ।) सत्यं, समरगोचरो मे वत्सः ? **(क्फ)**

**पाञ्चालकः**—सत्यम् । किमन्यथा वक्ष्यते महाराजाय । **(क्फा)**

---

कच्चिदितीष्टप्रश्ने । 'कच्चित्कामप्रवेदन ' इत्यमरः । दुरात्मनो दुष्टहृदयस्य तस्य दुर्योधनस्य आसादिता प्राप्ता ? अत्र कौरवाधमस्येति क्वचिदधिकः पाठः । न पुनरेष प्राचीनप्रबन्धेषु संदृष्ट इत्युपेक्षितः ।

(क्पो) स एव सोऽपीत्यर्थः पूर्वत्र न केवलमित्युक्तेः । अस्ति चात्र सोऽपीति-पाठो न पुनरसावादृतो विश्वनाथादिभिः प्राचीनैरिति नोपात्तोऽस्माभिः । देवीति । देव्या-द्रौपद्याः केशपाशस्य केशसमूहस्य स्पर्श एव पातकं तस्य प्रधानो मुख्यो हेतुः । एतदाज्ञयैव दुःशासनेनास्याः केशपाशस्य स्पृष्टत्वात् । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । उपलब्धः प्राप्तः । उपसर्गोऽत्र धात्वर्थानुवर्ती । इह पाञ्चालकेत्यादिनोपलब्ध इत्यन्तेन दुर्योधनदोषाणां प्रख्यापनादपवादाख्यं विमर्षसन्धेरङ्गम् । तदाहुः 'दोषप्रख्यापवादः स्या'दिति ।

(क्पौ) प्रियमिष्टम् । आवेदितं कथितम् । अथेतिप्रश्ने । दर्शनगोचरं दृष्टिविषयम् । अत्र नैकविधाः पाठाः । न चमत्कारिणः सुगमाश्चेति नात्रोदाहृताः ।

(क्पं) समरगोचरं युद्धक्रियाविषयम् । आरब्धयुद्धो न वेति पृच्छेत्यर्थः । न केवलं दृष्टिविषयं गतः किन्तु युद्धमप्यनेन साकमारब्धमिति भावः ।

(क्पः) दुर्योधनस्य संग्रामविषयत्वाकर्णनेन तत्प्रतिभटस्य भीमस्यापि तथाविधतां संभावयन्ती पृच्छति कथमिति।कथमिति प्रश्ने।सभयमिति संग्रामस्यानियतजयतया भयम् ।

(क्फ) साशङ्कमिति 'अतिस्नेहः पापशङ्की'ति पापमाशङ्कमानस्याशङ्का ।

(क्फा) अन्यथा असत्यं किं कस्मात् । महाराजायान्यथा वक्ष्येत किमित्यन्वयः न वक्ष्यत इतिभाव इत्येके ।

युधिष्ठिरः—

त्रस्तं विनापि विषयादुरुविक्रमस्य
चेतो विवेकपरिमन्थरतां प्रयाति ।
जानामि चोद्यतगदस्य वृकोदरस्य
सारं रणेषु भुजयोः परिशङ्कितश्च ॥ ४ ॥

(द्रौपदीमवलोक्य । ) अयि सुक्षत्रिये !

गुरूणां बन्धूनां क्षितिपतिसहस्रस्य च पुरः
पुराभूदस्माकं नृपसदसि योऽयं परिभवः ।
प्रिये प्रायस्तस्य द्वितयमपि पारं गमयति
क्षयः प्राणानां नः कुरुपतिपशोर्वाद्य निधनम् ॥ ५ ॥

---

(४) त्रस्तमिति । उरुविक्रमस्य उरुर्विपुलो विक्रमः पराक्रमो यस्य तथाभूतस्यापि पुरुषस्य चेतः मनःकर्तृ विषयात् त्रासस्थानाद्विनापि त्रासहेतोर्विनापीत्यर्थः। विवेकपरिमन्थरतां विवेके निर्णये परिमन्थरं मन्दं तत्य भावस्ताम् । प्रयाति । सम्यङ् निर्णेतुं न शक्नो॰ तीत्यर्थः। पराक्रमशालितया, स्वपक्षीयस्य विजयो निश्चित एवेति विज्ञातुं क्षमोऽपि स्निग्धो जनः स्नेहस्य शङ्काशीलतया स्याद्वा न वा विजय इति शङ्कयैवाकुलीक्रियते नैव तु स्यादेव विजय इति विनिर्णेतुं प्रभवतीति भावः । उरुविक्रमस्येति विक्रमाभिज्ञत्वं त्रासानर्हत्वं विवेकक्षमत्वं चाभिव्यञ्जयति । सामान्यमेतत्प्रकृते योजयति जानामीति । रणेषु युद्धेषु । तत्तद्युद्धापेक्षया बहुवचनम् उद्यतगदस्य उद्यता उत्तोलिता गदा येन तथाभूतस्य वृकोदरस्य भुजयोः सारं बलं जानामि च । अहमित्यर्थात्कर्तृपदमध्याह्रियते । परिशङ्कितः स्यान्नवाऽस्य विजय इति शङ्काकुलश्च अस्मीति शेषः । 'वड्रोरुविपुल' मिति 'सारो बले स्थिरांशे च' ति चामरः । ' कुसुम्भ्यां नद्र्योर्मन्द ' इति मन्थरपर्यायेषु मेदिनी । अत्र प्रथमार्धगतेन सामान्येन द्वितीयार्धगतस्य विशेषस्य समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्यं च कारणेनेदं कार्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ॥ ' इति लक्षणात् । अत्र भ्रातुर्विनापि विजया' दिति- प्रथमपादे पाठः स चासंबद्धत्वादुपेक्षितः । उत्तरार्धे च भुजयोरित्यत्र विजय ' इत्यपि पाठः। परिशङ्कितपदेनैव च शङ्काविषयस्य विजयस्याक्षेप इति नायमादृतोऽस्माभिः । वसन्ततिलकावृत्तम् ।

(५) विजयाभावेऽपि न क्षतिरित्याह गुरूणामिति । हे प्रिये प्रीत्यास्पदीभूते द्रौपदि ! गुरूणां वयसा ज्येष्ठानां भीष्मधृतराष्ट्रादीनां बन्धूनां संबन्धिनां क्षितिपतिसहस्रस्य

अथवा कृतं संदेहेन । ×

नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा ।
बध्यते केशपाशस्ते स चास्याकर्षणक्षमः ॥ ६ ॥

पाञ्चालक! कथय कथय कथमुपलब्धः स दुरात्मा? कस्मिन्नुद्देशे? किं वाधुना प्रवृत्तामिति? । (क्फि)

**द्रौपदी**—भद्द! कहेहि कहेहि । (भद्र! कथय कथय । ) (क्फी)

---

क्षितिपतीनां पृथ्वीश्वराणां ( राज्ञां ) सहस्रस्य च पुरः अग्रे पुरा पूर्वं द्यूतावसरे नृपसदसि राजसभायां यः अयं इदानीमपि बुद्धिस्थतया पुर इव दृश्यमानः परिभवः तिरस्कारः अभूत् जातः।अद्य अस्मिन् वर्तमाने दिवसे नः अस्माकं पाण्डवानां प्राणानां क्षयो नाशः । भीमस्य प्रतिज्ञाया असंपूर्तौ तन्निधनेनास्माकमपि तदनुगामित्वादिति भावः । वा अथवा कुरुपतिपशोः दुर्योधनरूपस्य पशोर्निधनं मरणं इत्येतत् द्वितयं द्वयमपिकर्तृ । संख्याया अवयव इति तयप् । प्रायः तस्य परिभवस्य पार अन्तं गमयति गमयिष्यतीत्यर्थः । वर्तमान सामीप्ये वर्तमानवद्वेति भविष्यति लट् । अथैव द्वयोरन्यतरद्भविष्यतीत्यर्थः । पारगमने द्वितयस्यापि कर्तृत्वाद्द्वितयमपीत्युक्तम् । तेन नायमपिरेवार्थ इति द्रष्टव्यम् ।

(+) अविशाङ्कित च भीमसेन एव विजयीभविष्यतीत्याह अथवेति ।

(६) नूनमिति । प्रतिज्ञाभङ्गभीरुणा प्रतिज्ञाया दुर्योधनहननरूपाया भङ्गात् भीरुणा भयशीलेन बिभ्यतेत्यर्थः । तेन वीरेण भीमसेनेन अद्य ते केशपाशः केशसमूहः नूनं निश्चितं बध्यते भन्त्स्यत इत्यर्थः । वर्तमानसामीप्ये भविष्यति लट् । च किं च अस्य केशपाशस्य आकर्षणक्षमः आकर्षणसमर्थः स दुर्योधनोऽपि बध्यते बवयोरभेदाद्धंस्यत इत्यर्थः।पूर्वत्र बन्ध बन्धन इत्येतस्योत्तरत्र तु वध हिंसायामित्यस्य भौवादिकस्य रूपमिति बोध्यम् । एतच्च भट्टनारायणस्य वङ्गीयतां विस्पष्टयति । वङ्गीयेषु बवयोः स्थान एक एव वर्ण उच्चारश्चास्यबकारवदेवेति । तत एव च न्यवध्नादेवं भट्टः । अन्यथा पुनरुक्तिष्टेऽत्र नैवं न्यवेशयिष्यत्पद्य इति । पथ्यावक्त्रं वृत्तम् ।

(क्फि) कथय कथयेति संभ्रमे द्विरुक्तिः । संभ्रमश्च वृत्तान्तज्ञान औत्सुक्यातिशयमभिव्यञ्जयति । उपलब्धः प्राप्तः । उद्देशे प्रदेशे प्रवृत्तमारब्धम् ।

(क्फी) कथय कथयेति द्विरुक्तिरौत्सुक्यातिशयमभिद्योतयति ।

**पाञ्चालकः**——शृणोतु देवो देवी च। अस्तीह देवेन हते मद्राधिपतौ शल्ये गान्धारराजकुलशलभे सहदेवशस्त्रानलं प्रविष्टे सेनापतिनिधननिराक्रन्दविरलयोधोज्झितासु समरभूमिषु रिपुबलपराजयोद्धतवल्गितविचित्रपराक्रमासादितविमुखारातिचक्रासु धृष्टद्युम्नाधिष्ठितासु च युष्मत्सेनासु प्रनष्टेषु कृपकृतवर्माश्वत्थामसु तथा दारुणामपर्युषितां प्रतिज्ञामुपलभ्य कुमारवृकोदरस्य न ज्ञायते क्वापि प्रलीनः स दुरात्मा कौरवाधमः। (क्फु)

**युधिष्ठिरः**—ततस्ततः।

---

(क्फु) अस्तीति वाक्यारम्भे विभक्तिप्रतिरूपकमव्ययम्। इहास्मिन्युद्धे देवेन राज्ञा भवता युधिष्ठिरेण कर्त्रा। **गान्धारेति**। गान्धाराणां भारतवर्षस्योत्तरतो विद्यमानानां देशविशेषाणां राजानो गान्धारराजास्तेषां कुले शलभः पतङ्ग इव तस्मिन् शकुनौ। गान्धारदेशश्च संप्रति कंदहार इति प्रसिद्ध इत्याचक्षते राधाकान्तदेवादयः। बृहत्संहितायां चोदीच्यप्रदेशेष्वयं परिगणितः **सहदेवशस्त्रानलं** सहदेवः पञ्चमः पाण्डवस्तस्य शस्त्रमेवाग्निस्तस्मिन् शस्त्रसंबन्धिन्यग्नौ वा प्रविष्टे तस्य शस्त्रेण निधनमनुप्राप्त इत्यर्थः। गान्धारराजशलभकुल इति पाठस्तु गान्धारराजानां बहुत्वाभावादुपेक्ष्यः। **सेनापतीति** सेनापतेः शल्यस्य शकुनेश्च निधनेन मरणेन निराक्रन्दा अत्यन्तमाक्रन्दन्तो विरलाश्च ये योधाः प्रतिपक्षयोद्धारस्तैरुज्झितासु त्यक्तासु। उज्झ त्याग इत्यतः कर्मणि निष्ठा। निराऽत्यन्तार्थकत्वं च निरायतपूर्वकाया इत्यादौ द्रष्टव्यम्। निरानन्देतिपाठस्तु साधीयान्। नराक्रन्द इति पाठे तु नरशब्दो व्यर्थ इव प्रतिभाति। समरभूमिषु युद्धप्रदेशेषु तत्तद्युद्धप्रदेशापेक्षया बहुवचनम्। **रिपुबलेति**। रिपूणां बलस्य सैन्यस्य पराजयेन उद्धतमविनयप्रचुरं वल्गितं गतिर्यासां तथाभूता विचित्रेण पराक्रमेण आसादितं आक्रान्तं समरविमुखानां युद्धपराङ्मुखानामरातीनां शत्रूणां चक्रं समूहो याभिस्तथाभूताश्च तासु। वल्गितमिति वल्गतेर्गत्यर्थान्नपुंसके भावे क्तः। वेल्लितमित्यत्रापि पाठे वेल्लितं चलनं गमनमित्यर्थः। धृष्टद्युम्नाधिष्ठितासु धृष्टद्युम्नेन द्रुपदपुत्रेण अधिष्ठितास्वध्यक्षीभूय पर्यवेक्षितासु। प्रनष्टेषु अदर्शनं गतेषु। कृपोऽश्वत्थाम्नो मातुलः। कृतवर्मा हृदिकापुत्रो यादवविशेषः। दारुणां भयङ्करीं अपर्युषितां वर्तमान एव दिवसे पूरणीयाम्। दिनान्तरवर्ति हि पर्युषितत्वमापद्यत इति। वृकोदरस्येति षष्ठ्याः प्रतिज्ञया संबन्धः। ज्ञायत इति वर्तमानसामीप्ये भूते लट्। नाज्ञायीत्यर्थः। क्वापि अनिर्वचनीये प्रदेशे प्रलीनो गुप्तः स दुरात्मा न ज्ञायत इत्यनेन संबन्धः। प्रलीनत्वादेव ज्ञानविषयत्वाभावः।

**द्रौपदी**—अयि! परदो कहेहि । (अयि! परतः कथय ।)

**पाञ्चालकः**—अवधत्तां देवो देवी च । ततश्च भगवता वासुदेवेनाधिष्ठितमेकरथमारूढौ कुमारभीमार्जुनौ समन्तात्समन्तपञ्चकं पर्यटितुमारब्धौ तमनासादितवन्तौ च । अनन्तरं दैवमनुशोचति मादृशे भृत्यवर्गे दीर्घमुष्णं च निश्वसति कुमारे बीभत्सौ जलधरसमयनिशासंचारितविद्युत्प्रकरपिङ्गलैः कटाक्षैरादीपयति गदां वृकोदरे यत्किंचनकारितामधिक्षिपति विधेर्भगवति नारायणे कश्चित्संविदितः कुमारस्य मारुतेरुज्झितमांसभारः प्रत्यग्रविशसितमृगलोहितचरणनिवसनस्त्वरमाणोऽन्तिकमुपेत्य पुरुषः श्वासग्रस्तार्धश्रुतवर्णानुमेयपदया वाचा

---

(क्कू) अवधत्तां श्रवणार्थमेकाग्रान्तःकरणो भवतु । अवपूर्वकाद्धधातेर्लोट् । श्नाभ्यस्तयोरित्याल्लोपे दधस्तथोश्चेति भष् । वासुदेवेन वसुदेवपुत्रेण श्रीकृष्णेन अधिष्ठितमध्यक्षितं सारथीभूय नोद्यमानमित्यर्थः । एकरथं एकं रथम् । आरब्धौ आरम्भं कृतवन्तौ । कर्तरि क्तः । अनासादितवन्तौ न प्राप्तवन्तौ । अत्र च नासादितवन्तावित्येवोचितः पाठः । भृत्यवर्गे सेवकसमूहे अनुशोचितवति सति । सकर्मकः शोचतिः । कुमारे बीभत्सावर्जुने निश्वसति सति । दुर्योधनाप्राप्तिजन्यविषादमूलको निश्वासः । बीभत्सावित्यत्र बन्धुवर्गे इत्यपि पाठः । **जलधरेति** जलधरसमयस्य वर्षाकालस्य निशायां संचारितानां संजातसंचाराणां तडितां विद्युतां प्रकरः समूह इव पिङ्गलास्तैः कोपातिशयवशात्कटाक्षाणां पिङ्गलता अत्र च कटाक्षपदं कटाक्षप्रवृत्तदर्शनपरं । तद्बहुत्वापेक्षया चात्र बहुवचनम् । विद्युदित्यत्र खद्योतेत्यपि पाठः । गदां आदीपयति आसमन्तात्प्रकाशयति सति । सक्रोधं गदामालोकयति सतीत्यर्थः । विधेर्दैवस्य 'विधिर्विधाने दैवे' त्यमरः । यत्किंचनकारितां यत्किंचन प्रकृतानुपयुक्तमित्यर्थः कर्तुं शीलं यस्य तस्य भावो यत्किंचनकारिता ताम् । अधिक्षिपति सति निन्दति सति । नारायणे श्रीकृष्णे । संविदितो विज्ञातः परिचित इत्यर्थः । मारुतेर्वायुपुत्रस्य भीमस्य । उज्झितस्त्यक्तो मांसभार उह्यमानो येन तथाभूतः । वृत्तविनिवेदनार्थमुपसर्पितुमिच्छोर्मांसभारत्यागः । **प्रत्यग्रेति** । प्रत्यग्रं नवं यथा तथा विशसितैर्हिंसितैः सद्योहतैरित्यर्थः । मृगैः पशुभिर्हरिणैर्वा लोहितानि आरक्तानि तद्रक्तसंपर्काच्छोणानीत्यर्थः चरणौ पादौ निवसनं वस्त्रं चेत्येतानि यस्य तथाभूतः । 'प्रत्यग्रोऽभिनवो नव्य' इति 'लोहितो रोहितो रक्त' इति चामरः । अत्र मृगलोहितलोहितेत्यपि पाठः तत्र लोहितेन शोणितेन लोहितानीत्यर्थः । **श्वासेति** । श्वासेन त्वराजन्यश्रमजन्मना ग्रस्ताः क-

कथितवान् 'अस्मिन्महतोऽस्य सरसस्तीरे द्वे पदपद्धती समवतीर्णप्रतिबिम्बे तयोरेका स्थलमुत्तीर्णा न द्वितीया । परत्र कुमारः प्रमाणम्' इति । ततः ससंभ्रमं प्रस्थिताः सर्वे वयं तमेव पुरस्कृत्य । गत्वा च सरस्तीरं परिज्ञायमानसुयोधनपदलाञ्छनां पदवीमासाद्य भगवता वासुदेवेनोक्तम्––'भो वीर वृकोदर! जानाति किल सुयोधनः सलिलस्तम्भनीं विद्याम् । तन्नूनं तेन त्वद्भयात्सरसीमेनामधिशयितेन भवितव्यम् ।' एतच्च वचनमुपश्रुत्य रामानुजस्य सकलदिङ्निकुञ्जपूरितातिरिक्तमुद्भ्रान्तसलिलचरशकुन्तकुलं त्रासोद्धतनक्रग्राहमालोड्य सरः

---

वलिता विलुप्तप्रायतां नीता अत एवार्धमसमग्रं यथातथा श्रुता ये वर्णा अक्षराणि तैरनुमेयानि संभावनीयानि पदानि यस्यास्तथाभूतया वाचा करणभूतया इह क्वचित्परुषेति श्वासविशेषणमधिकं क्वचिच्च पदस्थाने समुदाचार इति पाठः । तत्र समुदाचारः सत्कारः । अस्मिन्नित्यस्य तीर इत्यनेन संबन्धः । अस्य महतः सरसोऽस्मिंस्तीर इत्यन्वयः । पदपद्धती पदगम्ये वर्त्मनी । 'पद्धतिः पङ्क्तिवर्त्मनो' रिति मेदिनी । समवतीर्णप्रतिबिम्बे सम्यक् अवतीर्णानि उद्भूतानीत्यर्थः प्रतिबिम्बानि पदप्रतिमा यत्र तथाभूते । तयोः पद्धत्योर्मध्ये एका । उत्तीर्णा प्राप्तेति यावत् । परत्र अतःपरं करणीयेऽर्थे कुमारो भीमो भवान् प्रमाणं निश्चेतेत्यर्थः । प्रमाणं हि निश्चयसाधनत्वेन निश्चेतृ भवतीति । तत एतद्वचनोत्तरम् । तं निवेदयितारं पुरुषं पुरस्कृत्य अग्रे कृत्वा तत्परिचितत्वान्मार्गस्य । प्रस्थिताः प्रयाता निर्गता इत्यर्थः । परिज्ञायमानसुयोधनपदलाञ्छनां परिज्ञायमानानि सुयोधनस्य पदलाञ्छनानि पदचिह्नानि यस्यां तथाभूताम् । पदवीं मार्गम् । अत एव पूर्वत्र पद्धतिपदं मार्गवाचीति प्रतीयते । सलिलस्तम्भनीं सलिलस्तम्भनसाधनभूताम् ( स्तभ्यते प्रतिबध्यते निश्चलीक्रियत एतया स्तम्भनी ) । त्वद्भयात् त्वत् त्वत्तो भयं तस्मात् हेतोः । एतां सरसीं सरः । अधिशीङ्स्थासामित्यधिकरणस्य कर्मत्वम् । अधिशयितेन अध्यासीनेन । सरस्यां वर्तमानेनेत्यर्थः । रामानुजस्य रामस्य बलरामस्यानुजः कनीयान्भ्राता तस्य श्रीकृष्णस्य । उपश्रुत्य श्रुत्वा ।**सकलेति** सकलानां दिङ्निकुञ्जानां दिक्संबधिनां कुञ्जानां पूरितं पूरणं यस्मात् तस्मादतिरिक्तमधिकम् । पूरितमिति भावे क्तः। उद्भ्रान्तेति । उद्भ्रान्तं उपरिकृतभ्रमणं सलिलचराणां जलचराणां शकुन्तानां पक्षिणां कुलं समूहो यस्मिन्कर्मणि तद्यथा तथा । 'शकुन्तशकुनिद्विजा' इतिपक्षिपर्यायेष्वमरः । **त्रासेति** त्रासेन भीत्या उद्धताः क्षुब्धा इत्यर्थः नक्राः कुम्भीराः ' सुसर ' इति ख्याता जलचरविशेषा ग्राहा अवहारा 'नाडेसावज' इतिख्याता जलचरविशेषाश्च यस्मि-

सलिलं भैरवं च गर्जित्वा कुमारवृकोदरेणाभिहितम्---'अरेऽरे वृथाप्रख्यापिता-लीकपौरुषाभिमानिन् ! पाञ्चालराजतनयाकेशाम्बराकर्षणमहापातकिन् ! (वक्रू)

जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितमधुक्षीबं रिपुं मन्यसे

---

न्कर्मणि तद्यथातथा । आलोड्य विलोड्य । विलोडनं च मथनसदृशी क्रिया । भैरवं भीषणं यथातथा गर्जित्वा । अभिहितं उक्तम् । वचनमाह अरेऽर इति । अरेऽर इति सावज्ञाम-न्त्रणे । **वृथेति** । वृथा व्यर्थं प्रख्यापितं स्वयमेव प्रसिद्धिं नीतं अलीकं मिथ्याभूतं यत्पौरुषं तेजस्तेनाभिमानी गर्वयुक्तः तथाभूत । **पाञ्चालेति** । पाञ्चालराजस्य द्रुपदस्य तनयाया द्रौपद्याः केशानामम्बरस्य वस्त्रस्य चाकर्षणमेव महापातकं तदस्त्यस्य तथाभूत ।

(७) दुर्योधनं युद्धार्थमुत्थापयितुं तर्जयति जन्मेति । हे नृपशो ना चासौ पशुश्च तथाभूत पशुगुणवन्मनुष्य । विमले निष्कलङ्के इन्दोश्चन्द्रस्य कुले वंशे जन्म आत्मन उत्पत्तिं व्यपदिशसि वदसि । विमल इति नोचितं वंशेऽत्र समरपलायनरूपेणात्मनः कर्मणा कलङ्का-रोपणमिति गम्यते।यद्वा नोचितो भवादृशस्य दुरात्मन एतद्वंशे जन्मव्यपदेश इतिभावः । साहाय्याभावादेव संग्रामे न प्रभवामीति चेत्तत्राह।अद्यापि गदां धत्से धारयसि । गदां धार-यितुं प्रभवतस्तत्सहायस्य भवतो नोचितं पलायनम् । वीरा ह्यायुधमात्रसहाया अपि प्रयु-ध्यन्त इति कर्मेदं भवदीयं वीरत्वाभावमवगमयतीति वंशस्य कलङ्कायैवेति भावः । तथापि नास्ति समबलो मे योध इतिचेतदपि नास्तीत्याह।मामिति । दुःशासनकोष्णशोणितमधुक्षीबं दुःशासनस्य कोष्णं प्रत्यग्रत्वादीषदुष्णं शोणितं रक्तमेव मधु मद्यं तेन पीतेनेत्यर्थात् क्षीबो मत्तस्तम् । एतेन सामर्थ्यातिशयो द्योत्यते । कोष्णमित्यत्र 'ईषदर्थे' इति कोः कादेशः । 'मधुमद्ये पुष्परसे' इति 'मत्तेशौण्डोत्कटक्षीबा' इति चामरः । मां रिपुं द्वेष्यं मन्यसे । तेन जीवति मादृशे विक्रमवति प्रतिभटे नोचितं ते पलायनं विशेषतश्च मया पीते दुःशासन-शोणित इतिभावः । इतोऽप्यनुचितं ते पलायनमित्याह दर्पान्ध इति । दर्पेणान्धो विवेक-दृष्टिशून्यः मधुकैटभद्विषि मधुः कैटभश्चेति द्वावसुरौ तौ द्वेष्टि तथाभूते मधुकैटभहन्तरीति-यावत् । एतेन हरेर्विक्रमातिशयो व्यज्यते । हरौ श्रीकृष्णेऽपि उद्धतं अविनीतं यथातथा चेष्टसे व्यापारं करोषि संध्यर्थं समनुप्राप्तस्य श्रीकृष्णस्य बन्धुमारब्धत्वात् । अत्राप्युद्धतं चेष्ट-मानस्यात्मनि पौरुषातिशयं संभावयतो न ते युक्तं पलायनमिति भावः। अधुना इदानीं मे त्रासान्मद्भीत्या समरं युद्धं विहाय त्यक्त्वा पङ्के सरःकर्दमे । पाप इति च गम्यते। शूराणां संग्रामत्यागस्य पापजनकत्वात् । लीयसे लीनो भूत्वा तिष्ठसि । अत्यन्तमेतदनुचितं ते पूर्व-

दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
त्रासान्मे नृपशो! विहाय समरं पङ्केऽधुना लीयसे ॥ ७ ॥

अपि च। भो मानान्ध!

पाञ्चाल्याः मन्युवह्निः स्फुटमुपशमितप्राय एव प्रसह्य
व्यामुक्तैः केशपाशैर्हतपतिषु मया कौरवान्तःपुरेषु।
भ्रातुर्दुःशासनस्य स्रवदसृगुरसः पीयमानं निरीक्ष्य
क्रोधात्किं भीमसेने विहितमसमये यत्त्वयास्तोऽभिमानः ॥ ८ ॥

---

व्यापाराणां च कुलस्य चेतिभावः। 'पुरा किल सलिलैकमये जगति सागरे योगनिद्रामासेवमानस्य भगवतो विष्णोः कर्णमलतो मधुः कैटभश्चेति द्वावसुरौ समुत्पन्नौ। एताभ्यां च जिघांस्यमानेन ब्रह्मणा संस्तुता योगनिद्रा भगवन्तं विष्णुं तत्याज। तया च त्यक्तः स ताभ्यामसुराभ्यां पञ्चवर्षसहस्राणि नियुयुधे। नियुद्धप्रसन्नाभ्यां च 'वृणु वर' मित्युक्तो विष्णुः 'युवां मे वध्यौ भवत' मित्याह। ताभ्यां च सलिलैकमयं जगदालोकमानाभ्यां प्रोक्तं 'भवत्वेवं, यत्र नो सलिलं तत्रावां जहि' इति। भगवता च तयोर्जघने शिरसी कृत्वा चक्रेण च्छिन्ने।' इति मार्कण्डेयपुराणगता कथाऽत्रानुसंधेया। अत्र दुर्योधनस्य तर्जनात् दुःशासनेत्यादिना भयप्रदर्शनाच्च द्युतिरिति विमर्षसन्धेरङ्गम्। तदुक्तं दर्पणे 'तर्जनोद्वेजने द्युतिः'। इति। अत्र समानार्थकान्यपि कियन्तिचित्पाठान्तराणि विहाय प्राचां श्रीविश्वनाथकविराजादीनां प्रबन्धानुसार्येवादृतः पाठोऽस्माभिः। शार्दूलविक्रीडितं वृत्तम्।

(८) भूयिष्ठं किल मया प्रत्यपकृतं नैव पुनरंशतोऽपि त्वयेत्याह पाञ्चाल्या इति। मया भीमेन कर्त्रा कौरवान्तःपुरेषु कौरवाणां भार्यासु। अन्तःपुरशब्दः स्त्रीणां गृहे वर्तमानोऽपि लक्षणया तत्स्थाः स्त्रियोऽप्यभिधत्ते न चापि लिङ्गं विजहाति। 'स्त्र्यगारं भूभुजामन्तः पुर' मित्यमरः। प्रसह्य बलात्कारेण हतपतिषु हताः पतयो भर्तारो येषां तथाभूतेषु सत्सु व्यामुक्तैः विशेषेणासमन्तान्मुक्तैः। पतीनांमृतत्वात्केशपाशानां व्यामोचनम्। केशपाशैः केशसमूहैः करणभूतैः पाञ्चाल्या द्रौपद्याः मन्युवह्निः क्रोधरूपोऽग्निः स्फुटं स्पष्टं यथातथा उपशमितप्रायः प्रायेण बाहुल्येनोपशमितः शान्तिं नीतः। आहिताग्न्यादित्वात्प्रायशब्दस्यपरनिपातः। यद्वा प्रायशब्दो बहुलांशवाची उपशमित प्रायं बहुलोंऽशो यस्य तथाभूत इत्यर्थः। केचितु प्रायशब्दस्य सादृश्यवाचकतामङ्गीकुर्वाणा उपशमित सदृश इत्यर्थापयन्ति।

**द्रौपदी**—णाह! अवणीदो मे मण्णू जइ पुणो वि सुलहं दंसणं हुवि-स्सदि । (नाथ! अपनीतो मे मन्युर्यदि पुनरपि सुलभं दर्शनं भविष्यति । (क्फे)

**युधिष्ठिरः**—कृष्णे! नामङ्गलानि व्याहर्तुमर्हस्यस्मिन्काले । भद्र! तत-स्ततः । (क्फै)

---

दुर्योधनस्यावशिष्टत्वेन साकल्याभावात्प्रायपदम् । केवलमस्मद्भार्यायाः केशाकर्षणजन्येन मन्युना मयैवं विहितं भवता पुनर्न किंचिदप्यनुष्ठितमित्याह । भ्रातुरिति । भ्रातुरात्मनो बन्धोरित्युपेक्षानर्हत्वं गम्यते। दुःशासनस्य उरसो वक्षसः स्रवत् असृक् रक्तं पीयमानं भीम-सेनेनेत्यर्थात्संबध्यते। निरीक्ष्य निपुणमवलोक्य । भ्रातुरुरःशोणितमपि पीयमानं तटस्थवन्निपु-णमालोकमानो न त्वं वीर इति भावः । क्रोधात्कोपमापद्य । ल्यब्लोपे पञ्चमी । त्वया कर्त्रा भीमसेने मयि । आत्मनामोत्कीर्तनं च शौर्याभिमानमभिव्यञ्जयति । मद्विषय इत्यर्थः। वैष-यिक आधारे सप्तमी । किंकृतं? यत् यस्मात्त्वया असमये अकाले। अभिमानः अस्तः सुदूरं क्षिप्तस्त्यक्त इत्यर्थः । असु क्षेपण इत्यतो निष्ठा । स खल्वभिमानत्यागस्य कालो भवति यत्र किंचिदपिकरणीयं नावशिष्यते तव तु सर्वमप्यवशिष्टमित्यकाल एवाभिमानत्यागः शौर्या-भावं तवाभिव्यञ्जयतीति भावः। 'कस्माद्युष्माकं केशा न संयम्यन्त' इति द्रौपद्रीं प्रति भव-द्भार्यायाः सोत्प्रासं वचनमवगतवता सर्वासामपि कौरवस्त्रीणां केशा अपुनर्बन्धनाय मयोन्मो-चिताः पाञ्चाल्याश्च केशपाशमाकृष्टवतो दुःशासनस्य वक्षः प्रविदार्य ततः स्रवच्छोणितमपि मया पीतं त्वया पुनरशेषमप्येतदालोकितवता न किंचन कृतं प्रत्युत पलायितमिति धिक् त्वं वृथाभिमानिनं मत्तोऽतिनिकृष्टमिति भावः।अत्र मन्युवह्निरित्यत्र क्रोधवह्निरित्यपि पाठः।उत्तरत्र पुनर्द्रौपदीवचने मन्युपदस्य विनिवेशनं पद्येऽत्र मन्युपदस्यैव विनिवेशनं समाचष्टे। अनुवा-द्यानि हि पदानि प्रायेणाकर्णितान्येव प्रयुज्यन्ते न नव्यानि संलापप्रसंग इति।तत एव चोपेक्षितो ऽयं पाठः । व्यामुक्तैरित्यत्र च व्यासक्तैरित्यपि पाठः। स च पतिनिधने केशानां व्यासङ्गस्य विरुद्धत्वादुपेक्ष्यः । उक्तपूर्वलक्षणं स्रग्धरावृत्तम् ।

(क्फे) यदिति संदिग्धत्वं दर्शनस्याभिव्यञ्जयति ।

(क्फै) अमङ्गलानीति। दर्शनस्य संदिग्धत्वप्रदर्शनादमङ्गलत्वं वचनानाम् । अम-ङ्गलानि अशुभानि वचनानीत्यर्थः । अस्मिन् काले शुभसमये । व्याहर्तुं वक्तुम् । 'व्याहार उक्ति' रित्यमरः ।

**पाञ्चालकः**—ततश्चैवं भाषमाणेन वृकोदरेणावतीर्य क्रोधोद्धतं गदापरिघ-पाणिना सहसैवोल्लङ्घिततीरमुत्सन्ननलिनीवनमपविद्धमूर्च्छितग्राहमुद्भ्रान्तमत्स्यशकुन्तमतिभैरवारवभ्रमितवारिसंचयमायतमपि तत्सरः समन्तादालोडितम् । (क्फो)

**युधिष्ठिरः**—भद्र! तथापि किं नोत्थितः? । (क्फौ)

**पाञ्चालकः**—देव!

त्यक्त्वोत्थितः सरभसं सरसः स मूल-
मुद्भूतकोपदहनोग्रविषस्फुलिङ्गः ।

---

(क्फो) एवं उक्तपूर्वप्रकारेण भाषमाणेन । गदापरिघपाणिना गदा च परिघ आयुधविशेषश्च पाणौ यस्य तथाभूतेन वृकोदरेण भीमेन क्रोधोद्धतं यथा तथा अवतीर्य सरसीत्यर्थात् । आयतं दीर्घमपि तत्सरः कर्मभूतं उल्लङ्घिततीरं उल्लङ्घितं जलस्येतस्ततः प्रसृततयाऽतिक्रान्तं तीरं तटं येन तथाभूतं यथा स्यात्तथा। उत्सन्नानि विनष्टानि नलिनीनां कमलिनीनां वनानि यस्मिन् कर्मणि तद्यथातथा । उत्सन्नानीति षद्लृविशरण इत्यत उत्पूर्वान्निष्ठा । अपविद्धमूर्छितग्राहं अपविद्धाः सलिलवेगाहतास्तत एव च मूर्छिता विसंज्ञतां प्राप्ता ग्राहा अवहाराख्या जलचरा यस्मिन्कर्मणि तद्यथा तथा। **उद्भ्रान्तेति**। उद्भ्रान्ताः साध्वसवशात्कृतपरिभ्रमणा मत्स्याः शकुन्ता जलचराः पक्षिणश्च यस्मिन्कर्मणि तद्यथा तथा। **अतीति**। अतिशयेन भैरवः भीषणः आरवो ध्वनिर्यस्य तथाविधो भ्रमितो वारीणां जलानां संचयो यस्मिन्कर्मणि तद्यथा तथा । अत्र अवतीर्य क्रोधोद्धतं गदापरिघपाणिनेत्यत्र अवार्यक्रोधोद्धतभ्रमितभीषणगदापाणिनेति,उद्भ्रान्तमत्स्यग्राहमित्यत्र चोद्भ्रान्तसकलसलिलशकुन्तमिति भैरवारवेत्यत्र भैरववेगेत्यान्ध्रपुस्तकेषु संदृष्टः पाठः । मनोरमश्चायं सुगमश्च ।

(क्फौ) किमिति प्रश्ने । नोत्थितः किमित्यर्थः । अत्र किमिति क्वचिन्नास्ति तत्र प्रश्ने काकुः ।

(९) त्यक्त्वेति । सुमथनादत्यन्तं विलोडनाद्देवदानवकृतात् कारणभूतात्क्षीरोदधेः पयःसागरात् । अपादाने पञ्चमी । एष च सागरो दक्षिणस्यां दिशि विद्यते । एतस्य चोपपत्तिरस्मत्कृते प्राचांभूगोलविज्ञाने द्रष्टव्या । कालकूट इव कालस्य मृत्योः कूटो राशिरिव कालकूटो विषविशेषः स यथा तथा । उद्भूतकोपदहनोग्रविषस्फुलिङ्गः उद्भूताः संजाताः कोपदहनः क्रोधाग्निरेवोग्रा विषस्फुलिङ्गाः विषकणा यस्मिंस्तथाभूतो निरतिशयं कुपित इत्यर्थः।

आयस्तभीमभुजमन्दरवेल्लनाभिः
क्षीरोदधेः सुमथनादिव कालकूटः ॥ ९ ॥

**युधिष्ठिरः**—साधु सुक्षत्रिय! साधु । **(क्फं)**

**द्रौपदी**—पडिवण्णो समरो ण वा? । ( प्रतिपन्नः समरो न वा?। ) **(क्फः)**

**पाञ्चालकः**—उत्थाय च तस्मात्सलिलाशयात्करयुगलोत्तम्भिततोरणीकृतभीमगदः कथयति स्म—अरे रे मारुते! किं भयेन प्रलीनं दुर्योधनं मन्यते भवान्? मूढ! अनिहतपाण्डुपुत्रः प्रकाशं लज्जमानो विश्रमितुमध्यासितवानस्मि पातालम् । ' एवं चोक्ते, वासुदेवकिरीटिभ्यां द्रावय्यन्तःसलिलं निषिद्धसमरार-

---

स दुर्योधनः कर्ता । आयस्तेति । आयस्तौ आयासवन्तौ भीमस्य भुजावेव मन्दरो मथनाद्रिस्तस्य वेल्लनाभिश्चालनाभिः कारणभूताभिः मूलं सरसस्तलं त्यक्त्वा सरभसं सवेगं सरसः सरोवरात् उत्थित उपर्यागतः । अत्र सरसः स मूलमित्यत्र सलिलं सलीलमित्यपि क्वचित्पाठः । स चायुक्तः सरभसत्वसलीलत्वयोर्विरोधात्क्रोधातिशयावसरे लीलाया एकान्तत एवासंभवाच्च । बिम्बप्रतिबिम्बभावेनोपमालङ्कारः । वसन्ततिलकावृत्तम् ।

**(क्फं)** सुक्षत्रियेति । एष एव हि सुक्षत्रियाणां धर्मो यच्छत्रुणाऽऽहूता युद्धायोपतिष्ठन्त इति । तस्य चानुपालनात्साधुवादः । वचनमेतद्युधिष्ठिरस्योदारस्वभावतां बोधयति । शत्रुरपि हि संस्तूयत एतेनेति ।

**(क्फः)** प्रतिपन्नः स्वीकृतः समरो युद्धम् । 'अस्त्रियां समरानीकरणा ' इत्यमरः ।

**(क्य)** सलिलाशयात् सरसः ( सलिलं जलमाशेत आसमन्तात्तिष्ठत्यस्मिन् । पुंसि संज्ञायामित्यादिना घः) **करेति** । करयोर्युगलेन द्वयेनोत्तम्भिता आद्यन्तयोर्गृहीत्वोत्तोलिता तत एव च तोरणीकृता वन्दनमालेव कृता भीमा भयंकरी गदा येन तथाभूतः । तोरणीकृतेत्युक्तेराद्यन्तयोर्ग्रहणमाक्षिप्यते । 'बुधैर्वन्दनमाला च तोरणं परिकीर्त्यते । ' इति हलायुधः । कथयति स्माकथयत् । अपरोक्षे चेति स्मयोगे लट् । अवददित्यर्थः । नाहं भयेन प्रलीन इत्याह अरेरे इति । प्रलीनमदर्शनं गतम् । मूढेति जलाशयेऽवस्थानस्यान्यथा ग्रहणान्मूढत्वम् । अनिहतपाण्डुपुत्रः न निहताः पाण्डुपुत्राः पाण्डवा येन तथाविधः अत एव च प्रकाशं सर्वजनसमक्षं विश्रमितुं विश्रान्तिमनुभवितुं लज्जमानः पातालं तस्याप्रकाशे विद्यमानत्वात् अध्यासितवानस्मि अध्युषितवानस्मि पाताले स्थितवानस्मीत्यर्थः । विश्रमितु-

म्भौ स्थलमुत्तारितौ । आसीनश्च कौरवराजः क्षितितले गदां निक्षिप्य विशीर्णरथसहस्रं निहतकुरुशतगजवाजिनरसहस्रकलेवरसंमर्दसंपतद्गृध्रकङ्कजम्बूकमस्मद्वीरमुक्तसिंहनादमपामित्रबान्धवमकौरवं रणस्थानमवलोक्यायतमुष्णं च निश्वसितवान् । ततश्च वृकोदरेणाभिहितम्—अयि भोः कौरवराज! कृतं बन्धुनाशदर्शनमन्युना । मैवं विषादं कृथाः 'पर्याप्ताः पाण्डवाः समरायाहमसहाय' इति।(क्य)

---

मित्यर्थात्। 'अधिशीङ्स्थासां कर्मे'त्यधिकरणस्य कर्मत्वम्। उक्ते दुर्योधनेनेत्यर्थात् । वासुदेवकिरीटिभ्यां श्रीकृष्णार्जुनाभ्यां अन्तःसलिलं सलिलमध्ये निषिद्धसमरारम्भौ निषिद्धः समरारम्भो युद्धव्यापारो ययोस्तथाभूतौ द्वौ भीमदुर्योधनौ स्थल भूप्रदेशं उत्तारितौ अवतारितावित्यर्थः । आसीन उपविष्टः । आस उपवेशन इत्यतः शानच् ईदास इतीत् । कौरवराजः कौरवाणां राजा दुर्योधनः । राजाहः सखिभ्य इति टच् । निक्षिप्य क्षिप्त्वा । **विशीर्णेति** । विशीर्णं चूर्णीभूतं रथसहस्रं यत्र तथाविधम् । **निहतेति** । निहतानि शत्रुभिर्मारितानि यानि कुरूणां कौरवाणां शतं गजानां वाजिनामश्वानां नराणां वीरपुरुषाणां सहस्राणि चेत्येतानि तेषां कलेवराणां शरीराणां संमर्दे परस्परं विमर्दे संपततो भक्षणार्थं प्राप्तवन्तो गृध्राः कङ्का जम्बूका गोमायवश्च यस्मिंस्तथाभूतम् । गृध्रा गीध इति ख्याताः। कङ्को लोहपृष्ठापरपर्यायो बाणोपयोगिपक्षः पक्षिविशेषः । **अस्मदिति** । अस्माकं पाण्डवानां वीरैर्मुक्तः कृत इत्यर्थः सिंहनादः सिंहध्वनिसदृशो ध्वनिर्यत्र तथाभूतम् । अपामित्रबान्धवं अपगता मित्राणि बान्धवाश्च यस्मात्तथाभूतम् । मित्रबान्धवशून्यमित्यर्थः । रणस्थानं युद्धभूमिम् । आयतं दीर्घं यथातथा उष्णं च यथातथा निःश्वसितवान् । स्वपक्षोत्सादसमवेक्षणजन्यशोकमूलको निःश्वासः । वृकोदरेण भीमेन अभिहितं उक्तम् । वचनमाह अयीति । अयिभो इत्यव्ययद्वयं संबोधने । कृतं अलम् । साध्यं नास्तीत्यर्थः । **बन्धिवति** । बन्धूनां संबन्धिनां नाशस्य दर्शनेन यो मन्युः शोकस्तेन । 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । पाण्डवाः कर्तारः समराय युद्धार्थं पर्याप्ताः समर्थाः । 'पर्याप्तं तु यथेष्टे स्यात्तृप्तौ शक्ते निवारण' इति मेदिनी । अहं असहाय इति हेतोः एवं विषाद खेदं मा कृथाः । न माङ्योग इत्यटो निषेधः । अत्राध्यासितवानित्यत्राध्यवसितवानित्यपि पाठः। स चासंबद्धत्वादुपेक्ष्यः। अध्यवसाये हि नात्र पातालं कर्म भवितुमर्हतीति । अध्यवसायश्चोत्साहः। उत्साहोऽध्यवसायः स्यादित्यमरात्। अकर्मा चात्रार्थेऽयं धातुरिति । अपरेपि पाठा अनर्हा इत्युपेक्षिता अस्माभिः ।

पञ्चानां मन्यसेऽस्माकं यं सुयोधं सुयोधन! ।
दंशितस्यात्तशस्त्रस्य तेन तेऽस्तु रणोत्सवः ॥ १० ॥

इत्थं च श्रुत्वाऽसूयान्वितां दृष्टिं कुमारयोर्निक्षिप्योक्तवान्धार्तराष्ट्रः (क्या)

कर्णदुःशासनवधात्तुल्यावेव युवां मम ।
अप्रियोऽपि प्रियो योद्धुं त्वमेव प्रियसाहसः ॥ ११ ॥

---

(१०) किं तर्हि कर्तव्यमित्याह । हे सुयोधन ! अस्माकं पञ्चानां धर्मादीनां मध्ये। निर्धारणे षष्ठी। यं सुयोधं सुखेन योद्धुं शक्यम्। येन युद्धं सुयोधनेति पाठे मन्यसेऽभिप्रेषीत्यर्थः । तन सह । सहार्थे तृतीया । दंशितस्य धृतकवचस्य आत्तशस्त्रस्य गृहीतशस्त्रस्य ते तव त्वत्कर्तृक इत्यर्थः रणोत्सवः युद्धरूप उत्सवः अस्तु भवतु । 'दंशितो वर्मितः सज्ज' इति धृतकवचपर्यायेषु हैमः । एकेनैव स्वेष्टेन योद्धव्यत्वान्नास्ति सहायाभावजन्यस्य मन्योः प्रयोजनमिति भावः । पथ्यावक्त्रं वृत्तम् ।

(क्या) इत्थं इति । असूयान्वितां गुणेषु दोषारोपानुकूलश्चित्तवृत्तिविशेषोऽसूया तदनुगतां असूयावबोधिकामित्यर्थः । 'शौचाचारादिगुणे दम्भादिकृतत्वरूपदोषारोपानुकूलश्चित्तवृत्तिविशेषोऽसूये'ति नागेशः। असूयात्मिकामित्यपि पाठः। क्वचित्पुनः किंचिदश्रुपातान्वितामित्यपि । कुमारयोर्भीमार्जुनयोः ।

(११) वचनमाह कर्णेति । युवां अर्जुनश्च त्वं चेति द्वौ । त्यदादीनि सर्वैर्नित्यमित्येकशेषः । कर्णदुःशासनवधात् यथाक्रमं कर्णस्य दुःशासनस्य च वधात् हननात् हेतोः । मे मम मन्मत इत्यर्थः । तुल्यौ वध्यतया समानौ । यद्वा मम समानबलावित्यर्थः । त्रयाणां पुनरसमानबलत्वान्न युद्धार्हत्वमिति गम्यते । एतेन कर्णाद्यपेक्षयाऽत्मनः सामर्थ्यातिशयो द्योत्यते । तत्रापि भीमस्यैव युद्धार्हत्वमाचष्टे अप्रिय इति । अप्रियो वस्तुतोऽनिष्टोऽपि प्रियसाहसः प्रियं साहसं यस्य तथाभूतस्त्वमेव। केवलं त्वं न पुनरर्जुन इतिभावः। योद्धुं प्रियइष्टो ममेत्यर्थात्संबध्यते। प्रियत्वे च प्रियसाहसत्वरूपस्य हेतोर्निर्देशो दुर्योधनस्य विक्रमातिशयशालित्वं द्योतयति । अत्र वस्तुतोऽप्रियस्यापि भीमस्य प्रियत्वे प्रियसाहसत्वं हेतुरिति पदगतहेतुकं काव्यलिङ्गमलङ्कारः । त्वमेवेत्यत्र त्वमेक इत्यपि पाठः । अप्रियोऽपीत्यत्र चामित्र इति प्रिय इत्यत्र रण इति पाठः । एतदपेक्षया चास्मदादृत एव पाठः सरसतमः। अन्यत्र हि नास्ति किंचिदप्यपिशब्दस्वारस्यमित्यादि विज्ञायतां रसिकैः। पथ्यावक्त्रं वृत्तम्।

इत्युत्थाय च परस्परक्रोधाधिक्षेपपरुषवाक्कलहप्रस्तावितघोरसङ्ग्रामौ विचित्राविभ्रमितगदापरिभासुरभुजदण्डौ मण्डलैर्विचरितुमारब्धौ भीमदुर्योधनौ। अहं च देवेन चक्रपाणिना देवसकाशमनुप्रेषितः । आह च देवो देवकीनन्दनः । अपर्युषितप्रतिज्ञे मारुतौ प्रनष्टे च कौरवराजे महानासीन्नो विषादः । संप्रति पुनर्भीमसेनेनासादिते सुयोधने निष्कण्टकीभूतं भुवनतलं परिकलयतु भवान् । अभ्युदयोचिताश्चानवरतं प्रवर्त्यन्तां समारम्भाः । कृतं संदेहेन । **(क्यि)**

---

**(क्यि) परस्परेति** । परस्परयोरन्योन्ययोः क्रोधेनाधिक्षेपो निन्दा यत्र तथाविधो यः परुषः श्रवणकठोरो वाक्कलहस्तेन प्रस्तावितः कृतप्रस्तावो घोरः संग्रामो याभ्यां तथाविधौ । प्रस्ताव आरम्भः। परुषया वाचा कलह इति वा विग्रहणीयम् । प्रस्तावित इत्यत्र प्रसारित इत्यपि क्वचित्पाठः तत्र प्रसारितः कृतप्रसार इत्यर्थः । उभयत्रापि तत्करोतीति-णिच् । विचित्रेति । विचित्रेणाश्चर्यजनकेन विभ्रमेण त्वरया भ्रमितया गदया परिभासुरौ अत्यन्तं शोभमानौ भुजदण्डौ दण्डसदृशौ भुजौ ययोस्तथाभूतौ । दृश्यते किल विचित्रपदस्याश्चर्यजनकार्थकत्वं 'विचित्रमिदमुक्तं ते माहात्म्यमि'त्यादौ । क्वचित्पुनश्चिलगदापरिघभासुरभुजदण्डाविति पाठः। तत्र चित्राऽऽश्चर्योत्पादिकेत्यर्थः । क्वचिच्च चिरभ्रमितगदेत्यादिः पाठः । अस्मदादृत एव तु बहुषु पुस्तकेषु संदृष्टः । मण्डलैर्वलयाकारैर्गतिविशेषैः । आरब्धौ आरम्भं कृतवन्तौ । कर्तरि क्तः । विचरितुमित्यत्र विहर्तुमित्यपि समानार्थकः पाठः । **चक्रपाणिना** चक्रं सुदर्शनसंज्ञं पाणौ यस्य तेन श्रीकृष्णेन । **देवसकाशं** देवस्य राज्ञो भवतः समीपम् । आह ब्रवीति । ब्रुवः पञ्चानामिति णलाहादेशश्च । वचनमाह अपर्युषितेति। **अपर्युषितप्रतिज्ञेति** नास्ति पर्युषिता पूरणीयतया दिनान्तरपातिनी प्रतिज्ञा यस्य तथाभूते मारुतौ मारुतपुत्रे भीमे । अत्र मारुतेः प्राक् चकारपाठः प्रामादिकः । विषादः खेदः। पुनः परन्तु । आसादिते प्राप्ते । निष्कण्टकीभूतं निर्गतः कण्टकः क्षुद्रः शत्रुर्यस्मात्तथाविधं संपादितम्। कृभ्वस्तियोग इति च्विः । 'कण्टकः क्षुद्रशत्रौ च' इति विश्वः। परिकलयतु जानातु। अवश्यं भीमो दुःशासनं निहत्य भुवनतलं निष्कण्टकं करिष्यतीत्यर्थः । भूतमित्यत्र कृतमित्यपि पाठः। अभ्युदयोचिताःअभ्युदयस्येष्टप्राप्तिरूपस्योत्कर्षस्योचिता योग्याः समारम्भा विधयः । मङ्गलसमारम्भा इतिपाठे माङ्गलिका विधय इत्यर्थः । अभ्युदयोचिता इत्यनेनैव तु समारम्भाणां माङ्गलिकत्वं द्योत्यत इति द्रष्टव्यम् । प्रवर्त्यन्ताम्। प्रपूर्वाद्वर्ततेर्णिजन्तात्कर्मणि लोट् । कृतं अलम् ।

पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णात्यन्तचिरोज्झिते च कबरीबन्धे करोतु क्षणम् ।
रामे शातकुठारभासुरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ? ॥ १२ ॥

(१२) समारम्भान्विवृणोति । पूर्यन्तामिति। ते तव राज्याभिषेकाय राज्येऽभिषेकार्थम् । तादर्थ्ये चतुर्थी । सलिलेन महानदीसंभवेनोदकेन । तस्यैव तत्रोपयुक्तत्वात्। करणभूतेन रत्नकलशा रत्ननिर्मिता घटाः पूर्यन्ताम् । पूरी आप्यायन इत्यतः कर्मणि लोट् । कृष्णा द्रौपदी अत्यन्तचिरोज्झिते अतिदीर्घकालं त्यक्ते कबरीबन्धे कबर्या बन्धे रचनानिमित्तं (कबते पुष्पादिगर्भिततया नैकवर्णा भवतीति कबरी, केशबन्धविशेषः । कबृ वर्ण इत्यतो औणादिकादुणादयो बहुलमित्यरस्ततो जानपदेत्यादिना केशवेशार्थे ङीष् च । एतच्च माधव मतेनोक्तम् । राधाकान्तादयस्तु कंशिरो वृणोत्याच्छादयतीति कबरीत्याहुः। माधवमतमेव तु ज्यायः। कबृ वर्ण इत्यत्र च वर्णपदं विचित्रवर्णपरम् । अतो हि विनिष्पन्नः कर्बुरशब्दोविचित्रं वर्णमभिधत्त इति ) 'तद्बन्धविशेषाः स्युर्वेणीधम्मिल्लकुन्तलकबर्यः। ' इति हलायुधः । क्षण अवसरं करोतु । कार्यान्तराणि परित्यज्य केशबन्धार्थं कालमवशेषयत्वित्यर्थः। अवश्यं हि समागत्य विजयी भीमोऽस्याः कबरीं भन्त्स्यतीति । क्षणमुत्सवमित्येके। केचित्तु कबरीबन्धे क्षणमुत्सवमूलं व्यापारं संस्कारमित्यर्थ इत्याहुः । 'क्षणः कालविशेषे स्यात्पर्वण्यवसरे मह ' इतिहैमः। अद्यापि विजयस्य संदिग्धत्वात्कथमेतदनुष्ठातव्यमिति चेत्तत्राह । राम इति । शातकुठारभासुरकरे शातेन निशितेन कुठारेण भासुरो भासनशीलः करो यस्य तथाभूते । क्षत्रद्रुमोच्छेदिनि क्षत्राः क्षत्रिया एव द्रुमास्तानुच्छेत्तुं शीलं यस्य तथाभूते रामे परशुरामे क्रोधान्धे क्रोधेनान्धीभूते वृकोदरे भीमे च आजौ युद्धे पतति गच्छति सति संशयो विजयः स्याद्वा न वेत्येवं रूपः कुतः कस्मात्कारणात्स्यादित्यर्थात्संबध्यते । नास्त्येव संशयावकाश इति प्रवर्त्यतामेतदितिभावः । 'दुर्बले निशिते स्यातां शितशातौ' इति त्रिकाण्डशेषः। 'संस्फोटप्रविदारणप्रहरणानीकाजयः संगरः इति' युद्धपर्यायेषु हलायुधः । अत्राप्रस्तुतस्य रामस्य प्रस्तुतस्य च वृकोदरस्यासन्दिग्धविजयत्वरूपैकधर्माभिसंबन्धाद्दीपकमलङ्कारः । तल्लक्षणं च 'अप्रस्तुतप्रस्तुयो ( एकधर्माभिसंबन्धः ) दीपकं तु निगद्यत' इति । एतेन भीमस्य सामर्थ्यातिशयो व्यज्यते । पूर्वार्धगतस्य चार्थस्य निष्पादने द्वितीयार्धोक्तोऽर्थो हेतुरिति कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः । अनयोश्च संकरः । अत्र शातेत्यत्र घोरेत्यपि पाठः स्पष्टार्थश्चायम् । शार्दूलविक्रीडितं वृत्तम् ।

**द्रौपदी**—(सबाष्पम ) जं देव्वो त्तिहुअणणाहो भणादि तं कहं अण्णहा हविस्सदि । ( यद्देवस्त्रिभुवननाथो भणति तत्कथमन्यथा भविष्यति। ) ( **क्यो** )

**पाञ्चालकः**— न केवलमियमाशीः असुरनिषूदनस्यादेशोऽपि । ( **क्यु** )

**युधिष्ठिरः**—को हि नाम भगवता संदिष्टं विकल्पयति? कः कोऽत्र भोः ?। ( **क्यू** )

(प्रविश्य)

**कञ्चुकी**—आज्ञापयतु देवः ।

**युधिष्ठिरः**—देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य मे विजयमङ्गलाय प्रवर्त्यन्तां तदुचिताः समारम्भाः । ( **क्ये** )

---

**(क्यो)** त्रिभुवननाथः त्र्यवयवकं भुवनं त्रिभुवनं स्वर्गादिलोकत्रयं तस्य नाथः स्वामी । त्रिभुवनमिति शाकपार्थिवादित्वान्मध्यमपदलोपः । अन्यथा तु द्विगौ ङीप्दुर्वार इति । भणति ब्रवीति । मूले भविस्सदीत्यनेकत्र संदृश्यमानोपि पाठः प्राकृतशब्दानुशासन-विरुद्ध इत्युपेक्ष्यः। 'होहुवहवाभुवेस्तु ' इत्यादिना त्वत्र होप्रभृतिना भाव्यमिति । आज्ञा-पयतीति पाठस्त्वनुचितः । एवं हि उत्तरत्र पाञ्चालकवचने असुरनिषूदनस्यादेशोऽपी' त्युक्तिर्वैयर्थ्यमापद्येत ।

**(क्यु)** असुरनिषूदनस्य दैत्यानां नाशयितुः श्रीकृष्णस्य । अत्र ' किमन्यथा संभावितेन? मधुसूदनस्यादेश एवाय' मित्यपि पाठः । तत्र कथमन्यथा भविष्यतीति द्रौ-पदीवचनस्य भगवदाशिषामन्यथाभवनस्यासंभवादिति भाव इति मन्यमानस्य भगवदादेशस्या-शीःस्वरूपतालक्षणमन्यथाकल्पनं संभावयतः पाञ्चालकस्येदं वचनमिति मन्तव्यम् ।

**(क्यू)** संदिष्टं आदिष्टमिति यावत् । विकल्पयति विकल्पविषयं करोति स्वेच्छानु-सारेणानुष्ठेयं न वाऽनुष्ठेयमिति मन्यते । न कोऽपीत्यर्थः सर्वोऽप्यवश्यमनुतिष्ठेदिति भावः।

**(क्ये)** बहुमानाद्धेतोः । यदुक्तं देवकीनन्दनेन तद्बहु मन्तव्यमस्माभिरितिहेतोरि-त्यर्थः । वत्सस्य अनुजस्य भीमस्य । ' वत्सपुत्रकतातेति नाम्ना गोत्रेण वा सुतः । शिष्योऽनुजश्च वक्तव्य ' इति दर्पणे । विजयमङ्गलाय विजयरूपमङ्गलार्थं विजयरूपं कल्याणं सूचयितुमित्यर्थः । तदुचिता विजयमङ्गलोचिताः समारम्भा विधयः प्रवर्त्यन्तामारभ्यन्ता-मित्यर्थः । अत्रानेकविधान्यपि पाठान्तराणि प्रायः समानमेवार्थमाचक्षत इति न विवृतानि।

**कञ्चुकी—** यथाऽऽज्ञापयति देवः । ( सोत्साहं परिक्रम्य । ) भो भोः संविधातृणां पुरःसराः ! यथाप्रधानमन्तर्वंशिका दौवारिकाश्च, एष खलु भुजबलोत्तीर्णकौरवपरिभवसागरस्य निर्व्यूढदुर्वहप्रतिज्ञाभारस्य सुयोधनानुजशतोन्मूलनप्रभञ्जनस्य दुःशासनोरःस्थलविदलननरसिंहस्य दुर्योधनोरुस्तम्भभङ्गविनिश्चितविजयस्य बलिनः प्राभञ्जनेर्वृकोदरस्य स्नेहपक्षपातिना मनसा मङ्गलानि कर्तुमाज्ञापयति देवो युधिष्ठिरः ( आकाशे ) किं ब्रूथ ? 'सर्वतोऽधिकतरमपि प्रवृत्तं किं नालोकयसि' इति । साधु पुत्रकाः ! साधु । अनुक्तहितकारिता हि प्रकाशयति मनोगतां स्वामिभक्तिम् । ( क्यै )

---

( क्यै ) संविधातृणां महोत्सवकर्तृणां मध्ये पुरःसराः अग्रेसराः संविधातृप्रवरा इत्यर्थः । पुरोऽग्रतोऽग्रेषु सर्तेरिति टः । संविपूर्वको दधातिरुत्सवानुष्ठाने । सन्निधातॄणामित्यपि पाठः । अन्तर्वंशिकाः अन्तराभ्यन्तरो वंशो गृहं अन्तर्वंशोऽन्तःपुरमित्यर्थः । तत्र नियुक्तोऽन्तर्वंशिकः । संज्ञापूर्वकत्वान्न वृद्धिः । ' अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जन ' इत्यमरः । अन्तर्वेश्मिका इतिपाठेऽप्ययमेवार्थः । दौवारिका द्वारे नियुक्ताः । पारिपार्श्विकाश्चेति क्वचिदधिकः पाठः । तत्र पारिपार्श्विका राज्ञ आसन्नपरिचारकाः । **भुजेति** । भुजयोर्बलेन सामर्थ्येन उत्तीर्णः कौरवपरिभवः कौरवकृतोऽवमान एव सागरो येन तथाभूतस्य । **निर्व्यूढेति** । निर्व्यूढो धृतो दुर्वहो दुःखेन वोढुं धर्तुं शक्यः प्रतिज्ञारूपो भारो येन तथाभूतस्य पूरितदुष्पूरप्रतिज्ञस्येत्यर्थः । **सुयोधनेति** । सुयोधनस्य दुर्योधनस्य अनुजानां कनिष्ठभ्रातॄणां शतस्य उन्मूलने विनाशे प्रभञ्जनस्तस्य । एतेन दुर्योधनानुजेषु तरुत्वारोपो गम्यते । **दुःशासनेति** । दुःशासनस्य नाम दुर्योधनभ्रातुर्वक्षःस्थलस्योरःप्रदेशस्य विदारणे नरसिंहसदृशस्य । एतेन च दुःशासने हिरण्यकशिपुत्वारोपो गम्यः । स च तस्य राक्षसस्वभावतां ध्वनयति । **दुर्योधनेति** । दुर्योधनस्योरू जानूपरिभागावेव स्तम्भौ तयोर्भङ्गेन भञ्जनेन निश्चितो विजयो यस्य तथाभूतस्य । प्राभञ्जनेः प्रभञ्जन( वायु )पुत्रस्य । अत इञ् इति इञ् अपत्यार्थे । ' वातपवमानप्रभञ्जना ' इत्यमरः । वृकोदरस्येत्यस्य मङ्गलानीत्यनेन सम्बन्धः । मङ्गलानि मङ्गलसूचकान्युत्सवकार्याणीत्यर्थः । स्नेहपक्षपातिना स्नेहे प्रेम्णि पक्षपातः अभिनिवेशः सोऽस्त्यस्य तथाभूतेन मनसा । उपलक्षणे तृतीया । आज्ञापयति । आकाशे

**युधिष्ठिरः**—आर्य जयंधर!।

**कञ्चुकी**—आज्ञापयतु देवः।

**युधिष्ठिरः**—गच्छ प्रियख्यापकं पाञ्चालकं पारितोषिकेण परितोषय। ( **क्यो** )

**कञ्चुकी**—यदाज्ञापयति देवः। ( इति पाञ्चालकेन सह निष्क्रान्तः। )

**द्रौपदी**—महाराअ! किंणिमित्तं उण णाहभीमसेणेण सो दुराआरो भणिदो—'पञ्चाणं वि अम्हाणं मज्झे जेण रोअदि तेण सह दे संगामो होदु' त्ति। जइ मद्दीसुदाणं एक्कदरेण सह संगामो तेण पत्थिदो हवे तदो अच्चाहिदं हवे। ( महाराज! किंनिमित्तं पुनर्नाथभीमसेनेन स दुराचारो भणितः—'पञ्चानामप्यस्माकं मध्ये येन रोचते तेन सह ते सङ्ग्रामो भवतु' इति। यदि माद्रीसुतयोरेकतरेण सह सङ्ग्रामस्तेन प्रार्थितो भवेत्ततोऽत्याहितं भवेत्। ) ( **क्यौ** )

**युधिष्ठिरः**—कृष्णे! एवं मन्यते जरासन्धघाती। हतसकलसुहृद्बन्धुवीरानुजराजन्यासु कृपकृतवर्माश्वत्थामशेषास्वेकादशस्वक्षौहिणीष्वबान्धवः शरीरमात्रविभवः कदाचिदुत्सृष्टनिजाभिमानो धार्तराष्ट्रः परित्यजेदायुधं तपोवनं वा व्रजेत्सन्धिं वा पितृमुखेन याचेत। एवं सति सुदूरमतिक्रान्तः

---

लक्ष्यं बध्द्वा ब्रवीतीति शेषः। किं ब्रूथेति पूर्वोक्तान् जनान्प्रति प्रश्नः। तदुत्तरमनुवदति सर्वत इति। सर्वतः सर्वत्र सप्तम्यर्थे तसिः। अधिकतरमतिशयेनाधिकं प्रवृत्तमपि मङ्गलं नालोकयसि किम्। इतीत्यस्य ब्रूथेत्यनेन सम्बन्धः। पुत्रकाः पुत्रसदृशाः। अनुक्तहितकारिता अनुक्ता अनादिष्टाश्च ते हितकारिणस्तेषां भावः। आदेशमन्तराऽपि हितकारित्वमित्यर्थः। स्वामिभक्तिं राजभक्तिं प्रकाशयति स्पष्टीकरोति।

**क्यो** ) प्रियख्यापकं प्रियनिवेदकम्। पारितोषिकेण परितोषभवेन दानेन वस्त्रालङ्कारेण।

माद्रीसुतयोः नकुलसहदेवयोः। निर्धारणे षष्ठी। अत्याहितं महती भीतिः।

प्रतिज्ञाभारो भवेत्सकलरिपुजयश्चेति । समरं प्रतिपत्तुं पञ्चानामपि पाण्डवानामेकस्यापि नैव क्षमः सुयोधनः । शङ्के चाहं गदायुद्धं वृकोदरस्यैवानेन । अयि सुक्षत्रिये! पश्य । ( क्यं )

क्रोधोद्धूर्णगदस्य नास्ति सदृशः सत्यं रणे मारुतेः
कौरव्ये कृतहस्तता पुनरियं देवे यथा सीरिणि ।
स्वस्त्यस्तूद्धतधार्तराष्ट्रनलिनीनागाय वत्साय मे
शङ्के तस्य सुयोधनेन समरं नैवेतरेषामहम् ॥ १३ ॥

---

( क्यं ) जरासंधघाती जरासंधस्य हन्ता भीमः एवं वक्ष्यमाणप्रकारं मन्यते । मननस्वरूपमाह हतेति । हताः पाण्डवैर्निहताः सकलाः सुहृदो दुर्योधनस्य मित्राणि बन्धवो बान्धवा वीरा अनुजा राजन्याः क्षत्रियाश्च यासु तथाभूतासु एकादशस्वक्षौहिणीषु प्रथमाङ्कोक्तेषु सेनासमुदायेषु शरीरमात्रं केवलं शरीरमेव विभवो वैभवं यस्य तथाभूतः । विनष्टसकलवैभव इत्यर्थः । एष चाभिमानोत्सर्गे हेतुः । उत्सृष्टाभिमानस्त्यक्ताहङ्कारः । पितृमुखेन धृष्टराष्ट्रमुखेन । तस्य हि प्रार्थना पाण्डवैर्नावमन्येतेति । प्रतिज्ञाभारो दुर्योधनोरुभङ्गरूपप्रतिज्ञाया भारः सकलानां रिपूणां जयश्च सुदूरमतिक्रान्तोऽतिगतो भवत् । सति सन्धौ कृपादीनामनिर्जयाद्दुर्योधनस्य चावशिष्टत्वादिति भावः । सकलरिपुजयस्येतिपाठे षष्ठयाः प्रतिज्ञया संबन्धः । तत्सम्बन्धिन्या प्रतिज्ञयेत्यर्थः । एतदपेक्षया चास्मदादृत एव पाठः श्रेयान्प्राचीनपुस्तकसंवादी च । प्रतिपत्तुं स्वीकर्तुं क्षमो योग्यः । 'क्षमः शक्ते हिते युक्ते ( योग्ये ) क्षमावति ।' इति हैमः । शङ्के सम्भावयामीत्यर्थः । 'शङ्के चाहमनेन गदायुद्धं वृकोदस्य नैवेतरेषामि' त्यान्ध्रपुस्तकपाठः । अस्मदादृताच्च पाठाल्लभ्यत एवायमर्थ एव कारेणेतरव्यावृत्तेरिति नायमादृतोऽस्माभिः ।

( १३ ) कुतः पुनर्वृकोदरेणैव साकं समर इत्याह क्रोधोद्धूर्णेति । क्रोधेन कोपेन उद्धूर्णा उद्यता गदा येन तथाभूतस्य । गूरी उद्यमन इत्यतो निष्ठा । श्वीदितो निष्ठायामितीण्निषेधः । उद्घूर्णेति पाठस्तु क्लिष्टत्वान्न साधुः । तत्र चोद्धूर्णं उद्भ्रमणं क्रोधेनोद्धूर्णा यस्यास्तथाभूता गदा यस्य तथाभूतस्येत्यर्थः । मारुतेर्भीमस्य रणे संग्रामे सदृशस्तुल्यः सत्यं निःसंशयं नास्ति । पुनः किं च कौरवे कुरुकुलोद्भवे दुर्योधने तथा देवे सीरिणि सीरो हलाकार

( नेपथ्ये । ) ( क्वः )

तृषितोऽस्मि भोस्तृषितोऽस्मि । संभावयतु कश्चित्सलिलच्छायासंप्रदानेन माम् । ( क्र )

**युधिष्ठिरः**—( आकर्ण्य । ) कः कोऽत्र भोः ? ।

( प्रविश्य )

**कञ्चुकी**—आज्ञापयतु देवः ।

**युधिष्ठिरः**—ज्ञायतां किमेतत् ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रम्य पुनः प्रविश्य । ) देव !

---

आयुधविशेः प्रहरणत्वेनास्त्यस्य तस्मिन्बलरामे तथेति शेषः । इयं गदायुद्धविषयिणी कृतहस्तता कृतोऽभ्यस्तो हस्त आयुधक्षेपणादिकौशलरूपं हस्तकर्म येन स कृतहस्तस्तस्य भावः कृतहस्तताऽस्तीति शेषः । ततश्च गदायुद्धे दुर्योधनस्य नान्यः प्रतिद्वन्द्वी भवितुमर्हतीति भावः। देवे यथा सीरिणीति दुर्योधने सामर्थ्याधिक्यमभिव्यञ्जितं भवति । ततश्च विजयस्य संदिग्धत्वमुत्प्रेक्ष्याशास्ते । स्वस्तीति । उद्धतेति । उद्धता दृप्ता धार्तराष्ट्रा धृतराष्ट्रपुत्रा एव नलिन्यः कमलवल्ल्यस्तासां नागः करी। यथा करी नलिनीरुन्मूलयति तथोन्मूलयितेत्यर्थः। तस्मै मे मम वत्साय अनुजाय भीमाय । एतेन प्रणयातिशयो द्योत्यते । नमःस्वस्तीत्यादिना चतुर्थी । स्वस्ति अस्तु । आशिषि लोट् । कुतस्तस्मा एव स्वस्त्याशास्यत इत्याह शङ्क इति । अहं सुयोधनेन दुर्योधनेन सह तस्य समरं युद्धं शङ्के संभावयामि । इतरेषां भीमभिन्नानां नैव शङ्के । तत एव च नान्यविषयिणीदानीं ममाशीरिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(क्वः) नेपथ्य इति । मुनिवेषधारी चार्वाको ब्रवीतीति शेषः । इत आरभ्य नितान्तमेव भिद्यत आध्रपुस्तकवर्ती पाठः। स च यथा—ततः प्रविशति चार्वाको नाम मुनिवेषधारी। राक्षसः । चा०— गाढं तृषितोऽस्मि कोऽत्र भोः संभावयतु मां सलिलच्छायाप्रदानेन । इति राज्ञः समीपमुपसर्पति । सर्वे सहसोत्तिष्ठन्ति । **युधिष्ठिरः**— मुने अभिवादये । **चा**०— अकालोऽयमतिथिजनसमुदाचारस्य। जलप्रदानेन संभावयतु भवान्माम् । **युधि**०- मुने उपविश्यतामासने । **चा**०— ननु भवताऽपि क्रियतामासनपरिग्रहः । इति । न खल्वत्र प्रविशतः पात्रस्य कोऽपि वृत्तान्त उपवर्णितो येन किमेतत्पात्रमिति द्रष्टणां जिज्ञासा पूर्येत।

क्षुद्वानतिथिरुपास्थितः। (क्रा)

**युधिष्ठिरः**—शीघ्रं प्रवेशय।

**कञ्चुकी**—यदाज्ञापयति देवः। (इति निष्क्रान्तः)

(ततः प्रविशति मुनिवेषधारी चार्वाको नाम राक्षसः) (क्रि)

**राक्षसः**—(आत्मगतम्।) एषोऽस्मि चार्वाको नाम राक्षसः सुयोधनस्य मित्रं पाण्डवान्वञ्चयितुं भ्रमामि। (प्रकाशम्।) तृषितोऽस्मि। सम्भावयतु मां कश्चिज्जलच्छायाप्रदानेन। (इति राज्ञः समीपमुपसर्पति।) (क्री)

---

अवश्यं च निर्दिश्यते वृत्तान्त एवंविधो नाटकेषु कविभिः। अत एव चोपेक्ष्य पाठमिमं समादृतो बहुपुस्तकसंवादी पाठोऽस्माभिः। न चाप्यस्य कवेरिव भाषासरणिरित्यपि द्रष्टव्यम्।

(क) तृषित इति। संभ्रमाद्द्विरुक्तिः। प्रायेण चैवंविधेषु स्थलेषु मध्यतो निपातः प्रयुज्यते कविभिः। तत एव च भोस्तृषितोऽस्मीति नोपात्तः पाठोऽस्माभिः।

(क्रा) क्षुद्वानिति क्षुधा युक्तः। झय इति मतोर्मस्य वः। क्षुन्मानिति तु यवादौ क्षुधं निपात्य समाधेयम्। अगतिकगतिः पुनराकृतिगणः। अतिथिः नास्ति तिथिरागमने नियतो दिवसविशेषो यस्य सः। तदाह यमः ‘तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना। सोऽतिथिः सर्वभूतानां शेषानभ्यागतान्विदुः॥’ इति। पराशरश्च ‘अनित्यमागतो यस्मात्तस्मादतिथिरुच्यते’ इति। मन्वादियुगादिषु तिथिविशेषेषु द्रव्यलाभमुद्दिश्य येऽभ्यागच्छन्ति तेऽभ्यागताः। तादृशं तिथिविशेषमनपेक्ष्य यदाकदाचित्क्षुत्तृष्णादिपीडया वा समागतोऽतिथिः।’ इति माधवः। अतति सातत्येन गच्छतीत्यतिथिरित्यपरे। अततेरौणादिक इथिन्।

(क्रि) मुनिवेषधारी मुनीनां मननशीलानां परिव्राजकानामित्यर्थः वेषं धरतीति तथाभूतः। श्रीमति हि महाभारते परिव्राजकरूपत्वमेवास्योपवर्णितामिति। यथा शान्तिपर्वणि ३८ शेऽध्याये। ब्राह्मणा ऊचुः ‘एष दुर्योधनसखश्चार्वाको नाम राक्षसः। परिव्राजकरूपेण हितं तस्य चिकीर्षति॥’ इति। महाभारते पुनः सोऽयं राजधानीं प्रविष्टे विजयिनि श्रीमति महाराजयुधिष्ठिरे समुपस्थित इत्युक्तम्। अत्र पुनः कविना चमत्कृतिविशेषमुद्भावयितुमित्थं प्रवेशितः। चार्वाकः चारुर्लोकचित्ताकर्षको वाको वचनं यस्य सः। पृषोदरादित्वात्साधुः।

(क्री) आत्मगतमित्यादिप्रकाशमित्यन्तं क्वचिन्नास्ति।

( सर्व उत्तिष्ठन्ति । )

**युधिष्ठिरः**—मुने! अभिवादये । ( क्रु )

**राक्षसः**— अकालोऽयं समुदाचारस्य । जलप्रदानेन सम्भावयतु माम्। ( क्रू )

**युधिष्ठिरः**—मुने! इदमासनम् । उपविश्यताम् ।

**राक्षसः**—( उपविश्य । ) ननु भवताऽपि क्रियतामासनपरिग्रहः । (क्रे)

**युधिष्ठिरः**—( उपविश्य । ) कोऽत्र भोः! सलिलमुपनय ।

( प्रविश्य गृहीतभृङ्गारः ) (क्रै)

**कञ्चुकी**—( उपसृत्य । ) महाराज! शिशिरसुरभिसलिलसम्पूर्णोऽयं भृङ्गारः पानभाजनं चेदम् । ( क्रो )

**युधिष्ठिरः**—मुने! निर्वर्त्यतामुदन्याप्रतीकारः । ( क्रौ )

**राक्षसः**—(पादौ प्रक्षाल्योपस्पृशन्विचिन्त्य) भोः क्षत्रियस्त्वमिति मन्ये । (क्रं)

---

( क्रु ) अभिवादये प्रणमामि ।

( क्रू )अयं समुदाचारस्यादरादिसूचकस्य प्रणामादेराचारस्य अकालः काले नास्तीत्यर्थः । संभावयतु भवानिति शेषः । अतः परं मुने इदमासनमिति युधिष्ठिरस्य ननु भवतापी-त्यादि चार्वाकस्य च वचनं समुदाचाररूपत्वादेव नोचितमिति प्रतिभाति । आदित एव तु सलिलानयनमादिश्य परस्तादेतदुपनिबद्धं विशेषतः शोभामावक्ष्यतीति नो बुद्धिः ।

( क्रे ) आसनपरिग्रहः आसनस्वीकारः ।

(क्रै) भृङ्गारः कनकालुकापरपर्यायो झारीति महाराष्ट्रभाषायां ख्यातः पात्रविशेषः । भृङ्गारः कनकालुकेत्यमरः ।

( क्रो ) शिशिरेति शिशिरेण शीतलेन जलेन संपूर्णः । पानभाजनं सलिलपानोपयुक्तं पात्रम् । अत्र क्वचित्पानपदं नास्ति । तन्न युक्तम् ।

( क्रौ ) उदन्येति । उदन्या आत्मन उदकस्येच्छा पिपासा तस्याः प्रतीकारो निरास इत्यर्थः । अशनायोदन्येति क्यजन्ततया निपातनादप्रत्यय इत्यकारेऽजायत इति टापि च सिद्ध उदन्याशब्दः ।

**युधिष्ठिरः**—सम्यग्वेत्ति भवान् । (कः)

**राक्षसः**— प्रतिदिनसुलभस्वजनविनाशेषु सङ्ग्रामेषु युष्मत्तो नादेयं सलिलादिकम् । भवतु । छाययैवानया सरस्वतीशिशिरतरङ्गस्पृशा मरुता चानेन विगतक्लमो भविष्यामि । (क्र)

**द्रौपदी**—बुद्धिमदिए! वीएहि महेसिं इमिणा तालवण्डेण । (बुद्धिमतिके ! वीजय महर्षिमनेन तालवृन्तेन ।) (क्रा)

(चेटी तथा करोति ।)

**राक्षसः**—भवति ! अनुचितोऽयमस्मासु समुदाचारः ।

**युधिष्ठिरः**—मुने ! कथय कथमेवं भवान्परिश्रान्तः? ।

**राक्षसः**—मुनिजनसुलभेन कौतूहलेन तत्रभवतां महाक्षत्रियाणां द्वन्द्वयुद्धमवलोकयितुं पर्यटामि समन्तपञ्चकम् । अद्य तु बलवत्तया शरदातपस्यापर्याप्तमेवावलोक्य गदायुद्धमर्जुनसुयोधनयोरागतोऽस्मि । (क्रि)

---

(कं) उपस्पृशन् आचामन् । 'उपस्पर्शस्त्वाचमनम्' इत्यमरः । विचिन्त्येति क्वचिन्नास्ति ।

(कः) वेत्तीत्यत्र वेदीतिक्वचित्पाठः । तत्रच सम्यग्वेदितुं शीलं यस्य तथाभूत इत्यर्थः । एतदपेक्षया चास्मदादृत एव पाठः साधुरनेकपुस्तकसंवादी च । क्वचित्पुनः क्षत्रिय एवासीत्यधिकमपि संदृश्यते ।

(क्र) प्रतिदिनेति । प्रतिदिनं दिने दिने सुलभः स्वजनानां बान्धवानां नाशो यत्र तथाभूतेषु सत्सु । क्षत्रियाणां किल स्वजनाः प्रत्यहं संग्रामे म्रियन्ते । क्षत्रियश्च भवान् । ततोऽशुचेस्त्वत्तो नोचितं सलिलादानमितिभावः । युष्मत्तो भवद्भ्यः क्षत्रियेभ्यः । सरस्वतीशिशिरतरङ्गस्पृशा सरस्वत्या नाम नद्याः शिशिरांस्तरङ्गान्स्पृशति तथाभूतस्तेन मरुता वातेन ।

(क्रा) मूले तालवण्डेणेत्यत्र तालउंटेणेति तालविण्टेणेति च पाठः । अस्माभिः पुनः 'तालवृन्तेऽन्त इत्यस्य ण्ड इत्यादेश उच्यते । तेनेह तालवृन्तन्तु तालवण्डं प्रचक्षते ॥' इतिवररुचिवचनादयमादृतः पाठः । तालवृन्तं च व्यजनं तद्धि तालवृक्षपत्रवृन्तैर्विनिर्मितं भवतीति ।

(क्रि) मुनिजनसुलभेन मुनिजनेषु सुखेन लब्धुं शक्येन कौतूहलेन कौतुकेन उपल-

[ सर्वे विषादं नाटयन्ति । ] (क्ली)

**कञ्चुकी**—मुने! न खल्वेवम् । भीमसुयोधनयोरिति कथय ।

**राक्षसः**—आः, अविदितवृत्तान्त एव कथं मामाक्षिपसि । (क्लु)

**युधिष्ठिरः**—महर्षे! कथय कथय ।

**राक्षसः**—क्षणमात्रं विश्रम्य सर्वं कथयामि भवतो, न पुनरस्य वृद्धस्य ।

**युधिष्ठिरः**—कथय किमर्जुनसुयोधनयोरिति । (क्ले)

**राक्षसः**—ननु पूर्वमेव कथितं मया प्रवृत्तं गदायुद्धमर्जुनसुयोधनयोरिति ।

**युधिष्ठिरः**—न भीमसुयोधनयोरिति ? ।

**राक्षसः**—वृत्तं तत् । (क्लै)

( युधिष्ठिरो द्रौपदी च मोहमुपगतौ । ) (क्लो)

**कञ्चुकी**—(सलिलेनासिच्य । ) समाश्वसितु देवो देवी च ।

**चेटी**—समस्ससदु समस्ससदु देवी । (समाश्वसितु समाश्वसितु देवी)

---

क्षितः । उपलक्षणे तृतीया । तत्रभवतां मान्यानाम् । द्वन्द्वयुद्धं द्वन्द्वस्य सहायान्तरनिरपेक्षयोर्द्वयोर्वीरयोर्युद्धम् । शरदातपस्य शरदृतुसंबन्धिन आतपस्य सूर्यप्रकाशस्य । शरच्चाश्विनकार्तिकौ । अपर्याप्तमसंपूर्णं आलोक्य । अर्जुनसुयोधनयोरिति धर्मराजं प्रतारयितुमुक्तिः ।

(क्ली) विषादमिति । गदायुद्धेऽप्रवीणस्यार्जुनस्य तत्र प्रवीणतमेन सुयोधनेन युद्धमित्याकर्णयतां विषादः ।

(क्लु) आ इति क्रोधे स्वविरुद्धवादित्वात्कोपः । आक्षिपसि अनृतवादित्वरूपं दोषमारोप्य निन्दसि । अत्र अविदितवृत्तान्तमिव मामित्यपि पाठः स च युक्ततरः ।

(क्ले) किमिति । अर्जुनसुयोधनयोः किं संवृत्तमित्यर्थः । अत्रैतावदेव कथयेत्यादितोऽधिकं क्वापि ।

(क्लै) तत् भीमसुयोधनयोर्गदायुद्धं वृत्तं प्रागेव संजातम् ।

(क्लो) वृत्तमित्याकर्णयतोर्भीमस्यानिष्टसंभावनया मोहः ।

( उभौ संज्ञां लभेते । )

**युधिष्ठिरः**—किं कथयसि मुने ! वृत्तं भीमदुर्योधनयोर्गदायुद्धमिति ? ।

**द्रौपदी**—भअवं! कहेहि कहेहि किं वुत्तं ? त्ति । ( भगवन्! कथय कथय किं वृत्तमिति? । ) (क्लौ)

**राक्षसः**—कञ्चुकिन् कौ पुनरेतौ ? ।

**कञ्चुकी**—एष देवो युधिष्ठिरः । इयमपि पाञ्चाली ।

**राक्षसः**—आः ! दारुणमुपक्रान्तं मया नृशंसेन । ( क्लं )

**द्रौपदी**—हा णाह भीमसेण! (हा नाथ भीमसेन!) ( इति मोहमुपगता )

**कञ्चुकी**—किं नाम कथितम् ! (क्लः)

**चेटी**—समस्ससदु समस्ससदु देवी । (समाश्वसितु समाश्वसितु देवी ।)

**युधिष्ठिरः**—( सास्रम् । ) ब्रह्मन् !

पदे संदिग्ध एवास्मिन्दुःखमास्ते युधिष्ठिरः ।
वत्सस्य निश्चिते तत्त्वे प्राणत्यागादयं सुखी ॥ १४ ॥

---

(क्लौ) कथयकथयेति संभ्रमे द्विर्वचनम् । किमिति प्रश्ने । वृत्तं किमित्यर्थः ।

(क्लं) आ इति खेदे । दारुणं भयंकरं भीमनिधनवृत्तस्य युधिष्ठिरप्राणवियोजकत्वात् । नृशंसेन घातुकेनेत्यात्मनो निन्दा सत्यमेवात्मनाभिधीयत इति श्रद्धासमुद्भावनार्था ।

(क्लः) किं नामेति । अयुक्तं कथितमित्यर्थः ।

(१४) पद इति । अस्मिन् भवदुच्चारिते वृत्तमित्येतद्रूपे पदे विभक्त्यन्ते शब्दे सन्दिग्धे सति संशयिते सति संशयविषयीभूते सतीत्यर्थः । युधिष्ठिरः दुःखं यथा तथा आस्ते । वत्सस्य भीमस्य संबन्धिनि तत्त्वे परमार्थे पारमार्थिके वृत्तान्त इत्यर्थः । निश्चिते भवदुक्त्याऽवधारिते सति अयं युधिष्ठिरः प्राणत्यागात् प्राणानां त्यागं विधाय । ल्यब्लोपे पञ्चमी सुखी । भविष्यतीति शेषः । अलं संदिग्धवचनेन, सुस्पष्टं तावदाख्यायतां परमार्थ इति भावः । अत्राहमितिवक्तव्ये युधिष्ठिर इति वचनं सकलापत्कारणतयाऽऽत्मनो निन्द्यत्वमिति युधिष्ठिराभिप्रायमभिव्यञ्जयति । अतोऽयमित्यत्राहमिति पाठो न युक्तः । युधिष्ठिर इति त्वुदासीनवदेवोक्तं तादृशमेव च सर्वनाम तत्परामर्शे प्रयोक्तुं युक्तमिति ।

**राक्षसः**— (सानन्दमात्मगतम्) अत्रैव मे यत्नः। [प्रकाशम्] यदि त्ववश्यं कथनीयं तदा संक्षेपतः कथयामि। न युक्तं बन्धुव्यसनं विस्तरेणावेदयितुम्। (क)

**युधिष्ठिरः**—(अश्रूणि मुञ्चन्)

सर्वथा कथय ब्रह्मन्संक्षेपाद्विस्तरेण वा।
वत्सस्य किमपि श्रोतुमेष दत्तः क्षणो मया॥ १५॥

**राक्षसः**—श्रूयताम्।

तस्मिन्कौरवभीमयोर्गुरुगदाघोरध्वनौ संयुगे

**द्रौपदी**—(सहसोत्थाय।) तदो तदो। (ततस्ततः?) (का)

**राक्षसः**—(स्वगतम्।) कथं पुनरनयोर्लब्धसंज्ञतामपनयामि। (कि) (प्रकाशम्।)

---

(क) अत्रैव भवत्प्राणत्यागविषय एव। अत्रायमेवेत्यपि पाठः। तदपेक्षया चास्मदुपात्त एव पाठः साधुः। क्लिष्टत्वाभावात्। बन्धुव्यसनं बन्धोर्भीमस्य व्यसनं दुःखम्। आवेदयितुं ज्ञापयितुं कथयितुमित्यर्थः।

(१५) सर्वथेति। हे ब्रह्मन् ब्राह्मण संक्षेपात् संक्षेपेण विस्तरेण वा सर्वथा सर्वप्रकारेण। यमिच्छसि तेन प्रकारेणेत्यर्थः। कथय। वत्सस्य भीमस्य किमपि शुभमशुभमपि वा श्रोतुं मया एष क्षणः समयो दत्तः। परित्यक्तकार्यान्तरः समयेऽत्र यद्भवान्वक्ष्यति तदाकर्णयामीत्यर्थः। पथ्यावक्त्रं वृत्तम्।

(१६ अ) तस्मिन्निति। गुर्व्योर्महत्योर्गदयोर्घोरो भयङ्करो ध्वनिर्यस्मिंस्तथाभूते कौरवभीमयोर्दुर्योधनभीमयोः। अभ्यर्हितत्वात्कौरवपदस्य पूर्वं विनिवेशः। तस्मिन्पूर्वोक्ते संयुगे युद्धे। 'घोरं भीमं भयानक' मिति 'कलिसंस्फोटसंयुगा' इति चामरः। आदिमोऽयं पादश्चार्वाकेण विवक्षितस्य पद्यस्य। शार्दूलविक्रीडितं वृत्तम्।

(का) सहसेति। दुर्योधनेन समं भीमस्य संग्रामे भीम एव विजयीभविष्यतीति संभ्रान्त्यास्तत एव च जीवति भीमसेन इति मन्यमानायाः परित्यज्य मूर्छां सहसोत्थानं

(कि) संज्ञा चेतना याभ्यां तयोर्भावो लब्धसंज्ञता ताम्। अपनयामि दूरीकरोमि।

सीरी सत्वरमागतश्चिरमभूत्तस्याग्रतः सङ्गरः ।
आलम्ब्य प्रियशिष्यतां तु हलिना संज्ञा रहस्याहिता
यामासाद्य कुरूत्तमः प्रतिकृतिं दुःशासनारौ गतः ॥ १६ ॥

**युधिष्ठिरः**—हा वत्स! वृकोदर! । (इति मोहमुपगतः ।)

**द्रौपदी**—हा णाह भीमसेण! हा मह परिहवपडिआरपरिच्चत्तजीविअ! हा जडासुरबअहिडिम्बकिम्मीरकीअअजरासन्धणिसूदण! हा सोअन्धिआहरण चाडुआर! देहि मे पडिवअणम्। (हा नाथ भीमसेन! हा मम परिभवप्रतीकारपरित्यक्तजीवित! हा जटासुरबकहिडिम्बकिर्मीरकीचकजरासंधनिषूदन! हा सौगन्धिकाहरण चाटुकार! देहि मे प्रतिवचनम्।)

---

(१६ आ) सीरीति । सीरो हलोऽस्यास्त्यायुधत्वेन सीरी हलायुधो बलरामः सत्वरं यथा तथा आगतः प्राप्तः । शिष्यस्य दुर्योधनस्य पराजयमाशङ्कमानस्यागमने सत्वरता । तस्य अग्रतः अग्रे चिरं बहुकालं यावत् संगरो युद्धं अभूत् । भीमदुर्योधनयोरित्यर्थात् । (अतः परं 'युधिष्ठिरः (सविषादं) मुने कथय' इति क्वचिदधिकः पाठः । तत्र च बलभद्रसहायस्य दुर्योधनस्य निर्जेतुमशक्यत्वं तत एव च भीमस्यानिष्टमाशङ्कमानस्य विषादः ।) तु भीमदुर्योधनयोर्युद्धे भीमस्य पराजयशङ्का नास्ति परन्त्वित्यर्थः । हलिना बलरामेण कर्त्रा । 'तालाङ्को मुसली हली' त्यमरः । प्रियशिष्यतां प्रियः शिष्यो यस्य तस्य भावस्तत्तां शिष्यस्नेहामित्यर्थः । आलम्ब्य आश्रित्य रहसि परैरविज्ञेये प्रदेशे । अवस्थायेति शेषः । संज्ञा एवं त्वया प्रहिवतामिति हस्तादिना सूचनम् । आहिता कृता । संदृश्यते किलाङ्पूर्वस्यापि दधातेः करणार्थकता 'आधत्ते हि तयोः प्रयोग उभयोरामोदभूमोदयम् ।' इत्यादौ । शिष्यस्नेहाद्रामेण भीममरणोपयोगिप्रहारप्रकारं ज्ञापितो दुर्योधन इति भावः । यां संज्ञामासाद्य प्राप्य ज्ञात्वेति यावत् । कुरूत्तमः कुरुषु कौरवेषूत्तमः श्रेष्ठो दुर्योधनः दुःशासनारौ दुःशासनहन्तरि भीमे प्रतिकृतिं प्रतीकारं वैरनिर्यातनं गतः प्राप्तवान् । यथा भीमेन हतो दुःशासनस्तथा दुर्योधनेनापि निहतो भीम इति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(इति मोहमुपगता।) (की)

**कञ्चुकी**—(सास्रम्।) हा कुमार भीमसेन! हा धार्तराष्ट्रकुलकमलिनी प्रालेयवर्ष! (ससंभ्रमम्।) समाश्वसितु महाराजः। भद्रे! समाश्वासय स्वामिनीम्। महर्षे! त्वमपि तावदाश्वासय राजानम्। (कु)

**राक्षसः**—(स्वगतम्।) आश्वासयामि प्राणान्परित्याजयितुम्। (प्रकाशम्)

---

(की) परिभवेति परिभवस्य कौरवकृतस्य केशाम्बराकर्षणादिरूपस्यावमानस्य प्रतीकाराय निर्यातनाय परित्यक्तं जीवितं येन तथाभूत। जटेति। जटासुरो बको हिडिम्बः किर्मीरश्चेत्येतेऽसुराः कीचको जरासन्धश्चेत्येतौ तु मानुषौ। तत्र जटासुरो नाम तीर्थान्यटत्सु पाण्डवेषु भार्गवशिष्यमात्मानमाख्याय ब्राह्मणछद्मना समागतः सह द्रौपद्या निरायुधं युधिष्ठिरं हृतवान् भीमेन हतो राक्षसः। बकश्च जतुगृहाद्विनिर्गत्यैकचक्रां नाम नगरीमधिवसत्सु पाण्डवेषु कुत्रापि द्विजन्मन्यनुकम्पमानेन बलिभावमुपगतवता भीमेन बलिभक्षणार्थमुपागतो निहतो राक्षसः। हिडिम्बस्तु घटोत्कचमातुर्भीमेन परिगृहीताया हिडिम्बाया भ्राता। किर्मीरो बकस्य भ्राता। अयं च द्यूतविनिर्जितेषु वनं गच्छत्सु पाण्डुपुत्रेषूपागतो यमपुरं नीतो भीमेन। एनमेव च किन्दीरमाचष्टे क्षेमेन्द्रः। कीचकः सुदेष्णाया नाम विराटभार्याया भ्राता द्रौपदीमभिलषन्मारितो भीमेन। जरासन्धस्तु प्रथमाङ्कव्याख्यया परिचतव्यः। बकादिजरासन्धान्तान्निषूदयति निर्मूलयति तथाभूत। सौगन्धिकाहरण सौगन्धिकस्य नाम कुबेरोपवनवर्तिनः कमलविशेषस्य आहरण आनेतः। वने वसत्सु पाण्डवेषु कदाचित्पवनवेगवशात्समीपमुपागतं सौगन्धिकं समवलोकमाना पाञ्चाली कमलानि तथाविधानीहामास। भीमश्च प्रस्थाय तान्युपाजहारेति सौगन्धिकाहरणपर्वगता कथाऽत्रानुसन्धेया। चाटुकार हृदयावर्जनार्थं प्रेम्णा विकत्थनं चाटु तत्करोति तथा भूत। 'अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनम्' इत्यमरः।

(कु) धार्तराष्ट्रेति। धृतराष्ट्रस्येदं धार्तराष्ट्रं यत्कुलं वंशस्तदेव कमलिनी कमलवल्ली तस्याः प्रालेयवर्ष हिमवृष्टिभूत। हिमवृष्टया किल कमलानि विनश्यन्तीति प्रसिद्धिः। धार्तराष्ट्रा धृतराष्ट्रस्यापत्यानि तेषां कुलं समूह इति वा विग्रहः। भद्रे इति चेटीं प्रति महर्षे इति च चार्वाकं प्रति।

भो भीमाग्रज! क्षणमेकमाधीयतां समाश्वासः । कथाशेषोऽप्यस्ति । (कू)

**युधिष्ठिरः**—(समाश्वस्य।) महर्षे! किमस्ति कथाशेषः ?

**द्रौपदी**—(प्रतिबुद्धा।) भअवं! कहेहि कीदिसो कहासेसो त्ति । (भगवन्! कथय कीदृशः कथाशेष इति ।)

**कञ्चुकी**—कथय कथय ।

**राक्षसः**—ततश्च गते तस्मिन्सुक्षत्रिये वीरसुलभां गतिं समग्रसंगलितं भ्रातृवधशोकजं बाष्पं प्रमृज्य प्रत्यग्रक्षतजच्छटाचर्चितां गदां भ्रातृहस्तादाकृष्य, निवार्यमाणोऽपि संधित्सुना वासुदेवेन, आगच्छागच्छेति सोपहासं अमितगदाझङ्कारमूर्छितगम्भीरवचनध्वनिनाहूयमानः कौरवराजेन तृतीयोऽनुजस्ते किरीटी योद्धुमारब्धः । अकृतिनस्तस्य गदाघातान्निधनमुत्प्रेक्षमाणेन कामपालेनार्जुनपक्षपाती देवकीसूनुरतिप्रयत्नात्स्वरथमारोप्य द्वारकां नीतः । (के)

---

(कू) प्राणान् परित्याजयितुं युधिष्ठिरस्य प्राणैर्वियोजनमेव ममोद्देश्यमिति समाश्वास्यैनमपरमप्यनिष्टमाख्याय प्राणैर्वियोजयिष्यामीति भावः । आधीयतामालम्ब्यतामिति यावत् । कुत इत्याह कथाशेष इति । कथायाः संग्रामवृत्तान्तस्य शेषोऽवशिष्टोंऽशः । नाद्यापि परिसमाप्तं मे वचनं तदवशिष्टमपि श्रूयतामिति भावः । आधीयतामित्यत्र चीयतामिति क्वचित्पाठः । तत्र चीयतां वर्धतामित्यर्थः । उपपूर्वकस्य चिञो वृध्यर्थकत्वदर्शनादनुपसर्गत्वेऽपि च सोपसर्गवदर्थप्रतीतेः ।

(के) तस्मिन् भीमे वीरसुलभां वीरैः सुखेन लब्धुं शक्यां गतिं दशां गते सति समरे मृते सतीत्यर्थः । 'गतिः स्त्री मार्गदशयो' रिति मेदिनी । समग्रेति । समग्रं यथा तथा संगलितम् । प्रमृज्य प्रोञ्छ्य । अत्र समग्रसंगलितभ्रात्रित्यादि समस्तमेव पठ्यते कैश्चित् । तन्न युक्तं दुर्घटो ह्येवं समासान्तःपातिनः संगलितपदस्य बाष्पेणान्वय इति । प्रमृज्येत्यत्र चोत्सृज्येति क्वचित्पठ्यते। तदपि न युक्तं संगलितपदेनैवोत्सर्गस्य गतार्थत्वादिति द्रष्टव्यम् प्रत्यग्रेति । प्रत्यग्रस्य अचिरहतत्वाद्भीमस्य नवीनस्य क्षतजस्य रक्तस्य (तद्धि क्षताज्जायत इति)

**युधिष्ठिरः**—साधु भो अर्जुन! साधु, तदैव प्रतिपन्ना वृकोदरानुगमन-पदवी गाण्डीवं परित्यजता त्वया। अहं पुनः केनोपायेन प्राणापगमन-महोत्सवमुत्साहिष्ये। (कै)

**द्रौपदी**—हा णाह भीमसेण! ण जुत्तं दाणिं दे कणीअसं भादरं असिक्खिदं गदाए दारुणस्स सत्तुणो अहिमुहं गच्छन्तं उवेक्खिदुम्। (हा नाथ भीमसेन! न युक्तमिदानीं ते कनीयांसं भ्रातरमशिक्षितं गदायां

---

छटया समूहेन चर्चितां सर्वतो लिप्ताम्। आकृष्येति। आकृष्य आकर्षणपूर्वकं गृहीत्वा किरीटी योद्धुमारब्ध इत्यनेन सम्बन्धः। सन्धित्सुना संधातुमिच्छुना कौरव-पाण्डवयोः सन्धिं कर्तुकामेनेत्यर्थः। संपूर्वाद्धाञः सन्। सनिमीमेत्यादिना इस्। ततउः। भ्रमितेति भ्रमिताया गदाया झङ्कारे मूर्छितः संक्रान्तः तेन मिश्रित इत्यर्थः। गम्भीरो वचनध्वनिर्यस्य तथाभूतेन। कौरवराजेन दुर्योधनेन सोपहासं यथा तथा आगच्छाग-च्छेत्याहूयमानः। असामर्थ्येऽपि संग्रामे प्रवृत्तत्वादुपहासः। स चोपागतमात्रमेव त्वां हनिष्यामीति व्यञ्जयति। तृतीयः पाण्डवेषु तृतीय इत्यर्थः। अर्जुनो हि न तृतीयोऽनुजो युधिष्ठिरस्येति। आरब्धः आरब्धवान्। कर्तरि क्तः। अकृतिनः गदायुद्धेऽकुशलस्य। 'कृती कुशल इत्यपी' त्यमरः। तस्य अर्जुनस्य। गदाघातात् दुर्योधनकृताद्ग-दाप्रहारात् निधनं मरणं उत्प्रेक्षमाणेन संभावयता कामपालेन बलरामेण। 'कामपालो हलायुध' इति बलरामपर्यायेष्वमरः। देवकीसूनुः देवक्याः पुत्रः श्रीकृष्णः। आनि-प्रयत्नादिति। विपदुन्मुखस्यार्जुनस्य त्यागमनिच्छता रथारोपणे प्रयत्नातिशयः। एवं च मृतस्ते भ्राता भीमोऽर्जुनोऽपि प्रविष्ट एव मृत्युमुखमिति समवधार्यतामिति भावः।

(कै) वृकोदरेति। वृकोदरस्य भीमस्यानुगमनस्य पदवी मार्गः। प्रतिपन्ना स्वीकृताऽऽ-लम्बितेति यावत्। गाण्डीवं नाम धनुः परित्यजता। लक्षणहेत्वोरित्यादिना लटः-शता। गाण्डीवस्य नाम धनुषः परित्यागः पदवीप्रतिपत्तौ हेतुः। गाण्डीवे स्वीकृत्य प्रवर्तिते तु युद्धेऽवश्यं मरिष्यति दुर्योधनस्ततश्च दुर्घटं भीमानुमरणमित्यतः परित्यक्तं गाण्डीवं त्वयेति भावः। अस्य च प्रशस्यत्वावधारणात्साधुवादः। तदैव भीममरणा-वसर एव तत्समनन्तरमेवेत्यर्थः। प्राणेति। प्राणानामपगमनं निर्गमनं नाश इत्यर्थः

दारुणस्य शत्रोरभिमुखं गच्छन्तमुपेक्षितुम् ।) ( मोहमुपगता ) (क्रो)

**राक्षसः**—ततश्चाहं—

**युधिष्ठिरः**—भवतु मुने! किमतःपरं श्रुतेन? हा तात भीमसेन! हा कान्तारव्यसनबान्धव! हा मच्छरीरस्थितिविच्छेदकातर! हा जतुगृहविपत्समुद्रतरणयानपात्र! हा किर्मीरहिडिम्बासुरजरासंधविजयमल्ल! हा कीचकसुयोधनानुजकमलिनीकुञ्जर! (कौ)

---

स एव महोत्सवो भीमनिधने तस्यैव दुःखतिरोधानपूर्वकमानन्दातिशयाधायकत्वात् । उत्सहिष्ये अनुभविष्यमीत्यर्थः । प्रतिपालयिष्यामीति चक्रवर्ती । प्राणपरित्यागाद्धृदयमुत्साहयिष्य इत्यपि पाठः । तत्र प्राणपरित्यागं विधाय हृदयमुत्साहयिष्य आनन्दयिष्यामीत्यर्थः । वृकोदरेत्यादावनुगमनपदं क्वचिन्नास्ति ।

(क्रो) गदाया विषये गदायुद्धे वा । दारुणस्येत्युपेक्षानर्हत्वं द्योत्यते । अत्र हा नाथेत्यतः परं हा भ्रातृवत्सलेति क्वचिदधिकः पाठः ।

(कौ) भवतु कृतं कथनेनेत्यर्थः । कुत इत्याह किमिति किं किंफलं न किंचिदित्यर्थः । तात वत्स । 'वत्सपुत्रकतातेति नाम्ना गोत्रेण वा सुतः । शिष्योऽनुजश्चवक्तव्यः ।' इति दर्पणम् । कान्तारेति कान्तारे वने यानि व्यसनानि तत्र बान्धवः संविभागीत्यर्थः । सुहृदिति वा। तद्दुःखवारणे सहायभूतेत्यर्थः । 'बान्धवो बन्धुसुहृदोः' इति मेदिनी । मदिति मम शरीरस्य स्थितिः सत्ता जीवितमित्यर्थः तस्य विच्छेदान्नाशात्कातर भीरो! जतुगृहेति जतुगृहे दुर्योधनेन पाण्डवमारणार्थं विनिर्मिते लाक्षामये गृहे या विपत् व्यसनं सैव समुद्रो दुस्तरत्वात्तत्र यानपात्रं गमनसाधनभूतं भाजनं नौरित्यर्थः । किर्मीरेति किर्मीरादयोऽनुपदमेव व्याख्याताः तेषां विजये निर्जये मल्लो नियोद्धा । बाहुयुद्धेनैव हि मल्लवन्मारिता एते भीमेनेति । कीचकेति कीचकः सुयोधनानुजाश्च त एव कमलिनी तस्याः कुञ्जरो हस्ती समूलमुन्मूलयितेत्यर्थः । अत्र 'भवतु, किमतः परं श्रुतेन? हा तात भीमसेन हा जतुगृहाग्निसमुद्रसंतरणयानपात्र हा किर्मीरजटासुरहिडिंबबकमल्ल कीचकसुयोधनानुजकमलिनीकुञ्जर! हा द्यूतपणपरिणतकान्तारबन्धो हा मम शरीरस्थितिपरिच्छेदशङ्कानिषूदन हा मदाज्ञासंपादक हा कौरवसेनावनदावानल' इतिक्वचित्पाठः स्पष्टार्थश्चायम् ।

निर्लज्जस्य दुरोदरव्यसनिनो वत्स! त्वया सीदता
भक्त्या मे समदद्विपायुतबलेनाङ्गीकृता दासता ।
किं नामापकृतं मयाऽधिकमतस्त्वय्यद्य यद्गम्यते
त्यक्त्वाऽनाथमबान्धवं सपदि मां प्रीतिः क्व ते साऽधुना!॥ १७ ॥

---

( १७ ) निर्लज्जस्येति । हे वत्स समदद्विपायुतबलेन समदानां मदयुक्तानां द्विपानां गजानां अयुतस्य सहस्रदशकस्य बलमिव बलं सामर्थ्यं यस्य तथाभूतेन । एतेन सपदिशत्रून्मूलनक्षमत्वं द्योत्यते । त्वया कर्त्रा निर्लज्जस्य लज्जाशून्यस्येत्यात्मावमाननं दुःखातिशयमभिव्यञ्जयति । द्यूतमिति हि कामजेषु व्यसनेष्वन्यतमं भूपतीनां व्यसनं तदाह मनुः ‘ मृगयाऽक्षा दिवास्वप्नः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ ’ इति । अक्षा अक्षक्रीडा द्यूतमित्यर्थः । प्रतिषिद्धा चात्रासक्तिस्तेनैव ‘ दश कामसमुत्थानि तथाष्टौ क्रोधजानि च । व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ॥ ’ इति । विशेषतश्च प्रतिषिद्धमक्षैर्देवनं श्रुत्या ‘ अक्षैर्मा दीव्यः ’ इति । एवं च प्रतिषिद्धेऽर्थे प्रवृत्तिर्भूपतीनां लज्जायै प्रकल्पते । तथापि मम तत्र प्रवृत्तिरासीदिति निर्लज्ज एवाहमिति भावः । दुरोदर व्यसनिनः दुष्टं आसमन्तादुदरं मध्यं यस्य तत्र दयूते व्यसनिनः सक्तिमतः। अयमेव च निर्लज्जत्वे हेतुः। दुरोदरो दयूतकारे पणे द्युते दुरोदरं’ इत्यमरः ‘ व्यसनं त्वशुभे सक्ता ’ विति मेदिनी । मे मत्सम्बन्धिन्या भक्त्या पूज्यत्वबुद्धिमूलकेनानुरागेण हेतुभूतेन दासता दुर्योधनदासत्वं अङ्गीकृता । बलवत्तमस्य बन्धोः शत्रूदास्ये नियोजनमिति गरीयानेवायं ममापराध इति भावः । अतः अस्मात् एतदपेक्षयेत्यर्थः अद्य मया त्वयि किं नाम अधिकं अपकृतं अपराद्धं यत् यस्मात् अनाथं त्वद्विरहान्नाथशून्यं अबान्धवं सहायशून्यं च मां सपदि युगपत् त्यक्त्वा गम्यते । विषमं किलैतयद्गरीयस्यप्यपराधेऽनुवर्तनं विनाप्यपराधं परित्यागश्चेतीति भावः । सा दयूताद्यवसरेऽनुभूता । अनुभूतार्थकत्वादेव च यच्छब्दनिरपेक्षत्वमत्र तच्छब्दस्य । तदाहुः ‘ प्रक्रान्तप्रसिद्धानुभूतार्थकस्तच्छब्दो यच्छब्दं नापेक्षत ’ इति । ते तव प्रीतिः अधुना क्व? कुत्र अस्तीति शेषः? अत्र सीदतेत्यत्र सा तदेति क्वचित्पाठः । सीदता क्लिश्यतापीत्यर्थः । ‘ मयाऽधिकमतस्त्वय्यद्ये ’त्यत्र च ‘ मया तदधिकं त्वय्यद्ये ’ त्यपि पाठः क्वचिद्दृष्टः । अनाथमबान्धवमित्यत्र च नाथ सबान्धवमिति पाठान्तरम् । ‘ प्रीतिः

**द्रौपदी**—(संज्ञामुपलभ्योत्थाय च ।) महाराअ ! किं एदं वट्टइ ? (महाराज! किमेतद्वर्तते ?) (क्कं)

**युधिष्ठिरः**—कृष्णे ! किमन्यत् ? (क्कः)

स कीचकनिषूदनो बकहिडिम्बकिर्मीरहा
मदान्धमगधाचलप्रगुणसंधिभेदाशनिः ।
गदापरिघशोभिना भुजयुगेन तेनान्वितः
प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्तं किल ॥ १८ ॥

---

क्क ते साधुतं' त्यत्र च ' भीम क्क ते साधुता' इत्यान्ध्रपुस्तकपाठः। सर्वेपि चामी स्पष्टार्थाः। अत्र दास्यानर्हत्वेऽपि दास्याङ्गीकरणे भक्तिर्हेतुरिति पदार्थगतहेतुकं काव्यालिङ्गमलङ्कारः । तदा सत्यपि ममापराधे दासत्वमङ्गीकृतमिदानीं पुनरसत्यपि मन्तौ गम्यत इति वस्तुना विषमालङ्कारो व्यज्यते । शार्दूलविक्रीडितं वृत्तम् ॥

(क्कं) अत्र 'किं एत्थ एव्वं चिट्ठिज्जइ' ( किमत्रैवं स्थीयते ) इत्यपि पाठः । अयुक्तः पुनरेष उत्तरस्य वैयधिकरण्यप्रसङ्गादिति द्रष्टव्यम् ।

(क्कः) अन्यन्मया वक्ष्यमाणादितरत् किं न किंचिदपि यत्तु मया वक्ष्यते तदस्तीत्यर्थः । अद्ड्डरादिभ्य इत्यद्डादेशः ।

(१८) यद्वर्तते तदाह । स इति । स प्रसिद्धः कीचकनिषूदनः कीचकस्य निषूदनो नाशयिता । बकेति बको हिडिम्बः किर्मीरश्चेत्येतान् राक्षसान् हन्ति तथाभूतः । हन्तेः क्विप् । मदेति मदेन दर्पेण अन्धो विवेकशून्यतां प्राप्तो यो मगधो मगधदेशाधिपो जरासन्धः स एवाचलः पर्वतस्तस्य प्रगुणसन्धिभेदे सुदृढसन्धिविदारणेऽशनिर्वज्रभूतः । वज्रेण यथा पर्वतानां सन्धयो विदार्यन्त एवं यो जरासन्धस्य शरीरसन्धिं विदारितवानित्यर्थः । तदेव सन्धीनां प्रकृष्टगुणत्वं यत्सुदृढत्वमित्यत उक्तमस्माभिः सुदृढेति । अत्र मगधाचलप्रगुणेत्यत्र मगधाधिपद्विरदेत्यपि क्वचित्पाठः । स चाननुरूपः । मगधाधिपे द्विरदत्वारोपो हि न हि भीमसेनेऽशनित्वारोपेनुरूप इति । गदेति । गदा च परिघोऽर्गला च ताविव शोभते तथाभूतेन । तेन प्रसिद्धेन अद्वितीयेनेति गम्यते । प्रियः प्रीतिविषयीभूतः पतिः । तल्लक्षणं तु प्रोक्तं मुनिना भरतेन । 'यो विप्रियं न कुरुते नानायुक्तं प्रभाषते । तथार्जवसमाचारः प्रिय इत्यभिधीयते ॥' इति । 'धवः प्रियः पतिर्भर्ते' त्यमरः । मम अनुजः कनीयान् भ्राता । अर्जुनस्य गुरुर्ज्यायान् भ्राता । भीम इत्यर्थः । अस्तमदर्शनं नाशमित्यर्थः गतः किल निःसंशयं प्राप्तः ।

**द्रौपदी**—णाह भीमसेण ! तुए किल्ल मे केसा संजमिदव्वा । ण जुत्तं वीरस्स खत्तिअस्स पडिण्णादं सिढिलेदुम् । ता पडिवालेहि मं जाव उवस-प्पामि । ( पुनर्मोहमुपगता । ) नाथ भीमसेन ! त्वया किल मे केशाः संयमयितव्याः न युक्तं वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुम् । तत्प्रतिपालय मां यावदुपसर्पामि ।(क्ष)

**युधिष्ठिरः**—( आकाशे ) अम्ब पृथे ! श्रुतोऽयं तव पुत्रस्य समुदाचारः ? मामेकमनाथं विलपन्तमुत्सृज्य क्वापि गतः । तात जरासंधशत्रो ! किं नाम वैप-रीत्यमेतावता कालेनाल्पायुषि त्वयि समालोकितं जनेन ? अथवा मयैव बहू-पलब्धम् । (क्षा)

---

(क्ष) संयमयितव्या बन्धनीयाः । 'उत्तंसयिष्यति कचांस्तव देवि भीम' इति प्रतिज्ञातत्वादिति भावः । प्रतिज्ञातं प्रतिज्ञाम् । वीरस्य बलवदुत्साहवतः । अतिशक्तिभा-गुत्साहो हि वीर्यं तद्विशिष्टो वीर इति । 'उत्साहोऽध्यवसायः स्यात्सवीर्यमतिशक्तिभाग्' त्यमरः । तत्र च क्षत्रियस्येत्यतिमात्रमयुक्तत्वं प्रतिज्ञाशैथिल्यस्याभिव्यञ्जयति । उपसर्पामि त्वत्समीपमागच्छामि । अत्र 'नाथ त्वया न किं केशाः संयममितव्याः ? न युक्तं वीरस्य क्षत्रियस्य प्रतिज्ञां शिथिलयितुम् । तत्प्रतिपालय मां त्वम् ।' इत्यपि पाठः । स्पष्टार्थ-श्चायम् । क्वचिदादित आकाशे दत्तदृष्टिरित्यधिकम् । भीमगतचित्ततयाऽऽकाशे प्रत्यक्षाय-माणमिव भीमं पश्यन्त्यास्तत्र दृष्टिप्रदानम् ।

(क्षा) आकाश इति । शोकातिशयवशाद्बुद्धिगतां मातरं प्रत्यक्षायमाणामिवोप-लक्षयतः संबुद्धिप्रयोगादाकाश इत्युक्तम् । अत्रापि दत्तदृष्टिरित्यधिकं क्वापि । न चैतदा-काशभाषितम् । तद्धि अनुक्तमप्यर्थं श्रुत्वेव किंब्रवीषीति प्रश्ने भवतीत्याचक्षते । यदुक्तं विश्वनाथेन 'किंब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते । श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाका-शभाषितम् ॥' इति । समुदाचार आदरमूलक आचारः । अयं वक्ष्यमाणः । तमेवाह मामिति । सर्वथा नायमुचित इति । समुदाचारविपरीतमेतच्चेष्टितमेतस्येति भावः । तात वत्स । जरासन्धशत्रो भीम । वैपरीत्यं विपरीतत्वम् । प्रकृतिविरुद्धमाचरितमित्यर्थः । तद्धि अल्पावशिष्टमायुरवबोधयतीति । तदाहुर्भिषगाचार्याः । यथा चरकः 'प्रकृतिर्हीय-तेऽत्यर्थं विकृतिश्चाभिवर्धते । कृत्स्नमौत्पातिकं घोरमनिष्टमुपजायते ॥ इत्येतानि मनुष्याणां [illegible]ताम् । लक्षणानि यथोद्देशं यान्युक्तानि यथागमम् ।' इति । सुश्रुतश्च [illegible]र्विकृतिर्भवेत् । तत्त्वारिष्टं समासेन' इति । प्रकृतेर्विकृतिः सहज-[illegible] अथवेति स्वयमुक्तस्य विचार्य प्रतिषेधे । मयैवालोकितं [illegible] जनेनेति भावः ।

दत्वा मे करदीकृताखिलनृपां यन्मेदिनीं लज्जसे
द्यूते यच्च पणीकृतोऽपि हि मया न क्रुध्यसि प्रीयसे ।
स्थित्यर्थं मम मत्स्यराजभवने प्राप्तोऽसि यत्सूदतां
वत्सैतानि विनश्वरस्य सहसा दृष्टानि चिह्नानि ते ॥ १९ ॥

मुने ! किं कथयसि ? ('तस्मिन्कौरवभीमयोः' (६।१६) इत्यादि पठति ।)

**राक्षसः**—एवमेतत् ।

**युधिष्ठिरः**—धिगस्मद्भागधेयानि ! भगवन्कामपाल ! कृष्णाग्रज ! सुभद्राभ्रातः ! (क्षि)

---

(१९) स्वयमुपलब्धं वैपरीत्यमाचष्टे दत्त्वेति । करदीकृताखिलनृपां करं ददति करदाः अकरदाः करदत्वेन संपादिताः करदीकृताः स्वयं निर्जित्य करदत्वं प्रापिता इत्यर्थः अखिला नृपा राजानो यस्यां तथाभूतां मेदिनीं पृथिवीं मे मह्यं दत्त्वा लज्जसे अतिक्षुद्रं किलैतन्मयाचरितं नैव पुनर्लोकातिशायि किमपीति लज्जां भजसे । इति यत् तदेकम् । च किं च मया द्यूते पणीकृतः पराजये देयद्रव्यतां प्रापितोऽपि न क्रुध्यसि प्रत्युत प्रीयसे हर्षं भजसे । एतच्च द्वितीयम् । मम स्थित्यर्थमवस्थानार्थं मत्स्यराजसदने मत्स्यानां नाम देशानां राज्ञो विराटस्य गृहे सूदतां पाचकत्वं प्राप्तोऽसि इति यत्तदपीति हे वत्स भीम सहसा युगपद्विनश्वरस्य नंक्ष्यत इत्यर्थः ते तव चिह्नानि नाशलक्षणानि दृष्टानि मया साक्षात्कृतानि । अखिलानपि नृपान्निर्जित्य करदीभावं च प्रापय्य सकलमपि भूमण्डलमर्पयतोऽभिमानविपरीता लज्जा, अन्येन द्यूते पणीकृतस्यापि न केवलं कोपाभावः प्रत्युत कोपविपरीता प्रीतिरपि, सकलमपि भुवनं विजेतुं प्रभवतः सूदभावस्वीकार इत्यादिकं मयैव ते वैपरीत्यमुपलब्धमित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(क्षि) भगवन्निति भगवन्पूज्य एतेन पूज्यत्वविरोधी तवायं दुर्योधनपक्षपात इति व्यज्यते । कामपालेति कामान्स्वीयान्मनोरथान् पालयति रक्षति नियच्छतीति यावत् तथाभूत । एतेनायुक्तं किलैतद्यत्कामपालेनापि सता भीमवधकामो न रक्षित इति द्योत्यते । दृश्यते किल रक्षणार्थकानां नियमनार्थकत्वमपि 'राजर्षे रक्षाविनयम्' इत्यादौ । कृष्णाग्रज । कृष्णस्याग्रज ज्येष्ठबन्धो ! कृष्णः किलास्मान्प्राणानेवात्मनो मन्यते भवान्पुनस्तदग्रजः सन्नपि तद्विपरीतमिति प्रकाममेवैतदयुक्तमिति भावः । सुभद्राभ्रातः सुभद्राया अर्जुनभार्याया भ्रातः ! बलभद्र ! न केवलं भ्रात्रपेक्षया यत्र कुत्राप्यनुकम्पनीयं भवता किन्तु भगिन्यपेक्षया तद्भर्तर्येव तदपि नानुष्ठितमिति हृदयस्य पारुष्यातिशयो व्यज्यते । अत्र कामपालेत्यत्र बलदेवेति क्वचित्पाठः ।

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम् ॥ २० ॥

---

(२०) ज्ञातीति । ज्ञातिप्रीतिः ज्ञातिः सगोत्रा सुभद्रा पितृष्वसुः पुत्रा वा पाण्डवास्तद्विषयिणी प्रीतिः मनसि चित्ते न कृता नानीता मनसापि न चिन्तितेत्यर्थः । सामान्यतस्तावल्लोकविरुद्धमेतद्भवतोऽनुष्ठानं लोके हि सर्वोऽप्यात्मनो ज्ञातिषु स्निह्यति न पुनस्तदन्यत्र । अन्यश्च दुर्योधनो वयं तु ज्ञातयः। तदेतदेकान्तत एवायुक्तं तवाचारितमिति भावः। पाण्डवबलदेवयोश्चन्द्रवंशजत्वाद्वा ज्ञातित्वम् । 'ज्ञातिः पितृसगोत्रयो' रिति मेदिनी। क्षत्रियाणां धर्मो न मनसि कृत इत्यनुवर्ते । विभक्तिविपरिणामेन च कृत इत्यस्य संबन्धः । युध्यमानयार्वीरयोर्मध्यस्थैरेव प्रेक्षकैर्भवितव्यं न पुनरेकतरपक्षपातिभिरित्येव क्षत्रियाणां धर्मः । तव तु युध्यमानयोर्भीमसुयोधनयोः सुयोधनाय भीमवधोपायस्य संज्ञया सूचन तद्विरुद्धमिति भावः। आस्तां तावद्धर्मविरुद्धमेतदाचरणं ज्ञातिप्रीतेर्मनस्यकरणं च। श्रीकृष्णापेक्षयापि त्वया नैवमनुष्ठेयं, तस्य हि परे प्राणाः श्रीमानर्जुनः । एतदपि भवता नानुचिन्तितमित्याह रूढमिति । तत् आपामरप्रसिद्धमित्यर्थः अर्जुनेन सह आत्मनो भगिन्या भर्त्रा सहेति भावः । अनुजस्य कनीयसो भ्रातुः श्रीकृष्णस्य रूढं आबाल्यानुवृत्ततया प्रवृद्धं न तु नवीनमित्यर्थः । सख्यं मैत्र्यमपि । अपिरत्र गणनस्यात्यन्तमावश्यकत्वमभिव्यञ्जयति । 'सख्युर्य' इति भावे यः । न गणितं नादृतम् । अननुरूपमेतद्भवत आचरणमिति भावः । अथोच्यते शिष्यो मे दुर्योधन इति युक्त एव मे तत्र प्रणयपक्षपात इति तदा भीमस्यापि भवच्छिष्यत्वान्नैतद्युक्तमित्याह । भवतः शिष्ययोर्भीमदुर्योधनयोर्विषये स्नेहबन्धः प्रीतिरूपो बन्धः शिष्याविषयप्रेमसंबन्ध इति वा तुल्यः समानः कामं भवतु । अनुमत एवायमिति भावः । 'कामं चानुमतौ स्मृतम्' इति मेदिनी । परं तु त्वं यन्मन्दभाग्ये हीनदैववति मयि विमुखः पराङ्मुखः असि अयं पन्थाः निरागसि जने ज्ञातिप्रीत्यादिविगणनपुरःसरं विपत्पातनरूपा सरणिः कः । लोकविरुद्धत्वाच्छास्त्रविरुद्धत्वाच्च क इति प्रश्नः । अपन्थाः खल्वयमिति भावः । यद्वा कः पन्थाः परलोकगमनमार्ग इत्यर्थः । लोकविरुद्धः शास्त्रविरुद्धश्चायं पन्थाः कं वा लोकं नेष्यति श्रीमन्तम् ? निरयादिसाधक एवायं मार्ग इति भावः । मन्दभाग्य इति भवादृशस्याप्येवंविध आचरिते ममैव मन्दं भाग्यं हेतुरिति द्योत्यते । अत्र 'मयि त्वमि' त्यत्र 'मयीत्थमि' त्यपि पाठः । न चैष प्राचीनैर्विश्वनाथादिभिरादृत इत्युपेक्षितः । अत्र शोकावेगवशादुल्लङ्घितो बलभद्रादरो

(द्रौपदीमुपगम्य ।) अयि पाञ्चालि! उत्तिष्ठ। समानदुःखावेवावां भवावः । मूर्छया किं मामेवमतिसंधत्से? । (क्षी)

**द्रौपदी**—(लब्धसंज्ञा ।) बन्धेदु णाहो दुज्जोहणरुहिरालिद्देण हत्थेण दूसासणविमुक्कं मे केसहत्थम् । हञ्जे बुद्धिमदिए! तुह वि पच्चक्खं एव्व णाहेण पडिण्णादम् । (कञ्चुकेनमुपेत्य।) अज्ज! संदिट्ठं दाव मे देवेण देवकीणन्दणेण केसबन्धणं आरहीयदु त्ति। ता उवणेहि मे पुल्लपोप्फदामाइं। विरएह दारिआओ कबरीम् । करेह्म भअवदो णाराअणस्स वअणम् । ण हु सो अलीअं संदिसदि । अहवा किं मए संतत्ताए भणिदम् । अचिरगदं अज्जउत्तं अणु-

---

युधिष्ठिरेणेति द्रवो नाम विमर्शसन्धेरङ्गम् । तदाहुः 'द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसंभवा ।' इति । मन्दाक्रान्ता वृत्तम् । मन्दाक्रान्ताऽम्बुधिनगहयैर्मो भनौ तौ गुरूचे' दितिलक्षणात् ॥

(क्षी) आवां त्वं चाहं च । समानं दुःखं भीममरणविषयकं ययोस्तथाभूतौ । मूर्छया अतिसंधाने करणभूतया । अतिसंधत्से वञ्चयसि । मामेव दुःखे विनिपात्य स्वयं निर्दुःखा भवसीत्यर्थः । अतिसंपूर्वको दधातिः प्रतारणमभिधत्ते । 'अतिसंधीयते कामिजनसार्थः' इति शाकुन्तलम् ।

(क्षु) मूर्छामनुभवन्त्याऽनाकर्णितत्वाद्युधिष्ठिरवचनस्योत्तरमदत्त्वैव शोकावेगवशात्स्मृतिप्रत्युपस्थितं प्रत्यक्षायमाणमिव भीममालोकमाना प्राह बध्नात्विति । अत्र क्वचिद्द्विरुक्तो बध्नातिः संदृश्यते । तत्र संभ्रमातिशयो बोध्यः । नाथो भीमः । केशहस्तं केशकलापम् । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । हञ्जे इति चेट्याः संबुद्धौ 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः । तवापीति अपिनाऽऽत्मनः संग्रहः । न केवलं ममैवापि तु तवापीत्यर्थः । नाथेन भीमेन 'स्त्यानावनद्धघनशोणित'त्यादि प्रथमाङ्कोक्तं प्रतिज्ञातम् । आर्य कञ्चुकिन् ! अतः परं क्वचित् किमितिपाठः । अनर्थकत्वाच्च नोपात्तोऽयमस्माभिः । मे इत्यपि क्वचिन्नास्ति । देवकीनन्दनेन श्रीकृष्णेन । अतः परं पुनरपीत्यधिकं क्वचित्पठ्यते तन्न युक्तं प्राक्केशबन्धनस्यानारब्धत्वात् । केशबन्धनं केशानां वेणीरूपेण बन्धनम् । केशरचनेति पाठे रचना वेणीकरणमितियावत् । फुल्लपुष्पदामानि फुल्लानां पुष्पाणां माल्यानि । पुष्पगर्भत्वात्कबर्याः । पुष्पजातानीत्यपि पाठः । तत्र जातानि समूहाः। फुल्लेति क्वचिन्नास्ति । दारिकाः केशप्रसाधनादौ नियुक्ताः कन्यकाः । सम्बोधनमेतत् । यूय-

**कञ्चुकी**—धिङ्मुने! राक्षससदृशं हृदयं भवतः।

**राक्षसः**—(सभयं स्वगतम्।) किं ज्ञातोऽहमनेन? । (प्रकाशम्।) भोः कञ्चुकिन्! तयोर्गदया खलु युद्धं प्रवृत्तमर्जुनदुर्योधनयोः। जानामि च तयोर्गदायां भुजसारम्। दुःखितस्य पुनरस्य राजर्षेरपरमनिष्टश्रवणं परिहरन्नेवं ब्रवीमि। (क्षै)

**युधिष्ठिरः**—(बाष्पं विसृजन्।) साधु महर्षे! साधु। सुस्निग्धमभिहितम्। (क्षो)

**कञ्चुकी**—महाराज! किं नाम शोकान्धतया देवेन देवकल्पेनापि प्राकृतेनेव त्यज्यते क्षात्रधर्मः। (क्षौ)

**युधिष्ठिरः**— आर्य जयंधर!

---

(क्षै) राक्षससंदृशमितिकञ्चुकिवचने राक्षसेति संबुद्धिरित्याशङ्कमानः प्राह किं ज्ञात इति। दुर्योधनपक्षपातित्वशङ्कां निराकरिष्णुः प्राह अर्जुनदुर्योधनयोरिति। यदि तु दुर्योधनपक्षपातित्वप्रकाशनमभ्यलषिष्यत्तदा 'अभ्यर्हितं पूर्वं' मिति दुर्योधनपदमेव पूर्वं प्रायोक्ष्यत। गदायां गदाविषये गदायुद्धविषय इत्यर्थः। भुजसारं भुजबलम्। 'सारो बले स्थिरांशे च' त्यमरः। जानामि दुर्योधनएव समर्थो न पुनरर्जुन इत्यवगच्छामीत्यर्थः। अपरं भीममरणरूपादन्यत् अनिष्टश्रवणं अनिष्टस्य मृतोऽर्जुन इत्येवंरूपस्य श्रवणं परिहरन् निराकुर्वन्। हेतौ शता। अनिष्टान्तरश्रवणपरिहार एव ममैवंवचने हेतुरित्यर्थः।

(क्षो) सुस्निग्धं अतिस्नेहयुक्तं यथा तथा।

(क्षौ) देवकल्पेन देवसदृशेन। यद्यपि ईषदसमाप्तौ कल्पबित्यादिना देवात्किञ्चिदूनो देवकल्प इत्येव विग्रहणीयं तथापि कल्पपः सदृशार्थकत्वस्यालङ्कारिकैरङ्गीकरणादित्थमुक्तमस्माभिः। तदाह सादृश्यसूचकशब्दसंग्रहे दण्डी 'कल्पदेशीयदेश्यादिप्रत्ययप्रतिनिधी अपि।' इति। प्राकृतेन पामरेणेव शोकान्धतया क्षात्रधर्मः क्षत्रसंबन्धी धर्मः

रिपन्थिन' इत्येवंरूपः। क्षत्रधर्म इत्येव तु क्वचित्पाठः। अयमेव च युक्तः

र्वाहे तद्धितस्यानर्थक्यादिति। किं किमर्थं नामेति प्रश्ने त्यज्यते। न त्याज्यः

संग्रामं विधाय पराजयस्व शत्रुमिति भावः।

शक्ष्यामि तौ परिघपीवरबाहुदण्डौ
विक्तेशशक्रपुरदर्शितवीर्यसारौ ।
भीमार्जुनौ क्षितितले प्रविचेष्टमानौ
द्रष्टुं तयोश्च निधनेन रिपुं कृतार्थम्? ॥ २२ ॥

अयि पाञ्चालराजतनये! मद्दुर्नयप्राप्तशोच्यदशे! यथा संदीप्यते पावकस्तथा सहितावेव बन्धुजनं संभावयावः । (क्षं)

**द्रौपदी**—अज्ज! करेहि दारुसंचअम् । (सर्वतोऽवलोक्य ।) कहं ण को वि महाराअस्य वअणं करेदि । हा णाह भीमसेण! अज्ज तुए विणा महाराओ परिअणेण वि परिहवीअदि । (आर्य! कुरु दारुसंचयम् । कथं न कोऽपि

---

(२२) नैतच्छक्यमित्याह । शक्ष्यामीति । परिघेति । परिघवत्पीवरौ बाहुदण्डौ ययोस्तौ । वित्तेशेति वित्तेशः कुबेरः शक्र इन्द्रश्च तयोः पुरे दर्शितो वीर्यसार उत्कृष्टं शौर्यं याभ्यां तथाभूतौ । वने किल निवसत्सु पाण्डवेषु कदाचिद्वातवेगवशात्किमपि सौगन्धिकं कमलममीषां समीपे न्यपतत् । तच्च कामयमानाया द्रौपद्या मनोरथं पूरयितुकामो भीमः कुबेरपुरसंनिहिते सरसि विद्यमानानि तानि कमलानि, पराजित्य समापततो वीरानाजहारेति; अस्त्राधिगमार्थं शक्रपुरं गतोऽर्जुनः समधीत्यास्त्रविद्यां शक्राज्ञया निवातकवचान्नाम दुर्जयान्दैत्यानजयदिति च वनपर्वगता कथाऽत्रानुसन्धेया । क्षितितले भूतले प्रविचेष्टमानौ सक्लेशं विलुठन्तौ तौ प्रसिद्धौ समनुभूतस्नेहौ च भीमार्जुनौ तयोर्निधनेन मरणेन कृतार्थं कृतकृत्यं रिपुं दुर्योधनं च द्रष्टुं शक्ष्यामि । प्रश्ने काकुः न शक्ष्यामीति भावः । अत्र तौ इत्यत्र नो इति क्वचित्क्वचिच्च किमिति पाठः । द्वितीयश्च चरणः क्वचित् 'वित्तेशशक्रवरुणाधिकवीर्यवन्तौ ।' इति पठ्यते । शक्ष्यामीत्यत्र शक्नोमीत्यपि क्वचित्पाठः । नैते चमत्कारिणो न चापि बहु पुस्तकसंवादिन इत्युपेक्षिताः पाठाः । वसन्ततिलकावृत्तम् ।

(क्षं) मदिति मम दुर्नयेन दुष्टेन द्यूतेन प्राप्ता शोच्या दशाऽवस्था यां तथाभूते । 'नयो नीतौ द्यूतभेदे' इति विश्वः । यथेति यस्मादित्यर्थे तथेति च तस्मादित्यर्थे । अव्ययानामनेकार्थत्वात् । संदृश्यते चैवं 'यथा च वयं पश्यामस्तथाऽनेन भवितव्य' मित्यादिष्वेवंविध एव यथातथयोरर्थ इति । दीप्यते प्रज्वलति सहितौ परस्परमवियुक्तौ बन्धुजनं भीमार्जुनरूपं संभावयावोऽनुमरणेन संमानयावः ।

महाराजस्य वचनं करोति। हा नाथ भीमसेन! अद्य त्वया विना महाराजः परिजनेनापि परिभूयते।) (क्षः)

**राक्षसः**—सदृशमिदं भरतकुलवधूनां यत्पत्युरनुमरणम्। (क्स)

**युधिष्ठिरः**—महर्षे! न कश्चिच्छृणोति तावदावयोर्वचनम्। तदिन्धनप्रदानेन प्रसादः क्रियताम्। (क्सा)

**राक्षसः**—मुनिजनविरुद्धमिदम्। (स्वगतम्।) हन्त पूर्णो मे मनोरथः। यावदनुपलक्षितः समिन्धयामि वह्निम्। (प्रकाशम्।) राजन्! न शक्नुमो वयमिहैव स्थातुम्। (इति निष्क्रान्तः।) (क्सि)

**युधिष्ठिरः**—कृष्णे! न कश्चिदस्मद्वचनं करोति। भवतु। स्वयमेवाहं दारुसंचयं कृत्वा चितामादीपयामि।

**द्रौपदी**—तुवरेदु तुवरेदु महाराओ। (त्वरतां त्वरतां महाराजः।)

(नेपथ्ये कलकलः।)

**द्रौपदी**—(सभयमाकर्ण्य।) महाराअ! कस्स वि एसो बलदप्पिदस्स विसमो सङ्खणिग्घोसो सुणीअदि। अवरं वि अप्पिअं सुणिदुं अत्थि णिब्ब-

---

(क्षः) आर्य कञ्चुकिन् दारुसंचयं चितार्थं काष्ठानां संचयनम्। त्वया विना त्वद्वियुक्त इत्यर्थः। परिभूयते अनादरभाजनं क्रियते। अत्र दारुसंचयमित्यतः परं 'प्रज्वाल्यतां चिता। त्वरते मे हृदयं नाथं प्रेक्षितुम्।' इति, भीमसेनेत्यतः परं च 'तदेवेदं राजकुलं त्वया विरहितं सांप्रतं परिजनोपि परिहरति' इति क्वचिदधिकः पाठः। क्वचिच्च 'अद्ये' त्यादौ 'अद्यैव त्वया विना परिजनेनापि परिभूयत' इति।

(क्स) सदृशं योग्यम्। यत्पत्युरनुमरणं तदिदमिति संबन्धः।

(क्सा) इन्धनानि दहनोपयोगीनि काष्ठानि प्रसादोऽनुग्रहः। महर्षे इत्यतः परं 'न किंचिच्छृणोति परिजन' इत्यान्ध्रपुस्तके पाठः।

(क्सि) मनोरथः युधिष्ठिरमरणरूपः। अनुपलक्षितः अविज्ञातः यावत् सत्वरं समिन्धयामि प्रदीपयामि। वयमिति 'अस्मदो द्वयोश्चे' ति बहुवचनम्। एवेत्यत्रैवमित्यपि क्वचित्पाठः। क्वचित्पुन 'रिह स्थातुमि' त्येव पठ्यते। भवदीया विपदो द्रष्टुमशक्यत्वाद्गच्छाम इति भावः। एष एव च पाठो युक्त इति प्रतिभाति।

न्यो तदो विलम्बीअदि ? । ( महाराज! कस्याप्येष बलदर्पितस्य विषमः शङ्खनिर्घोषः श्रूयते । अपरमप्यप्रियं श्रोतुमस्ति निर्बन्धस्ततो विलम्ब्यते ? ।) (क्सी)

**युधिष्ठिरः**—न खलु विलम्ब्यते । उत्तिष्ठ ।

( इति सर्वे परिक्रामन्ति । )

**युधिष्ठिरः**—अयि पाञ्चालि ! अम्बायाः सपत्नीजनस्य च किंचित्सं-दिश्य निवर्तय परिजनम् । (क्सु)

**द्रौपदी**—महाराअ ! एव्वं अम्बाए संदेसिस्सम्—जो सो बअहिडिम्ब-किम्मिरजडासुरजरासंधविजअमल्लो सो वि दे मज्झमपुत्तो मह हदासाए पक्ख-वादेण परलोअं गदो त्ति । ( महाराज ! एवं अम्बायै संदेक्ष्यामि—यः स बकहिडिम्ब-किर्मीरजटासुरजरासंधविजयमल्लः सोऽपि ते मध्यमपुत्रो मम हताशायाः पक्षपातेन पर-लोकं गत इति । ) (क्सू)

**युधिष्ठिरः**—भद्रे बुद्धिमतिके ! उच्यतामस्मद्वचनादम्बा ।

> येनासि तत्र जतुवेश्मनि दीप्यमाने
> निर्वाहिता सह सुतैर्भुजयोर्बलेन ।
> तस्य प्रियस्य बलिनस्तनयस्य पाप-
> माख्यामि तेऽम्ब ! कथयेत्कथमीदृगन्यः ॥ २३ ॥

---

(क्सी) बलदर्पितस्य सामर्थ्येन गर्वितस्य । अतः प्राक् तेज इत्यधिकं क्वापि तत्र तेजसो विक्रमस्य बलेन दर्पितस्येत्यर्थः । विषमो दारुणः । शङ्खेति क्वचिन्नास्ति । अपरं श्रुतादन्यत् । निर्बन्ध आग्रहः उत्कटोऽभिलाष इत्यर्थः । अस्तीति प्रश्ने काकुः । यद्यतः परं विलम्ब्येत तदाऽपरमप्यनिष्टं किमपि श्रोतव्यं स्यात्तत्त्वर्यतां चिताधिरोहण इति भावः ।

(क्सु) संदिश्य संदेशं दत्वा निवर्तय प्रतिगमयेत्यर्थः ।

(क्सू) बकादयो व्याख्यातपूर्वा भीमेन हताः पुरुषाः तेषां विजये मल्लः । ज्येष्ठमल्ल इत्यपि क्वचित्पाठः । तत्र ज्येष्ठः श्रेष्ठ इत्यर्थः ।

(२३) वक्तव्यमाचष्टे येनेति । तत्र प्रसिद्धे तस्मिन् जतुवेश्मनि वारणावतवर्तिनि पाण्डवदाहार्थं दुर्योधनेन विनिर्मिते लाक्षागृहे दीप्यमाने प्रज्वलति सति येन कर्त्रा भुज-

आर्य जयंधर! त्वया सहदेवसकाशं गन्तव्यम् । वक्तव्यश्च तत्रभवान्माद्रेयः पाण्डवकुलबृहस्पतिः कनीयानस्माकं सकलकुरुकुलकमलाकरवडवानलो युधिष्ठिरः परलोकमभिप्रस्थितः प्रियमनुजमप्रतिकूलं सततमाशंसनीयमसंमूढं व्यसनेऽभ्युदये च भवन्तमविरलमालिङ्ग्य शिरसि चाघ्रायेदं प्रार्थयते । (क्षे)

मम हि वयसा दूरेणाल्पः श्रुतेन समो भवा-
न्सहजकृपया बुद्ध्या ज्येष्ठो मनीषितया गुरुः ।

---

योरात्मनो बाह्वोर्बलेन सामर्थ्येन करणभूतेन सुतैः पुत्रैरस्मदादिभिः सह निर्वाहिता अपवाहिता स्कन्धादिषु गृहीत्वा सुरङ्गया बहिर्नीतेत्यर्थः असि । यथा चेयं तदा नीता तथोपवर्णितं क्षेमेन्द्रेण 'बिलेन भीमसेनस्तु निर्गत्य गरुडोपमः । आदाय जननीं स्कन्धे दोर्भ्यां पार्थयुधिष्ठिरौ ॥ अङ्के च माद्रीतनयौ प्रययौ भीमविक्रमः ॥' इति । हे अंब मातः । तस्य प्रियस्य बलिनो बलवतः तनयस्य पुत्रस्य भीमस्य पापं शत्रुकृतं वधं मरणं वा ते तव आख्यामि कथयामि । अन्यः मद्भिन्नः पुरुषः ईदृक् एतादृशं वृत्तं कथं कथयेत्? वृत्तस्यास्य त्वयि शोकातिशयोत्पादकत्वेन दारुणत्वाद्दारुणेन मयैवेदमाख्येयमिति भावः । अत्र निर्वाहितेत्यत्र निर्वासितेति क्वचित्पाठः । तत्र निर्गमितेत्यर्थः । निर्वासनपदं च नोचितार्थमत्र । निर्वासयिता हि न प्रणयी भवति नापि सोऽयं निर्वास्यैः साकं प्रतिष्ठत इति । भीमः पुनः स्वयमपि प्रस्थित इति । तत एव चोपेक्षितोऽयं पाठः । कथयेत्कथमीदृगन्य इत्यत्र कथये कथमीदृशस्येति पाठो नीरसत्वात्परित्यक्तः । वसन्ततिलकावृत्तम् ।

(क्षे) तत्रभवान् पूज्य इति प्रेमातिशयो व्यज्यते । माद्रेयो माद्र्याः पुत्रः सहदेवः । पाण्डवकुलबृहस्पतिः पण्डोरिदं पाण्डवं तत्र कुले बृहस्पतिरिव । अस्माकं पाण्डवानां मध्ये । निर्धारणे षष्ठी । कनीयान् कनिष्ठः । सकलं कुरुकुलमेव कमलाकरः सरोवरं तस्य वडवानलो जलशोषको वह्निविशेषः । दावानल इति पाठः पुनरत्र न युक्तः । तस्य कमलाकरविरोधित्वाभावात् । कमलाकरस्थानेऽरण्येति पाठे त्वसौ युक्तः । सहदेवस्यैतद्विशेषणम् । आशंसनीयमाशिषा योजयितुं योग्यम् । असंमूढं हर्षशोकादिजन्यमोहशून्यम् । व्यसने दुःखे अभ्युदय उत्कर्षे । अविरलं गाढम् । आघ्रायेति कनीयस्त्वाच्छिरस आघ्राणम् । एष हि ज्येष्ठानामाचार इति । अत्र गत्वा वक्तव्यश्चेत्यादिः पाठः प्रामादिकः । त्वमपीति प्रथमान्तस्य वक्तव्य इत्यनेन सम्बन्धस्यासंभवात् । धृतिमन्तमित्यधिकं क्वापि ।

शिरसि मुकुलौ पाणी कृत्वा भवन्तमतोऽर्थये
मयि विरलतां नेयः स्नेहः पितुर्भव वारिदः ॥ २४ ॥

अपि च । बाल्ये संवर्धितस्य नित्यमभिमानिनोऽश्मसदृशहृदयसारस्य नकुलस्यापि ममाज्ञाया वचने स्थातव्यम् । तदुच्यतां नकुलः।नानुगन्तव्यास्मात्पदवी । त्वया हि वत्स ! (कस्मै)

---

(२४) प्रार्थनामाह । भवान् हि निश्चयेन मम संवन्धसामान्ये षष्ठी मत्त इत्यर्थः। एवमुत्तरत्रापि षष्ठी योज्या । वयसा दूरेण अत्यन्तं । विभक्तिप्रतिरूपकमव्ययमेतत् । अल्पः हीनः । श्रुतेन अधीतेन शास्त्रेण समः तुल्यः । सहजकृपया सहजा स्वाभाविकी कृपा दया यस्यां तथाभूतया बुध्या ज्येष्ठः प्रशस्यतमः । ज्य चेति प्रशस्यस्य ज्यादेशः । मनीषितया विद्वत्तया बुद्धिमत्तया वा गुरुः महान् । अतः यस्मात्त्वं वयसाऽल्पीयानपि गुणान्तरैर्ज्यायानसि तस्मात् मुकुलौ कलिकाकारौ मुकुलीकृतावित्यर्थः पाणी मदीयौ हस्तौ शिरसि मस्तके कृत्वा त्वां प्रणम्येत्यर्थः अर्थये प्रार्थये । प्रार्थनीयमाह मयि मद्विषयकः स्नेहः स्वीयः प्रेमा विरलतां तनुत्वं नेयः प्रापणीयः । भीमसेनस्नेहादिव मया मत्स्नेहात्त्वयापि न प्राणाः परित्याज्याः किन्तु शिथिलीकृत्य मद्गतं स्नेहमवश्यं ते रक्षणीया इतिभावः। कुत एतदित्याह । पितुः पाण्डोः वारिदः निवापोदकदाता भव । तत एव च प्राणान्परिरक्षेत्यर्थः । अत्र दूरेणाल्प इत्यत्र दूरेणत्वमित्यपि पाठः । स च न युक्तः । उत्तरत्र भवच्छब्दस्य विद्यमानत्वेन त्वमो नैरर्थक्यात् । क्वचित्तु दूरेणापीत्येव पठ्यते । तत्र दूरेण दूरोऽपीत्यर्थः । सहजकृपयेत्यत्र कृतसहजयेत्यपि पाठः । तत्र कृताऽभ्यस्ता सहजा स्वाभाविकी चेत्यर्थः । बुद्धिर्ज्ञानम् । अत्र वयआदिविषयभेदादेकस्यैव सहदेवस्यानेकधोल्लेखादुल्लेखोऽलङ्कारः । स्नेहस्य वैरल्यापादने च पितुर्वारिदानं हेतुरिति वाक्यगतहेतुकं काव्यलिङ्गमपीत्यनयोः संसृष्टिः । हारिणीवृत्तम् । नसमरसला गः षड्वेदैर्हयैर्हरिणी मता ॥ इतिलक्षणम् ।

(कस्मै) नकुलायापि संदेशमाख्यातुमुपक्रमते अपिचेति । बाल्ये संवर्धितस्य मयेति शेषः । एतच्च आज्ञावचनेऽवस्थाने हेतुतामावहति । अत्र वालिशचारितस्येति पाठान्तरम् वालिशो मूर्खः । 'मूर्खवैधेयवालिशाः' इत्यमरः । न चैष पाठः साधीयान् । एवं वचने प्रयोजनाभावात् । यद्यपि प्रणयातिशयवतां भवन्त्येवंविधानि वचनानि प्रायेण तथापि परित्यज्य समुचितं पाठान्तरं नैतच्छक्यमादर्तुम् । अश्मसदृशहृदयसारस्य पाषाणवत् हृदयसारो हृदयबलं यस्य । सत्यामपि विपदि व्यवसितादविचलत इतिभावः । अश्मेत्यत्रास्मदितिक्वचित् । सदृशोयोग्यः । नकुलस्येति शेषे षष्ठी नकुलेनेत्यर्थः । तत् तस्मात् तदुच्यतां

विस्मृत्यास्मान् श्रुतविशदया प्रज्ञया सानुजेन
क्षीणे पाण्डोवुदकपृषतानश्रुगर्भान्प्रदातुम् ।
दायादानामपि तु भवने यादवानां कुले वा
कान्तारे वा कृतवसतिना रक्षणीयं शरीरम् ॥ २९ ॥

---

नकुल इत्यान्ध्रेपुस्तकेऽधिकः पाठः । युज्यतेचायमित्यतः संगृहीतोऽस्माभिः । एतच्च सहदेवं प्रत्येव संदिष्टमिति भ्रममात्रमित्यप्यतः स्फुटीभवति । एतदभावेऽपि नैतत्सहदेवं प्रति प्रत्युत नकुलं प्रत्येव संदिष्टमित्येव निःसन्देहं प्रतीयते । अन्यथा मयि विरलतां नयः स्नेह इत्येतावतैव प्रतीयमानो नानुगन्तव्याऽस्मत्पदवीत्ययमर्थः पौनरुक्त्याय संपद्येत पितुर्मेववारिदः । रक्षणीयं शरीरमितिपद्यगतस्याप्यर्थस्यैवैव गतिः स्यादिति द्रष्टव्यम् ।

(२५) वक्तव्यमाह विस्मृत्येति । त्वयेति गद्यगतं पदमत्र संबध्यते । सानुजेन अनुजः सहदेवस्तत्सहितेन त्वया कर्त्रा श्रुतविशदया श्रुतेन शास्त्रेण तदभ्यासेनेत्यर्थः विशदया निर्मलया प्रज्ञया बुद्ध्या करणभूतया अस्मान् विस्मृत्य । अत्र श्रुतिविशदया स्वाग्रजौ चात्मबुद्ध्येत्यपि पाठः । तत्रास्मानिति मामित्यर्थः । श्रुतिरित्युपलक्षणं विद्यानाम् । स्वाग्रजौ आत्मनो ज्येष्ठभ्रातरौ भीमार्जुनावित्यर्थः । पाण्डौ भवतश्चास्माकं च पितरि भूपविशेषे क्षीणे वंशक्षयात्क्षयं प्राप्ते सति अश्रुगर्भान् बन्धुशोकस्खलितान्यश्रूणि गर्भे मध्ये येषां तथाभूतान् अश्रुमिश्रानित्यर्थः । उदकपृषतान् निवापोदकबिन्दून् । 'पृषन्ति बिन्दुपृषता' इति बिन्दुपर्यायेष्वमरः । शोकातिशयवशात् दुर्घटत्वेऽपि कतिपयबिन्दुमात्रमपि जलं यथाकथमपि वा प्रदातुमिति भावः । शरीरं रक्षणीयमित्यनेन संबन्धः । दायादानां सपिण्डानां अपि । विद्वेषिणामपीति भावः । ते हि दायं पितृप्रभृतेर्द्रव्यमदन्ति उपभुञ्जत इति दायस्यादा ग्राहका वेति । यो हि यदीयं दायं गृह्णात्यवश्यमसौ तेन पोष्य इति युज्यते दायादानां भवने वास इति दायादपदमभिव्यञ्जयति । दायादत्वेन पोषणे प्राधान्येनाधिकार इति तेषां प्रथमतो निर्देशः । ननु नोचितं सति विभवे विद्विष्टानां दायादानां भवने विपद्यवस्थातुं, क्लेशातिशयजनकत्वात्तस्येति चेत्तत्राह यादवानामिति । वा अथवा यादवानां श्रीकृष्णादीनां कुले गृहे । 'कुलं जनपदे गोत्रे संजातीयगणेष्वपि । भवने च' ति मेदिनी । स्वजनाः किल यादवा इति युक्तं तद्गृहेऽपि निवस्तुमिति भावः । ननु भोस्तत्रापि निवासः प्रत्यहमेव दुःखोत्पादकः 'स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायत' इति चेत्पक्षान्तरमाचष्टे कान्तार इति । कान्तारे अरण्ये वा कृतवसतिना कृता वसतिर्वासो येन तथाभूतेन सता कान्तारे कस्यापि स्वाम्याभावेन दुःखोत्पत्तेरसंभवात् । स्मर्यते हि 'अटव्यः पर्वताः पुण्यास्तीर्थान्यायतनानि च । सर्वाण्यस्वामिकान्याहुर्नहि तेषु

गच्छ जयंधर! अस्मच्छरीरस्पृष्टिकया शापितोऽसि भवताऽकालहीनमिदमवश्य-मावेदनियम्। (क्सो)

**द्रौपदी**—हला बुद्धिमदिए! भणाहि मह वअणेण पिअसहीं सुभद्दम्—'अज्ज वच्छाए उत्तराए चोत्थो मासो पडिवण्णस्स गब्भस्स । ता एदं कुलस्स पडिट्ठावअं सावहाणं रक्ख त्ति । कदा वि इदो परलोअगदस्स ससुरउलस्स अह्माणं वि सलिलबिन्दुदो हविस्सदि' त्ति । ( हला बुद्धिमतिके! भण मम वचनेन प्रियसखीं सुभद्राम्—'अद्य वत्साया उत्तरायाश्चतुर्थो मासः प्रतिपन्नस्य गर्भस्य । तदेनं कुलस्य प्रतिष्ठापकं सावधानं रक्षेति । कदापीतः परलोकगतस्य श्वशुरकुल-स्यास्माकमपि सलिलबिन्दुदो भविष्यति' इति ।) (क्सौ)

**युधिष्ठिरः**—( सास्रम् । ) भोः कष्टम् । (क्सं)

शाखारोधस्थगितवसुधामण्डले मण्डिताशे
पीनस्कन्धे सुसदृशमहामूलपर्यन्तबन्धे ।

---

परिग्रहः । ' इति । शरीरं स्वीयं वपुः रक्षणीयम् । यथा कथमपि वा यत्रकुत्रापि वाऽवस्थाय निवापोदकबिन्दूनपि दातुं रक्ष्यतामात्मनः शरीरं भवतेत्यर्थः । मन्दाक्रान्तावृत्तम् ।

(क्सो) अस्मच्छरीरस्पृष्टिकया अस्माकं शरीरस्पर्शः तया । स्पृशेः स्त्रियां क्वि-न्निति क्विन् । ततः स्वार्थे कः । अजादित्वाट्टाप् । शापितोऽसि शपथेन योजितोऽसि । शपथार्थकाच्छापशब्दात्प्रातिपदिकाद्धात्वर्थ इति णिच् ततो निष्ठा । अस्मच्छरीरस्पर्शरूपेण शपथेन योजितोऽसीत्यर्थः । एतच्च गमने हेतुतां भजते नैव तु भवतेत्यादेरुत्तरवचनस्य । तत्र शपथस्य प्रयोजनाभावात् । एकान्तभक्तस्य पुनरस्य शपथेन निवृत्तिरिति । अकाल-हीनं कालेन समुचितेन समयेन हीनं शून्यं यथा न भवति तथा सत्वरमिति यावत् ।

(क्सौ) हला सखि ! प्रियसखीति सपत्नीं सुभद्रां प्रति प्रयुक्तं द्रौपद्या उदात्त-स्वभावतामभिव्यञ्जयति । अद्य संप्रतीत्यर्थः । उत्तराया अभिमन्युभार्यायाः । प्रतिपन्नस्य गृहीतस्येत्यर्थः । गर्भरक्षणे हेतुः कुलप्रतिष्ठापकमिति वंशस्यप्रतिष्ठापयितारम् । कदापि कदाचिदित्यर्थः । पुमानेव गर्भ इत्याख्यातुमशक्यत्वादियमुक्तिः । श्वशुरकुलस्य अर्जुनादे-रुत्तरायाः श्वशुरसमूहस्य अस्माकं द्रौपदीप्रभृतीनां श्वश्रूणां च । अत्र 'उत्तराया आपन्नस-त्त्वायाश्चतुर्थो मासो वर्तते । सर्वथा नाभिकुलेतां निक्षिपेति ' इतिक्वचित्पाठः । नाभिकुलं पितृकुलमिति जगद्धरः । नैतदन्यत्र दृष्टम् ।

(क्सं) द्रौपदीवचनतः करुणस्योद्दीपनादस्रोत्पत्तिः ।

दग्धे दैवात्सुमहति तरौ तस्य सूक्ष्माङ्कुरेऽस्मि-
न्नाशाबन्धं कमपि कुरुते छाययार्थी जनोऽयम् ॥ २६ ॥

द्रौपदि! साधये इदानीमध्यवसितम् । ( कञ्चुकिनमवलोक्य । ) आर्य जयंधर! अस्मच्छरीरेण शापितोऽपि तथापि न गम्यते? । (क्ष:)

**कञ्चुकी**—( साक्रन्दम् । ) हा देव पाण्डो! तव सुतानामजातशत्रुभीमार्जुननकुलसहदेवानामयं दारुणः परिणामः! हा देवि कुन्ति! भोजराजभवनपताके! (गग)

---

(२६) कष्टं विवृणाति । शाखेति । छायया अर्थी इच्छावान् छायामिच्छन्नित्यर्थः। धान्येनधनवानितिवत्तृतीया । अयं द्रौपदीरूपो जनः कर्ता शाखारोधस्थगितवसुधामण्डले शाखानां रोधेन परस्परं नैरन्तर्येणावस्थानेन स्थगितं आवृतं वसुधायाः पृथ्व्या मण्डलं येन तथाभूते मण्डिताः दिगन्तव्यापिशाखतया भूषिता आशा दिशो येन तथाभूते पीनः पृथुलः स्कन्धोमूलाच्छाखावधिर्भागो यस्य तथाभूते 'स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः' इत्यमरः। सुसदृशमहामूलपर्यन्तबन्धे सुसदृशः अत्यन्तमनुरूपः महतो मूलस्य पर्यन्तबन्धः परितो वर्तमानो बन्धो यस्य तथाभूते सुमहति तरौ दैवात् दुर्भाग्यात् दग्धे सति तस्य सूक्ष्माङ्कुरे सूक्ष्मेऽङ्कुरे कमपि दुष्पूरमित्यर्थः । आशाबन्धं आशाया बन्धं योगमितियावत् । करोति । आशां करोतीत्यर्थः । यथा छायाप्रदे महति तरौ दैवाद्दग्धे तस्य सूक्ष्मोऽङ्कुरः प्रवृद्धो भूत्वा च्छायां प्रदास्यतीत्याशायाः करणं तथैवेयं विनष्टे पाण्डवकुल उत्तराया गर्भोऽवतीर्य सलिलबिन्दुं दास्यतीति द्रौपद्या आशंसेति भावः । अत्र शाखारोधेत्यत्र शाखारोहेति क्वचित्पाठः । तत्र शाखानां रोहः प्रवृद्धिरित्यर्थः । पर्यन्तबन्ध इत्यत्र च पर्यङ्कबन्ध इतिपाठः क्वचिद्दृष्टः । स चासंबद्धत्वादुपेक्ष्यः । अत्र द्रौपदीवचनस्य तरौ दग्धे तस्यसूक्ष्माङ्कुरे आशाकरणस्य संबन्धोऽसंभवन्नुभयोर्बिम्बप्रातिबिम्बभावं बोधयतीति निदर्शनालङ्कारः। अप्रस्तुतप्रशंसेयमिति तु भ्रान्तिः । अयं जन इति द्रौपद्या ग्रहणेन तस्याः सुदूरं निरस्तत्वात् । मन्दाक्रान्तावृत्तम् ।

(क्ष:) अध्यवसितं निश्चितं कार्यम् । अग्निप्रवेशरूपमित्यर्थः । अत्र 'साधु! इदानीमध्यवसितं करणीयम्' इत्यपि क्वचित्पाठः । न गम्यत इति प्रश्ने काकुः । गम्यतामितिभावः ।*

(गग) परिणामोऽवस्थान्तरम् । दशापरिणाम इत्यपि पाठान्तरम् । भोजराजभवनपताके भोजः कुन्तिभोजो नाम कुन्त्याः पालयिता भूपः तस्य भवनस्य पताकेवालङ्कारभूते

भ्रातुस्ते तनयेन शौरिगुरुणा श्यालेन गाण्डीविन-
स्तस्यैवाखिलधार्तराष्ट्रनलिनीव्यालोलने दन्तिनः ।
आचार्येण वृकोदरस्य हलिनोन्मत्तेन मत्तेन वा
दग्धं त्वत्सुतकाननं ननु मही यस्याश्रयाच्छीतला ॥ २७ ॥

( इति रुदन्निष्क्रान्तः ।

**युधिष्ठिरः**—जयंधर, जयंधर,

(प्रविश्य)

**कञ्चुकी**—आज्ञापयतु देवः ।

---

। कुन्ती किल शूरस्य नाम यादवस्य कन्या तेन कुन्तिभोजाय पुत्रीति प्रादायि तेन च दुहितेव पालिता तत्कन्यात्वेनैव प्रसिद्धेति हरिवंशगता कथात्रानुसंधेया ।

(२७) हा देवीत्यनेन कुन्त्याः शोचनीयत्वं प्रतिपाद्यते कुतस्तावदेतदित्याह **भ्रातुरिति** । ते तव भ्रातुर्वसुदेवस्य तनयेन शौरेः श्रीकृष्णस्य गुरुणा ज्येष्ठभ्रात्रा गाण्डीविनः अर्जुनस्य श्यालेन भार्यायाः सुभद्रायाः भ्रात्रा तस्यैव योऽनेन च्छद्मना संज्ञां प्रदाय व्यापादितस्तस्यैव अखिलधार्तराष्ट्रनलिनीव्यालोलने अखिलाः सकला धार्तराष्ट्रा धृतराष्ट्रपुत्रा एव नलिन्यः कमलवल्लयस्तासां व्यालोलने नाशे दन्तिनः करिणः । यथा करी नलिनीर्लीलयैवोन्मूलयत्येवं धार्तराष्ट्रानुन्मूलयितुं प्रभवत इत्यर्थः । व्यालोडन इत्यपि क्वचित्पाठः । तत्र व्यालोडनमुन्मथनम् । वृकोदरस्य भीमस्य आचार्येण गुरुणा । बलरामेण हि गदायुद्धं शिक्षितो भीम इति पौराणिकाः । उन्मत्तेन उन्मादवता । उन्मादश्च वायुजनितश्चेतसो विभ्रमः । ननु भो नैष श्रुतोऽर्थो यद्धली नामोन्मादेनाक्रान्त इति तत्कथमिति चेत्तत्राह वा अथवा मत्तेन मदिरादिसेवनजन्यं चित्तविकल्यं मदस्तद्वता । हलिना बलरामेण कर्त्रा ननु यस्य आश्रयादाश्रयमापद्य । ल्यब्लोपे पंचमी । मही पृथ्वी शीतला शान्तिमतीत्यर्थः। आसीदिति शेषः तत्त्वत्सुतकाननं त्वत्पुत्ररूपमरण्यं दग्धम् । एतस्य च दाहेन भागिनेयनाशादात्मनः पितुस्तनयनाशाच्चात्मनः पितृष्वसुर्दुःखातिशयः स्यादिति न गणितं बलभद्रेण नाप्यात्मनो बहिश्चराणां प्राणानां पाण्डवानां निधनेनात्मनो भ्रातुः श्रीकृष्णस्य मनो दुःखायेतेत्यपि विचिन्तितं नापि वार्जुनस्य विनाशेन सहोदर्यां सुभद्रायां दुःसहतरं वैधव्यं विनिपतिष्यतीत्यनुस्मृतं नापि शिष्यवधः पुत्रवधसजातीयत्वात्पापाय प्रकल्पेतेति मनसिकृतम् नापिवाऽस्य दाहेन सकलायामपि क्षितौ तापः प्रादुःष्यादिति विचारितम् । न चैतदुन्मत्तं मत्तमपि वाऽपहायान्यः कारिष्यतीत्यत उक्तं उन्मत्तेन मत्तेन वेति । आश्रयवशा

**युधिष्ठिरः**—वक्तव्यमिति ब्रवीमि । न पुनरेतावन्ति भागधेयानि नः । यदि कदाचिद्विजयी स्याद्वत्सोऽर्जुनस्तद्वक्तव्योऽस्मद्वचनाद्भवता । (ग्गा)

हली हेतुः सत्यं भवति मम वत्सस्य निधने
तथाप्येष भ्राता सहजसुहृदस्ते मधुरिपोः ।
अतः क्रोधः कार्यो न खलु यदि च प्राणिषि ततो
वनं गच्छेर्मा गाः पुनरकरुणां क्षात्रपदवीम् ॥ २८ ॥

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

---

द्रुमेः शीतलत्वोपपत्तये सुतेषु काननत्वारोपः । एतेन बलभद्रस्याविमृष्यकारित्वं द्योत्यते । महीपदं चात्र लक्षणया महीमण्डलवासिनो जनानभिधत्ते । अत्र तुरीये चरणे नैकविधाः पाठाः बहुपुस्तकसंवादात्त्वस्मदाहृत एव । यस्याश्रयादित्यत्र यच्छाययेत्यान्ध्रादृताऽपि पाठो रमणीयः । अत्र पूर्वार्धे धार्तराष्ट्रेषु नलिनीत्वारोपो भीमसेने दन्तित्वारोपस्य कारणमिति परम्परितं रूपकमलङ्कारः । उत्तरार्धे च सुतकाननमिति रूपकम् मत्तत्वस्योन्मत्तत्वस्य समर्थनसापेक्षस्य भ्रातुस्त इत्यादिना समर्थनात्काव्यलिङ्गमलङ्कारः । एतेषां च संसृष्टिः । अत्र हलिनेति हलिनेव लाङ्गलवताकृषीवलेनेव हलिना बलरामेणेत्यपि गम्यते । यथाहि कृषीवला मह्याः शीतलिमानमगणयन्तः काननं दहन्त्येवमेतेनापित्वत्सुतकाननमिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ग्गा) वक्तव्यमिति । इति हेतोः । 'विवक्षितं ह्यनुक्तमनुतापं जनयती' तिवचनादिति भावः । एतावन्ति मदुक्तार्थजननपर्याप्तसंख्याकानि । मदुक्तघटनक्षमाणीति यावत् । अत्र वक्तव्यमितीत्यत्रवाक्ये वक्तुमिच्छामीति, न इत्यत्र च युष्माकमिति क्वचित्पाठः ।

(२८) वक्तव्यमर्थं प्राह हलीति । मम वत्सस्य अनुजस्य भीमस्य निधने मरणे हली बलभद्रः हेतुः कारणं भवति अस्ति इत्येतत्सत्यं तथापि एष ते तव सहजसुहृदः नैसर्गिकस्य मित्रस्य मधुरिपोः मधुसञ्ज्ञकदैत्यशत्रोः श्रीकृष्णस्य भ्राता अतो हेतोः त्वयेति शेषः बाधा न खलु कार्यः । एवं हि सहजस्ते सुहृच्छ्रीकृष्णो दुःखायेतेति । किं तर्हि कर्तव्यमित्याह यदीति च किंच यदि प्राणिषि जीवसि ततस्तदा वनं गच्छेः प्रार्थनायां लिङ् । पुनः अकरुणां कारुण्यशून्यां क्षात्रपदवीं क्षत्राणां मार्गं मा गाः न गच्छ । इण् गतावित्यतो माङि लुङ् इति लुङ् । इणो गा लुङीति गादेशः । न माङ् योग इत्यडभावः । चतुर्विधानि किल मित्राणि भवन्ति तदुक्तं शान्तिपर्वणि राजधर्मेषु ८० तमेऽध्याये 'चतुर्विधानिमित्राणि राजन् राज्ञां भवन्त्युत । सहार्थो भजमानश्च सहजः कृत्रिमस्तथा ।'

**युधिष्ठिरः**—( अग्निं दृष्ट्वा सहर्षम् । ) कृष्णे ! ननूद्धतशिखाहस्ताहूतास्मद्विधव्यसनिजनः समिद्धो भगवान्हुताशनस्तत्रेन्धनीकरोम्यात्मानम् । **(ग्गि)**

**द्रौपदी**—पसिअदु महाराओ इमिणा अपच्छिमेण पणएण । अहं दाव अग्गदो पविसामि । प्रसीदतु महाराजोऽनेनापश्चिमेन प्रणयेन । अहं तावदग्रतः प्रविशामि । (ग्गी)

**युधिष्ठिरः**—सहितावेवाभ्युदयमुपभोक्ष्यावहे । **(ग्गु)**

**चेटी**—हा भअवन्तो लोअवाला ! परित्ताअह परित्ताअह । एसो क्खु सोमवंसराएसी राअसूअसंतप्पिदहव्ववाहो खण्डवसंतप्पिदहुदवहस्स किरीडिणो जेठ्ठो भादा सुगहीदणामहेओ महाराअजुहिट्ठिरो । एसा वि पञ्चालराअतणआ देवी वेदिमज्झसंभवा जण्णसेणी । दुवे वि णिक्करुणजलणस्स प्पवेसेण इन्ध-

---

इति तत्र सहार्थः समानकार्यवशाज्जातः । भजमानः कुलक्रमेण संगतः । सहजो भागिनेय पितृष्वस्र्रीयादिः । कृत्रिमः प्रदाय धनं कृतः । प्रकृते पुनः सहज इत्यस्य नैसर्गिक इत्येवार्थः । अन्यथा बलभद्रोऽपि सहज एव सुहृत्स्यात् । ततश्च कृष्ण एव तत्प्रयोगो नोपपद्येतेति । अत्र तृतीयः पादः 'इह क्रोधः कार्यो न खलु मयि च प्रेम भवते' त्यपि क्वचित्पठ्यते । मयि प्रेम न करणीयं प्रेमवशादनुगमनादौ न प्रवर्तनीयमित्यर्थः । एतदपेक्षया च बहुपुस्तकसंवादस्मदुपात्त एव पाठो ज्यायान् । शिखरिणी वृत्तम् ।

**(ग्गि)** कृष्णे द्रौपदि ! नन्विति स्मारणे । उद्धतेति उद्धताः समधिकप्रवृद्धा इत्यर्थः शिखा ज्वाला एव हस्तास्तैः संज्ञया आहूता अस्मद्विधाः व्यसनिनो दुःखिनो जना येन तथाभूतः । आह्वयतीवायमस्मान् ज्वालारूपैर्हस्तैरिति भावः । गम्योत्प्रेक्षेयम् । समिद्धः प्रदीप्तः । ञिइन्धी दिप्तिदेवनयोरित्यतो निष्ठा । ईदित्त्वादिण् निषेधः ।

**(ग्गी)** अनेन वक्ष्यमाणेन अहमित्यादिना । अपश्चिमेन नास्ति पश्चिमः पश्चाद्भावी यस्मात्तथाभूतः । अत्यन्तं चरम इत्यर्थः । अग्निप्रवेशे पुनः प्रार्थनायोगात् । प्रणयो याच्ञा 'प्रणयः प्रसवे प्रेम्णि याच्ञाविस्रम्भयोरपी'ति मेदिनी । पश्चिमेनेति पाठेऽप्ययमेवार्थः । प्रणयेन प्रणयपूरणेनेति यावत् । प्रकृत्यादिभ्य इति तृतीया । प्रणयमाह अहमिति ।

**(ग्गु)** अभ्युदयं अग्निप्रवेशरूपामिष्टलाभम् । उपभोक्ष्यावहेऽनुभवावः । युगपदेवाग्निं प्रविशाव इत्यर्थः ।

णीहोन्ति । ता परित्ताअह अज्जा, परित्ताअह । कधं ण को वि परित्ताअदि। (तयोरग्रतः पतित्वा ।) किं ववसिदं देवीए देवेण अ? ( हा भगवन्तो लोकपालाः परित्रायध्वं परित्रायध्वम् । एष खलु सोमवंशराजर्षी राजसूयसंतर्पितहव्यवाहः खाण्डवसंतर्पितहुतवहस्य किरीटिनो ज्येष्ठो भ्राता सुगृहीतनामधेयो महाराजयुधिष्ठिरः । एषापि पाञ्चालराजतनया देवी वेदिमध्यसंभवा याज्ञसेनी । द्वावपि निष्करुणज्वलनस्य प्रवेशेनेन्धनीभवतः तत्परित्रायध्वमार्याः । परित्रायध्वम् । कथं ? न कोऽपि परित्रायते । किं व्यवसितं देव्या देवेन च? (ग्गृ)

**युधिष्ठिरः**—अयि बुद्धिमतिके, यद्वत्सलेन प्रियानुजेन विना सदृशं तत्। उत्तिष्ठोत्तिष्ठ भद्रे! उदकमुपानय । (ग्गे)

( चेटी तथा करोति ।

**युधिष्ठिरः**—(पादौ प्रक्षाल्योपस्पृश्य च । ) एष तावत्सलिलाञ्जलिर्गाङ्गेयाय

---

(ग्गृ) **सोमेति** सोमस्यचंद्रस्यवंशे कुले राजर्षिः राजापि सन्नृषितुल्याचारः । राजसूयेति राजसूयेन राज्ञाकर्तव्येन यज्ञविशेषेण तर्पितो हव्यवाहोऽग्निर्येन तथाभूतः । खाण्डवेति खाण्डवेन नाम वनेन तर्पितो हुतवहो येन तस्य । 'श्वेतकेतोर्नरपतेर्बहुवत्सरयाजिनः । अविश्रान्तं निपीयाज्यं जाड्यं यत्प्राप पावकः ॥ पराक्रमेण तज्जिष्णोः प्रभावाच्चासुरद्विषः । तत्त्याज खाण्डवं दग्ध्वा हव्यानां चाभवत्क्षमः॥ ' इति भारतीया कथाऽत्रानुसंधेया । सुगृहीतनामधेयः प्रातः स्मरणीयनामा । 'स सुगृहीतनामा स्याद्यः प्रातः स्मर्यते बुधैः । ' इतिवचनात् । वेदिमध्यसंभवा वेद्याः यज्ञार्थं परिष्कृताया भूमेर्मध्ये संभवः प्रभवः ( उत्पत्तिस्थानं ) यस्याः सा । द्रौपदी किल याजेन नामद्रुपदपुरोहितेनज्यमानस्य पावकस्य मध्यादुत्पन्नेति महाभारते दृश्यम् । याज्ञसेनी यज्ञसेनस्यापत्यं स्त्री द्रौपदी 'पाञ्चाली पार्षती कृष्णा वेदिजा नित्ययौवना । याज्ञसेनी' ति त्रिकाण्डशेषः । व्यवसितं कर्तुं निश्चितम् । 'अथावसायः शेषे स्यात्समाप्तौ निश्चयेऽपि च ' इति मेदिनी ।

(ग्गे) वत्सलेन स्निग्धेन प्रियानुजेन प्रियेणानुजेन विना विरहितस्येत्यर्थः । सदृशं योग्यम् । वत्सलेनेत्यत्र नाथेनेति पाठस्तु न समीचीनः । उदकं जलाञ्जलिदानार्थम् । अतः परं चेट्या निष्क्रम्य जलाहरणं युधिष्ठिरेण द्रौपदीं प्रत्युदकाञ्जलिदानादेशस्तया च 'महाराज एव करोत्वहं पुनर्ज्वलनं प्रवेक्ष्यामी'ति प्रतिवचनमेवंविधोऽर्थः क्वचिदधिकः संदृश्यते सोऽयमुपेक्षणीय एव । अन्यथा हि युधिष्ठिरेण 'कृष्णे त्वमपि देहि सलिलम् ' इति द्रौपदीं प्रति वचनं तया च दास्याः सलिलमुपादायाञ्जलिप्रदानमित्यनुपपन्नमेवस्यादिति ।

भीष्माय गुरवे, प्रपितामहाय शान्तनवे, पितामहाय विचित्रवीर्याय । (सास्रम् । तातस्याधुनावसरः ! अयं तावत्स्वर्गस्थिताय सुगृहीतनाम्ने पित्रे पाण्डवे । (गै)

अद्यप्रभृति वारीदमस्मत्तो दुर्लभं पुनः ।
तात त्वयाम्बया सार्धं मया दत्तं निपीयताम् ॥ २९ ॥

---

(गै) पादाविति प्रयतत्वार्थं पादप्रक्षालनमित्याचारः । पादपदं चात्रोपलक्षणं हस्तयोर्मुखस्य च । अत्र मुखं प्रक्षाल्येत्यपि पाठः क्वचित् । तत्र मुखपदं हस्तपादयोरुपलक्षणम् । उपस्पृश्य आचम्य । अतः परं 'प्राचीनावीति' त्यान्ध्रपुस्तकपाठः । प्राचीनावीती दक्षिणस्कन्धकृतयज्ञसूत्रः । अयुक्तं चैतत् । अभ्युदयनिमित्तत्वकल्पनयैव तर्पणात् । तत्र च प्राचीनावीतत्वनिषेधात् । 'नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते' इति कात्यायनस्मरणात् । न चास्याभ्युदयिकत्वाभावः शङ्क्यः । पित्रादि क्रममपास्य गुर्वादिव्युत्क्रमस्यानुपपत्तेः । आभ्युदयिके तु व्युत्क्रमो गारुडे प्रदर्शित इति भट्टकमलाकरः प्राह । अग्निप्रवेशस्य युधिष्ठिरेणाभ्युदयत्वकल्पनं तु । 'सहितावेवाभ्युदयमुपभोक्ष्यावहे' इति युधिष्ठिरवचनादवबाद्धव्यम् । एष इति । तावदित्यादित इत्यर्थः । अनुलोमक्रमे गुरुरन्ते भवति व्युत्क्रमेतु सोपि पूर्वमिति भीष्मायैवादितः सलिलाञ्जलिः । गाङ्गेयाय गङ्गायाः पुत्राय । एष हि गङ्गायां राज्ञः शान्तनोरुत्पन्न इति । भीष्माय देवव्रतापराभिधानाय । एष च ब्रह्मचर्यमात्रवर्तितां प्रतिज्ञाय देवताभ्यो भीष्मसंज्ञां लेभे । तदाहुः 'भीषणा ते प्रतिज्ञेयं भीष्मेति प्रोचिरे सुराः ।' इति । अपरमञ्जलिं विसृजति प्रपितामहायेति । पितामहस्य पिता प्रपितामहः । पितामहस्तु पितुः पिता । शान्तनवे शान्तनुसंज्ञाय राज्ञे । अत्र शन्तनव इत्यपि पाठः । स च महाभारतविरोधादुपेक्ष्यः । अन्यमञ्जलिं ददाति पितामहायेति । विचित्रवीर्याय एतन्नाम्ने । सास्रमिति कुलक्षयवशात्पितुरतः परं जलाञ्जलिशून्यतां विभावयतोऽस्रम् । यद्यपि नेदानीं भीष्मो निर्यातस्तथापि शरशय्यामारूढो मृतप्राय एवेति मरणोत्तरमवश्यमस्मै देयं सलिलं प्रागेव प्रादायि जीवच्छ्राद्धवदिति यथाकथमपि समाधेयम् ।

(२९) अद्येति । हे तात पितः ! अद्यप्रभृति वर्तमानं दिनमारभ्य इदं जलाञ्जलिरूपं वारि अस्मत्तो दुर्लभं दुष्प्रापम् । अस्माकमग्नौ प्रविष्टत्वादिति भावः । अतः मया दत्तं इदं वारीति संबध्यते अम्बया अस्मन् मात्रा कुन्त्या सार्धं सह निपीयताम् । अत्र वारीदामित्यत्र वा दत्तमिति पाठः स च न युक्तः उत्तरार्धे दत्तमित्युक्तेः पौनरुक्त्यापातात् । त्वयाम्बयेत्यत्र माद्र्यम्बयेपि क्वचित् । माद्री युधिष्ठिरस्य सापत्नमाता । अयमपि पाठो माद्र्यासहितयाऽम्बयेति विग्रहात् कथञ्चित्संगच्छमानोऽपि कुन्त्यामेव मातृपदप्रयोगेण युधिष्ठिरे वैषम्यमारोपयतीति परित्याज्यः । न च माद्र्याः सलिलाञ्जलेरप्रदानान्न्यूनत्वम् ।

एतज्जलं जलजनीलविलोचनाय

भीमाय भोस्तव ममाप्यविभक्तमस्तु ।

एकं क्षणं तु विषहस्व पिपासितोऽपि

पातुं त्वया सह जवादयमागतोऽस्मि ॥ ३० ॥

---

साक्षात्पुत्राभ्यां नकुलसहदेवाभ्यां तस्य कर्तुं शक्यत्वेनात्रोपेक्षणात् । यद्वाऽस्मदादृते पाठेऽम्बापदं माद्रीपरमेवेति मन्तव्यम् । कुन्त्या जीवत्त्वेन सलिलदानानर्हत्वादिति । माद्याम्बयेति पाठस्तु साधुः । तत्र चाम्बेति माद्या विशेषणम् । न चैतदभिप्रायेणैव माद्यम्बयेति पाठ इति भ्रमितव्यम् । अम्बापदस्योपसर्जनत्वेन प्राक्प्रयोगस्यावश्यकत्वात् पथ्यावक्त्रं वृत्तम् ।

(३०) भीमाय जलाञ्जलिमर्पयति । व्युत्क्रमत्वादेवचायमन्तलो भ्रात्रे जलाञ्जलिः । एतदिति । एतत् जलं जलजनीलविलोचनाय जलजे साधारणधर्मानुरोधात् नीलकमले इव विलोचने नेत्रे यस्य तस्मै भीमाय । दत्तमिति शेषः । भीमं संबोध्य प्रार्थयते भो इति । भो अयि भीम एतदित्यनुबध्यते एतत्तुभ्यं मया दत्तं जलं तव मम च अविभक्तं अकृतविभागं अस्तु । उभयोरप्येतद्भवतु नैतद्विभज्यतामित्याशयः । ननु भो जीवतस्तव किमनेन जलेनेति चेत्तत्राह । तु यद्यपि नाहमिदानीं तत्र संनिहितस्तथापीत्यर्थः । पिपासितः पातुमिच्छा पिपासा तृष्णा संजाताऽस्मिंस्तथाभूतोऽपि संजाततृष्णः सन्नपि एकं क्षणं विषहस्व मर्षय । पिपासामित्यर्थात् संबध्यते । किमेतेनेत्यत्राह पातुमिति । अयं एतदवस्थ एवाहं त्वया सह । एतज्जलमित्यर्थात्संबध्यते । एतज्जल पातुं जवात् वेगात् आगतोऽस्मि । वर्तमानसामीप्ये भविष्यति लट् । अतो विषहस्व सहपानार्थमेव चाविभक्तमस्त्विति भावः । अत्र नीलेत्यत्र ताम्रेति क्वचित्क्वचित्पुनर्लीलेति पाठः । आद्यः स्पष्टः । द्वितीये जलजस्येव लीला शोभेति यावत् ययोस्तथाभूते विलोचने यस्येत्यर्थः । भीमायेत्यादौ च 'भीमप्रियस्य मम चाप्यविभक्तमस्त्वि' ति क्वचित्पठ्यते । तत्र युक्तं भीमप्रियस्येत्यस्य दुरुपपादत्वात् । 'तु विषहस्वे' त्यत्र च 'विरम वत्से' ति क्वचित्पाठः । अयमपि न युक्तः । विरामो हि आरब्धाद्विनिवृत्तिः । न च सलिलपानं भीमेनारब्धमिति । विषह वत्सेत्यपि पाठः क्वचित् । तत्र सहते श्चौरादिकाल्लट् । आधृतीयत्वाण्णिचिविकल्पः । अयमित्यत्र चाहमिति क्वचित् । अस्मिन्नैवाहमः संग्रहादुपेक्षणीयोयम् । अविभागविषहणयोस्तुरीयपादेन हेतुनिर्देश इति वाक्यार्थगतहेतुकं काव्यलिङ्गमलङ्कारः । वसन्ततिलकावृत्तम् ।

अथवा सुक्षत्रियाणां गतिमुपगतं वत्समहंमृतोऽप्यकृती द्रष्टुम् । वत्स भीमसेन! (ग्गो)

> मया पीतं पीतं तदनु भवताम्बास्तनयुगं
> मदुच्छिष्टैर्वृत्तिं जनयसि रसैर्वत्सलतया ।
> वितानेष्वप्येवं तव मम च सोमे विधिरभू-
> न्निवापाम्भः पूर्वं पिबसि कथमेवं त्वमधुना ॥ ३१ ॥

कृष्णे! त्वमपि देहि सलिलाञ्जलिम् ।

---

(ग्गो) सुक्षत्रियाणां गतिं सूर्यमण्डलभेदनरूपाम् । 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥' इति भगवतोक्तेः । सुक्षत्रियाणामित्यात्मनि सुक्षत्रियत्वाभावो व्यज्यते । अकृती अकुशलः । असमर्थ इति यावत् । 'परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ।' इत्युक्तेः । 'कृती कुशल इत्यपी' त्यमरः । द्रष्टुमिति द्रष्टुमपि न समर्थः किं पुनस्तेन सहोदकं पातुमिति भावः । अत्र मृतोऽपीत्यत्र उपगतोऽपीत्यपि पाठः । स च न युक्तः उपगमने दर्शनस्य प्रतिबन्धुमशक्यत्वात् । समागमाभावस्यैवात्रोपपादयितुमिष्टत्वात् ।

(३१) निवापोदकस्य प्राक्पानं प्रतिषेधति मयेति । मया पीतं प्राशितं अम्बास्तनयुगं मातुस्तनद्वितयं तदनु मत्कृतपानोत्तरं भवता पीतम् । अत्र स्तनयुगपदं स्तनयुगजन्ये पयसि लाक्षणिकम् । नात्र पीतं पीतमिति कथितपदत्वं दोषः । विहितस्यानुवाद्यत्वे तस्य दोषाभावात् । उदेति सविता ताम्रस्ताम्र एवास्तमेति चे' तिवत् । पीतमित्यत्र पूर्वमित्यपि क्वचित्पाठः । वत्सलतया स्निग्धत्वात् मदुच्छिष्टैः मया भुक्तशेषैः रसैर्मधुरादिभिः रसवद्भिर्भोज्यद्रव्यैरित्यर्थः । वृत्तिं उपजीविकां जनयसि संपादयसि । वर्तमानसामीप्ये भूते लट् । वितानेषु यज्ञेष्वपि सोमे सोमरसविषये । सोमश्च वल्लीविषयः । तद्रसेपि रूढः सोमशब्दः । एष च यागविशेषेषु पीयते । एवं ईदृश एव पौर्वापर्यरूप एव तव मम च विधिः अभूत् । यागेष्वपि मया प्राक् तदुत्तरमेव च भवता सोमः पीत इत्यर्थः । अधुना त्वमेव निवापाम्भः प्रेतोद्देशेन दीयमानं जलं पूर्वं कथं पिबसि । पूर्वक्रमविरुद्धत्वान्नैतद्युक्तमिति भावः । कथमेवमित्यत्र मम वत्सेति क्वचित्पाठः । तत्र पिबसीति प्रश्ने काकुः । ननु भो वितानेषु बन्धुभिः सह सोमपाने प्रायश्चित्तं स्मर्यते 'बन्धुभिः सह यो होता सोमं पीत्वा महाक्रतौ । स्वमन्त्रोच्चारणं कुर्वन् त्रिवारं शुद्धिमाप्नुयात् ।' इति । सत्यं तथापि विहितं युधिष्ठिरेणेदं

**द्रौपदी**—हञ्जे बुद्धिमदिए! उवणेहि मे सलिलम् । (हञ्जे बुद्धिमतिके, उपनय मे सलिलम्। (ग्गौ)

(चेटी तथा करोति )

**द्रौपदी**—(उपसृत्य जलाञ्जलिं पूरयित्वा। महाराअ! कस्स सलिलं देम्हि। ( महाराज, कस्य सलिलं ददामि ।

**युधिष्ठिरः**—

तस्मै देहि जलं कृष्णे सहसा गच्छते दिवम् ।
अम्बापि येन गान्धार्या रुदितेषु सखीकृता ॥ ३२ ॥

**द्रौपदी**—णाह भीमसेण! परिअणोवणीदं उदअं सग्गगदस्स दे पादोदअं होदुएदं । ( नाथ भीमसेन! परिजनोपनीतमुदकं स्वर्गगतस्य ते पादोदकं भवत्वेतत् । (ग्गं)

---

प्रायश्चित्तं तु पश्चादाचरितं स्यात्। सोमसवनादिविधिस्तु वैतानिके द्रष्टव्यः । सोमश्च न मादकं द्रव्यं प्रत्युत जराव्याधिहरत्वाद्रसायनमिति सुश्रुतादिषु द्रष्टव्यम् । तत्स्वरूपाद्यपि तत्रैव । एतस्य च पत्राणि शुक्लपक्षे चन्द्रमसः कला इवाभिवर्धन्ते कृष्णे च क्षयमापद्यन्त इत्यपि तत्रैव । संप्रति पुनः सूयमानो यज्वभिः प्रायशः सोमस्य प्रतिनिधिर्भवति । शिखरिणीवृत्तम् ।

(ग्गौ) अत्र तत्रभवते भीमायेत्यधिकः क्वचित्पाठः। स च न युक्तः उत्तरलसतस्य द्रौपदीप्रश्नस्यानुपपत्तेः ।

(३२) कस्मै सलिलं देयमित्याह तस्मा इति । हे कृष्णे द्रौपदि ! येन अम्बा अस्मन्माता कुन्त्यपि रुदितेषु रोदनक्रियासु । नपुंसके भावे क्तः । गान्धार्या दुर्योधनमातुः सखी तुल्या कृता । यथा पुत्रनाशाद्गान्धारी रोदित्येवं यन्नाशादम्बा रोदितीत्यर्थः । सखिशब्दोऽत्र सादृश्यवाची तदुक्तमलङ्कारशेखरे 'इवाद्यैः प्रतिमानाद्यैः समानाद्यैर्विभादिभिः । बन्धुचोरादिवंशाद्यैः स दृश्यप्रतिपत्तयः ॥ इति । बन्ध्वादीनाह स एव 'बन्धुर्मित्रं वयस्यश्च प्रेयान्प्रीतः सखा सुहृत् ।' इति । तस्मै सहसा अकस्मात् दिवं गच्छते जलं देहि । भीमाय जलं देहीत्यर्थः । गान्धारीरुदितेष्विति समस्तपाठस्तु न मनोरम इत्युपेक्षितः पथ्यावक्त्रं वृत्तम् ।

(ग्गं) परिजनोपनीतं एतदुदकं पादोदकं पादप्रक्षालनार्थमुदकं । शाकपार्थिवादित्वात्समासः ।

**युधिष्ठिरः**—फाल्गुनाग्रज !

असमाप्तप्रतिज्ञेऽस्तं गते त्वयि महाभुजे ।
मुक्तकेश्यैव दत्तस्ते प्रियया सलिलाञ्जलिः ॥ ३३ ॥

**द्रौपदी**—उट्ठेहि महाराअ ! दूरं गच्छदि दे भादा । ( उत्तिष्ठ महाराज ! दूरं गच्छति ते भ्राता । ) ( ग्गः )

**युधिष्ठिरः**—( दक्षिणाक्षिस्पन्दनं सूचयित्वा । ) पाञ्चालि ! निमित्तानि मे कथयन्ति संभावयिष्यसि वृकोदरमिति । ( ग्य )

**द्रौपदी**—महाराअ ! सुनिमित्तं होदु । ( महाराज ! सुनिमित्तं भवतु । )

( नेपथ्ये कलकलः । )

( प्रविश्य संभ्रान्तः )

**कञ्चुकी**—परित्रायतां परित्रायतां महाराजः । एष खलु दुरात्मा कौरवापसदः क्षतजाभिषेकपाटलिताम्बरशरीरः समुच्छ्रितदिग्धभीषणगदापाणिरुद्यतकालदण्ड इव कृतान्तोऽत्रभवतीं पाञ्चालराजतनयामितस्ततः परिमार्गमाण इत एवाभिवर्तते । ( ग्या )

---

(३३) असमाप्तेति । महाभुजे पराक्रमशालिनीत्यर्थः । त्वयि असमाप्तप्रतिज्ञे न समाप्ता पूर्णा प्रतिज्ञा दुर्योधनोरुभङ्गपूर्वकं द्रौपद्याः केशसंयमनं करिष्यामीत्येवंरूपा यस्य तथाभूते अस्तं नाशं गते सति ते प्रियया द्रौपद्या मुक्तकेश्या मुक्ता असंयताः केशा यस्यास्तथाभूतयैव ते तुभ्यं सलिलाञ्जलिः दत्तः । न किल त्वयेवापरेण त्वद्भ्रात्रा प्रतिज्ञाय निहत्य दुर्योधनं संयम्य च केशान्निराकृतमेतस्याः परिभवव्यसनमिति धिगेतानस्मानिति भावः । अत्र असमाप्तप्रतिज्ञेऽपीति क्वचित्पाठः । तत्रापिशब्दो व्यर्थः । दत्तस्त इत्यत्रापि दत्तोऽद्येति क्वचित्पाठः । नैष बहुपुस्तकसंवादीत्युपेक्षितः । पथ्यावक्त्रंवृत्तम् ।

(ग्गः) उत्तिष्ठ अग्निप्रवेशार्थमिति भावः । कुत इत्याह दूरमिति । भ्राता भीमः ।

(ग्य) दक्षिणेति । दक्षिणस्य अक्ष्णो नेत्रस्य स्पन्दनं स्फुरणम् । सूचयित्वा अभिनयेन ज्ञापयित्वा । निमित्तानि दक्षिणाक्षिस्पन्दनादिरूपाणि चिह्नानि कर्तॄणि मे मह्यं कथयन्ति विस्पष्टं सूचयन्तीत्यर्थः । कथितमर्थमाह संभावयिष्यसीति । संभावयिष्यसि साक्षात्कृत्य सत्करिष्यसीत्यर्थः । अत्र संभावयिष्यसीत्यत्र अहतमिति पाठः इतीति त्वत्र नास्ति । क्वचित्तु 'भवतु शीघ्रं दहनमुपसर्पाव' इत्यधिकम् ।

(ग्या) संभ्रान्त इति । संग्रामात्प्रत्यवर्तमानं विजयिनं भीमसेनं दुर्योधन इति संभावयतः संभ्रमः । कुतस्त्रातव्यमित्याह । एष इति । कौरवापसदः अपसदो

**युधिष्ठिरः**—हा दैव ! ते निर्णयो जातः। हा गाण्डीवधन्वन् ! ( इति मुह्यति। ) ( ग्यि )

**द्रौपदी**—हा अज्जउत्त ! हा मम सअंवरसअंगाहदुल्ललिद ! पिअं भादुअं अणुगदोसि; ण उण महाराअं इमं दासजणं अ। ( इति मोहमुपगता। ) ( हा आर्यपुत्र ! हा मम स्वयंवरस्वयंग्राहदुर्ललित ! प्रियं भ्रातरमनुगतोऽसि; न पुनर्महाराजमिमं दासजनं च। ) ( ग्यी )

**युधिष्ठिरः**—हा वत्स सव्यसाचिन् ! हा त्रिलोचनाङ्गनिष्पेषमल्ल ! हा निवातकवचोद्धरणनिष्कण्टकीकृतामरलोक ! हा बदर्याश्रममुनिद्वितीयतापस ! हा द्रोणाचार्यप्रियशिष्य ! हा अस्त्रशिक्षाबलपरितोषितगाङ्गेय ! हा राधेय-

---

नीचः कौरवः। कुत्सितानि कुत्सनैरिति समासः। कौरवेष्वपसद इति वा। क्षतजेत। क्षतजस्य रक्तस्याभिषेकेण पाटलितं श्वेतरक्तीभूतं अम्बरं वस्त्रं शरीरं च यस्य तथाभूतः। 'श्वेतरक्तस्तु पाटल' इत्यमरः। क्वचित्पुनरत्र शरीरपदं नास्ति। तन्नयुक्तं, 'निहितमिदमसृक् चन्दनाभं निजाङ्गे' इत्युत्तरत्र वचनेन शरीर एव क्षतजाभिषेकात्। अभिषिक्तस्य च पाटलत्वाभावासंभवात्। समुच्छ्रिता या दिग्धा रक्तेन लिप्ता भीषणा भीत्युत्पादिका च गदा सा पाणौ यस्य सः। उद्यतः कालदण्ड आयुधविशेषो येन तथाभूतः कृतान्तो यम इव वर्तमानः। कालदण्डश्च यमेन धार्यमाण आयुधविशेषः। 'कालदण्डाद्यमो दण्डं पाशं चाम्बुपतिर्ददौ।' इति चण्डी। परिमार्गमाणः आन्विच्छन्। अतः परमपि परित्रायतामित्यादिः क्वचित्पाठः। गदापाणिरित्यत्र गदाशनिरिति गदाशक्तिरित्यपि च क्वचित्पठ्यते। तन्न मनोरमं, दुष्टत्वात्।

(ग्य) निर्णयः स्वरूपस्य निश्चयः। दुर्योधनस्य विजयेन सर्वथोत्सन्नाः स्म इति भावः। अर्जुनमरणं संभावयन् शोचति हा गाण्डीवधन्वन् हा अर्जुन।

(ग्यी) ममेति कर्तरि षष्ठी। तस्याश्च स्वयंग्राहेण संबन्धः। मत्कर्तृको यः स्वयंवरे स्वयंग्राहः स्वयंपतित्वेन ग्रहणं स एव दुर्ललितं दुःखहेतुर्ललितं ईप्सितं यस्य तथाभूत। लल ईप्सायामित्यतो भावे क्तः। अत्र स्वयंवरस्वयंग्राहकुटुम्बकेति—कुटुम्बिन्निति च बहुषु पुस्तकेषु संदृश्यते पाठः। तत्र पुनर्ममेति निरर्थकमिति द्रष्टव्यम्। अर्थस्तु स्वयंवरे स्वयंवरणोत्सवे स्वयमात्मना गृह्यत इति स्वयं ग्राहः। तादृशः कुटुम्बः कलत्रं येनेति चक्रवर्तिना प्रोक्तः। अस्य च साधुत्वासाधुत्वयोः सुधियः प्रमाणम् ! प्रियं भ्रातरं भीमम्। इमं मत्स्वरूपम्। अत्र 'प्रियं भ्रातरं वृकोदरं संभावयासि न पुनरम्बाजनमिमं च' त्यपि क्वचित्पाठः। अतः परं 'कञ्चुकी—देवसमाश्वसिहि' इत्यान्ध्रपुस्तकपाठः। युक्तश्चायम्।

कुलकमलिनीप्रालेयवर्ष ! हा गन्धर्वनिर्वासितदुर्योधन ! हा पाण्डवकुलकमलिनी राजहंस ! ( ग्यु )

> तां वत्सलामनभिवाद्य विनीतमम्बां
> गाढं च मामनुपगुह्य मयाप्यनुक्तः ।
> एतां स्वयंवरवधूं दयितामदृष्ट्वा
> दीर्घप्रवासमयि तात ! कथं ग ते ? ॥ ३४ ॥

---

( ग्यु ) हा इति । अतः प्राक् ' संज्ञां लब्ध्वे ' ति पाठ आवश्यकः । मोहं गतो युधिष्ठिर इति हि प्रागुक्तम् । वत्सेत्यारभ्य मल्लेत्यन्ते असदृशमल्लेत्यपि क्वचित्पाठः । स च न युक्तः असदृशमल्लतयार्जुनस्य प्रसिद्ध्यभावात् । त्रिलोचनेति त्रिलोचनस्य शङ्करस्य अङ्गानां निष्पेषे मल्लः अर्जुनो हि किरातवेषेणोपागतेन भगवता शङ्करेण साकं बाहुभ्यां युयुधे । वर्णितं चैतत्क्षेमेन्द्रेण ' उरस्तटविनिष्पेषैर्वज्रसाराङ्गयोस्तयोः । उद्भूद्धूमलेखाङ्कस्फुलिङ्गशबलोऽनलः ॥ ' इति ॥ निवातेति । निवातमभेद्यं कवचं येषां ते निवातकवचा एतत्संज्ञा दैत्याः तेषामुद्धरणेन निर्मूलनेन निष्कण्टकीकृतः शत्रुशून्यतां नीतः अमरलोको देवलोको येन तथाभूत । निवातकवचवधवृत्तान्तस्तु महाभारते वनपर्वणि द्रष्टव्यः । बदर्याश्रमो बदरिकाश्रमः बदरीवृक्षाचिह्नितत्वाच्चेयमेतत्संज्ञा । तत्र यौ मुनी नरनारायणौ तयोर्मध्ये द्वितीयो नराख्यस्तापसः । अर्जुनो हि नरावतार इति । मुनिशब्दात्र षष्ठी किन्तु निर्धारणे सप्तमीति बोद्धव्यम् । राधेयेति राधेयस्य राधायाः पुत्रस्य कर्णस्य कुलं बंश एव कमलिनी कमलवल्ली तस्याः प्रालेयवर्षं हिमवृष्टिभूत । हिमवृष्ट्या किल कमलिन्यो विनश्यन्तीति प्रासिद्धिः । ' तुषारस्तुहिनं हिमम् । प्रालेयं मिहिका चाथे ' त्यमरः । गन्धर्वेति गन्धर्वेभ्यो निर्वासितो मोचितो दुर्योधनो येन तथाभूत । पाण्डवानां कुलमेव कमलिनी तस्या राजहंस । परम्परितरूपकमलङ्कारः ।

( ३४ ) उल्लङ्घितः किलाचारो भवतेत्याह । तामिति । अयीति कोमलामन्त्रणे तात वत्स अर्जुन । तां प्रथितां वत्सलां स्निग्धां अम्बां मातरं कुन्तीं अनाभिवाद्य अनमस्कृत्य च किंच मां गाढं यथातथा अनुपगुह्य अनालिङ्गय । उपपूर्वो गूहतिरालिङ्गने । मया ज्यायसा भ्रात्रेति भावः । अनुक्तः अननुमोदितः । एतां पुरो वर्तमानां स्वयंवरवधूं स्वयं स्वेच्छानुसारं व्रियतेऽस्मिन्पतिरिति स्वयंवरः तेन वधूर्भार्या । स्वयं त्वां वृतवतीं भार्यामित्यर्थः । एतेन गुणानुरक्तत्वादस्याः प्रणयाविषयस्त्वामिति व्यज्यते । तवाप्येषा प्रियेत्याह दयितामिति दयितां भवदीयप्रेमविषयीभूताम् । एतेनादर्शनस्यानुचितत्वमभिव्यज्यते । अत्र सदृशीमित्यपि क्वचित्पाठः । सदृशीं योग्याम् । अदृष्ट्वा असाक्षात्कृत्य दीर्घप्रवासं दीर्घः कालिकावधिशून्य इति यावत् प्रवासः तम् । कथं गतोऽसि ? नैतद्भवादृशानां युक्तमिति भावः ।

( मोहमुपगतः )

कञ्चुकी—कष्टं भोः कष्टम् । एष दुरात्मा कौरवाधमो यथेष्टमित एवाभिवर्तते । सर्वथायमेव कालोचितः प्रतीकारः । चितासमीपमुपनया-म्यत्रभवतीं पाञ्चालराजतनयाम् । अहमप्येवमेवानुगच्छामि । (चेटीं प्रति) भद्रे! त्वमपि देव्या भ्रातरं धृष्टद्युम्नं नकुलसहदेवौ वाऽवाप्नुहि । एवमवस्थिते महा-राजेऽस्तमितयोर्भीमार्जुनयोः कुतोऽत्र परित्राणाशा ? ( न्यू )

( नेपथ्ये कलकलानन्तरम् )

भो भोः समन्तपञ्चकसंचारिणः । क्षतजासवमत्तयक्षराक्षसपिशाचगृध्रज-

---

( न्यू ) किमेतत्कष्टमित्याह एष इति । दुरात्मा दुष्टहृदयः । एतेनावश्यमत्र करणीयः प्रतीकार इति द्योत्यते । अयं वक्ष्यमाणः । प्रतीकारमाह चितासमीपमिति । उपनयामि नयामि । उपसर्गोऽत्र धात्वर्थानुवर्ती । समीपं गता ह्येषा समुपस्थितमात्र एव दुर्योधनेऽग्निं प्रवेक्ष्यतीति भावः । आत्मनो विषय आह अहमिति । एवमिति यथा द्रौपदी तथैव । चेटीं प्रत्याह भद्रे इति । अवाप्नुहि प्राप्नुहि परित्राणार्थिनो त्याशयः । कुत एवमित्याह महाराजे युधिष्ठिरे एवमवस्थे एवं ईदृशी अवस्था यस्य तथाभूते मूर्छामनुप्राप्ते सतीत्यर्थः । अस्तमितयोर्मृतयोः सतोः । अत्रादितः चेटींप्रतीति क्वचित्पाठः । स चाचारविरोधीत्युपेक्षितः । कष्टम्भो इत्यतः प्रागिदानीमित्याधिकं क्वापि तदप्यमनोरमामिति त्यक्तम् । कौरवाधम इत्यत्र सुयोधन इत्यपि क्वचित् । एतदपेक्षया च कौरवाधम इत्येवोचितम् । तिरस्कारातिशयाभिव्यञ्जकत्वात् । यथेष्टमित्यतः परं 'इहैव प्रवर्तत' इति क्वचित् । एव कालोचितः प्रतीकार इत्यत्र च प्रवेशकाल इति क्वचित्पाठः । चितासमीपमित्यत्र च 'भद्रे बुद्धिमतिके ! चितासमीपमुपनयात्र-भवतीं पाञ्चालराजतनयाम् ।' इति ततः परं च 'चेटीं प्रती' ति पाठः । एतेन च चेटीबुद्धिमतिकयोर्भेदः स्फुटीभवति' स चायुक्त इत्यत एवोपेक्षितोऽयं पाठः । किंच कञ्चुकिना संभ्रमावसरे स्वयमननुष्ठाय चेटीं प्रति द्रौपद्याश्चितासमीपनयनादेशो नौचि-त्यमावहतीत्यपि द्रष्टव्यम् । अवाप्नुहीत्यत्र ब्रूहीति क्वचित् । त एतद्वृत्तमिति शेषः । यद्यपि भीमेन क्षिप्तं भूमौ दुर्योधनगात्रं तथापि नाद्यापि स मृतः । धृष्टद्युम्नवधोत्तर मेव हि तस्य स्वर्गगमनमुपवर्णितम् । तदेतत्सौप्तिकपर्वणि द्रष्टव्यम् । अत एव च धृष्ट-द्युम्नमवाप्नुहीत्यादेशः । कुतोऽत्र परित्राणाशेत्यत्र कुतो नु परित्राणमिति क्वचित् । अथ वेति क्वचिन्नास्ति । अतः परं 'चेटी—परित्रायध्वं परित्रायध्वमार्याः ।' इत्यधिकं क्वापि । नैतद्बहुषु पुस्तकेषु संदृष्टम्

म्बूकवायसभूयिष्ठा विरलयोधपुरुषाः कृतमस्मद्दर्शनत्रासेन। कथयत कस्मिन्नु-द्देशे याज्ञसेनी संनिहितेति । कथायाम्युपलक्षणं तस्याः । ( ग्ये )

ऊरू करेण परिघट्टयतः सलीलं
दुर्योधनस्य पुरतोऽपहृताम्बरा या ।
दुःशासनस्य करकर्षणभिन्नमौलिः
सा द्रौपदी कथयत क्व पुनः प्रदेशे ? ॥ ३५ ॥

---

( ग्ये ) समन्तपञ्चकं समन्ताद्भार्गवकृतं रक्तह्रदपञ्चकं यस्य तथाविधः प्रदेश-विशेषः तत्र संचरन्ति तथाभूताः । क्षतजेति क्षतजं शोणितमेवासवं मद्यं तेन तत्पा-नेनेत्यर्थः मत्ताः चित्तविभ्रमं प्राप्ता यक्षा राक्षसाः पिशाचाः गृध्राः पक्षिविशेषा जम्बूका गोमायवः वायसाः काकाश्च ते भूयिष्ठा येषु तथाभूताः । विरला योधा यो-द्धारो येषु तथाभूताः पुरुषा इति संबोधनम् । अस्मद्दर्शनतो यस्त्रासो भयं तेन कृतं अलम् । अत्र ' क्षतजास्वादमत्तयक्षराक्षसपिशाचभूतवेतालकङ्कगृध्रजम्बूकोलूकवाय-सभूयिष्ठावशिष्टविरलाश्च योधाः ' इत्यपि क्वचित्पाठः । तत्र चकारो व्यर्थः । पुरा किल जगत्सृजता धात्रा क्षुत्क्षामाः केऽपि प्राणिनो विनिर्मिताः । तेष्वेके खादितुकामा ब्रह्मा-णमभ्यधावन् । ते यक्षाः । यक्षेति हि खादनार्थको धातुः । अपरे तु ' मैवं भोः, रक्ष्यतामेषः । ' इत्याहुः स्म । ते राक्षसाः रक्षणार्थको हि रक्षतिः स्मर्यते । एतच्च विष्णुपुराणे प्रथमेंऽशे पञ्चमाध्याये द्रष्टव्यम् । पिशाचास्तु पिशिताशिनो देवयोनिवि-शेषाः । पिशितं ह्यमी अश्नन्ति । पृषोदरादित्वाच्च साधुता पिशाचशब्दस्य । भूतास्तु क्रोधात्मानो देवयोनिविशेषाः । तदुक्तं विष्णुपुराणे ' ततः क्रुद्धो जगत्स्रष्टा क्रोधात्मानो विनिर्ममे । वर्णेन कपिशेनोग्रा भूतास्ते पिशिताशिनः ॥ ' इति । वेताला भूताविष्टाः शवाः । वे वायौ तालःप्रतिष्ठा येषां ते देवयोनिविशेषाः इति किल भानुदीक्षितः प्राह । कथयतेत्यतःपरं भवन्त इति क्वचित्पाठः । स न युक्तः । भवतो मध्यमपुरुषायोगात् । उद्देशे प्रदेशे । सन्निहिता समीपवर्तिनी अवस्थितेति यावत् । कथयामीत्यत्र किं कथ-यामीति क्वचित्पठ्यते । तत्र किमिति प्रश्ने । पाठः पुनरयं न मनोरमः । उपलक्षणं उपलक्ष्यते आपाततो ज्ञायतेऽनेन तत् ' आपाततो ज्ञानसाधनं चिह्नम् ।

( ३५ ) उक्तं किलास्या उपलक्षणं कथयामीति । तच्च ज्ञानसाधनमित्यवो-चाम । अस्थिरं पुनरेतद्भवति । यथा काकाधिष्ठितत्वादि सदनादेः । द्विविधं चैत-त्साधनं ज्ञानस्य । साक्षात् साधनं परम्परया चेति । दर्शनादिकं साक्षात् । परम्प-रया तु वृत्तादि । तद्धि प्रश्नादिनाऽवगतमात्मनो विषयीभूतं ज्ञानविषयतां नयतीति । तदेतद्द्विविधमप्याचष्टे । ऊरू इति । या द्रौपदी करेण ऊरू आत्मनःसक्थिनी सलीलं साडम्बरं ' निर्जिताः पाण्डवाः इदानीमारोहत्वत्रेयामि ' ति संकेता[illegible]न परिघट्टयतः आस्फालयतो दुर्योधनस्य पुरतः अपहृताम्बरा अपहृतवस्त्रा । एतेन परम्परितमुप-

कञ्चुकी—हा देवि यज्ञवेदिसंभवे ! परिभूयसे संप्रत्यनाथा कुरुकुल-कलङ्केन । ( ग्यै )

युधिष्ठिरः—( सहसोत्थाय ) पाञ्चालि! न भेतव्यं न भेतव्यम् । कः कोऽत्र भोः! । सनिषङ्गं मे धनुरुपनय । दुरात्मन्दुर्योधनहतक ! आगच्छ । अपनयामि ते गदाकौशलसंभृतं भुजदर्पं शिलीमुखासारेण । अन्यच्च रे कुरुकुलाङ्गार!( ग्यो )

प्रियमनुजमपश्यंस्तं जरासंधशत्रुं
कुपितहरकिरातायोधिनं तं च वत्सम् ।
त्वमिव कठिनचेताः प्राणितुं नास्मि शक्तो
ननु पुनरपहर्तुं बाणवर्षैस्तवासून् ॥ ३६ ॥

---

लक्षणमभिहितम् । अपरमाह दुःशासनस्येति दुःशासनस्य करेण यत्कर्षणमाकर्षणं तेन भिन्नो विश्लेषितो मौलिर्धम्मिल्लो यस्यास्तथा भूता । अग्रथितवेणीकानेव मूर्धजान् धारयन्तीत्यर्थः । अत्र दुःशासनेन कचेत्यादिः पाठः क्वचिद्दृश्यते । तत्र दुःशासनेनेति अपहृतेत्यनेनापि संबध्यते । एवंविधा या द्रौपदी सा क्व कस्मिन् प्रदेशे । अस्तीति शेषः । कथयत । पुनरिति प्रश्ने । निपातानामनेकार्थत्वात् । ' मौलिः किरीटे धम्मिल्ले ' इति मेदिनी । अत्र ऊरू इत्यत्रोरुमिति करेत्यत्र च कचेति क्वचित्पाठः । बहुसम्मतः पुनरस्मदादृत एव । वसन्ततिलकावृत्तम् ।

( ग्यै ) यज्ञवेदिसंभवे इति परिभवानर्हत्वं द्योत्यते । अनाथा परित्रातृशून्या । कुरुकुलकलङ्केन कुरुवंशलाञ्छनेन दुर्योधनेन । अत्र कुरुकुलकेतुना दुय केनेत्यपि पाठः । तत्र केतुर्धूमकेतुः । तद्विनाशहेतुत्वात् । हतको निन्द्यः ।

( ग्यो ) कः कोऽत्रभो इति क्वचिन्नास्ति । आवश्यकं त्वेतत् अन्यथाह्ययं द्रौपदीं प्रत्येवादेशः स्यात् । सनिषङ्गं तूणीरसहितम् । ' तूणोपासङ्गतूणीरनिषङ्गा ' इत्यमरः । संभृतो जनितः । ' संभूतं ' इत्यपि पाठः । शिलीमुखासारेण बाणधारासंपातेन । बाणवृष्ट्येत्यर्थः । ' पत्रीष्वजिह्मगशिलीमुखकङ्कपत्ररोपा ' इति बाणपर्यायेषु हैमः । कुरुकुलस्याङ्गार इव दाहकः कुरुकुलाङ्गारः ।

( ३६ ) प्रियमिति । तं प्रियं जरासन्धशत्रुं प्रियमनुजं भीमं च कुपितहरकिरातायोधिनं हरः शङ्कर एव किरातो भिल्लः हरकिरातस्तेन सहायुध्यत इति तथाभूतम् । अर्जुनः किल पाशुपतास्त्रलाभाय तपस्यन् किरातवेषमालम्ब्यागतेन श्रीशङ्क[illegible] [illegible]युध इति वनपर्वगता कथात्रानुसन्धेया । तं वत्समनुजं अर्जुनं अपश्यन् अह[illegible] [illegible]षः कठिनचेताः कठोरहृदयः । एष च बन्धुनाशेऽपि प्राणने हेतुः । त्वामिव [illegible] तथा प्राणितुं जीवितुं शक्तः नास्मि । यथा त्वं बन्धुनाशं पश्यन्नपि जीवासि नैवमहं जीवितुं समर्थ इत्यर्थः । पुनः परंतु बाणवर्षैः बाणवृष्टिभिः करणभूताभिः

( ततः प्रविशति गदापाणिः क्षतजसिक्तसर्वाङ्गो भीमसेनः )( ग्यौ )

**भीमसेनः**—नन्नु भोः समन्तपञ्चकसंचारिणः!

नाहं रक्षो न भूतो रिपुरुधिरजलाह्लादिताङ्गः प्रकामं

निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।

भो भो राजन्यवीराः समरशिखिशिखादग्धशेषाः कृतं व-

स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥ ३७ ॥

कथयन्तु भवन्तः कस्मिन्नुद्देशे पाञ्चाली तिष्ठति? ।

---

तव असून् प्राणान् । पुंसि भूम्न्यसवः प्राणा इत्यमरः । अपहर्तुं ननु नूनम् । शक्तोऽस्मीत्यनुवर्तते । नञ् पुनरत्र नानुवर्तते । अत्र शत्रुमित्यत्र मल्लमिति किरातायोधिनमित्यत्र च किरातद्वेषिणामिति नन्वित्यत्र च न चेति पठन्ति केचित् । तत्र न चेति पाठे नास्मि शक्त इत्यनुवर्तते न च नास्मि शक्त इत्यन्वयः । अवश्यं शक्तोऽस्मीत्यर्थः । द्वौ नञौ हि प्रकृतार्थदार्ढ्यं गमयतः । अप्रयुक्तमेवानुवर्तते न पुनः प्रयुक्तं, प्रयुक्तश्चात्र नञ् अप्रयुक्तं पुनः शक्तोऽस्मीति । अत एव चोपेक्षितोऽयं पाठोऽस्माभिः । अन्यावपि चारुत्वहानिभिया परित्यक्तौ ।

( **ग्यौ** ) क्षतजेति । क्षतजेन रक्तेन सिक्तानि सर्वाण्यङ्गानि यस्य तथाभूतः ।

(३७) नाहमिति । अहं भीमः रक्षः राक्षसो न । रक्ष इति क्लीबम् । भूतः न । 'भूतोऽमी देवयोनय' इत्यमरः । भूतामिति पाठे क्लीबत्वं चिन्त्यम् । कस्तर्हीत्याह प्रकामं अत्यन्तं रिपुरुधिरजलाह्लादिताङ्गः रिपोः शत्रोर्दुर्योधनस्य रुधिरं रक्तमेव जलं तेनाह्लादितानि सञ्जाताह्लादानि अङ्गानि अवयवा यस्य तथाभूतः । आह्लाद आनन्दः । अत्र रिपूणामिति केचिद्व्याचक्षते । तन्न । दुर्योधनरुधिरस्यैव गात्रे निधानस्योत्तरत्र वक्ष्यमाणत्वात् । निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः उरुर्विशाला प्रतिज्ञैव-जलनिधिः स एव गहनं दुःखं, दुःखहेतुत्वात्, तत निस्तीर्णं येन तथाभूतः । 'गहनं वनदुःखयोरिति हैमः । क्रोधनः कोपशीलः क्षत्रियः अस्मि । प्रतिज्ञोत्तरणमेव ममोद्देश्यं, सा च समुत्तीर्णा, तन्न किल भेतव्यं युष्माभिः 'हनिष्यत्यसावस्मानि' तीति भावः । भीतित्यागमेवोपदिशति भो भो इति । भो भो इत्यामन्त्रणे समरेति समरो युद्धमेव शिखी अग्निः तस्य शिखाभिर्ज्वालाभिर्दग्धेभ्यः शेषा अवशिष्टाः । अत्र दग्धेत्यत्र भुक्तेति क्वचित्पाठः । अग्निवत्सर्वभक्षकत्वात्समरेऽग्नित्वारोपः । राजन्यवीराः राजन्येषु क्षत्रियेषु वीराः शूराः । वः अनेन प्रत्यक्षतो दृश्यमानेन त्रासेन भयेन कृतम् अलम् । यत् यस्मात्त्रासाद्धेतुभूतादित्यर्थ इत्येके । वस्तुतः पुनः स्वरूपबोधकमव्ययं यदिति । तेन यदिति त्रासस्वरूपाख्याने । त्रासश्चात्र त्रासजन्यं कार्यम् । हेतुहेतुमतोरभेदोपचारात् । अन्तर्धानं हि न त्रासः किन्तु तज्जन्यं कार्यम् । हतकरितुरगान्त-

**द्रौपदी**—( लब्धसंज्ञा ) परित्ताअदु परित्ताअदु महाराओ । ( परित्रायतां परित्रायतां महाराजः । )

**कञ्चुकी**—देवि पाण्डुस्नुषे ! उत्तिष्ठोत्तिष्ठ । संप्रति झटिति चिताप्रवेश एव श्रेयान् । ( ग्यं )

**द्रौपदी**—( सहसोत्थाय ) कहं, ण संभावेमि अज्ज वि चिदासमीवम् ? ( कथं, न संभावयाम्यद्यापि चितासमीपम् ? ) ( ग्यः )

**युधिष्ठिरः**—कः कोऽत्र भोः ? सनिषङ्गं धनुरुपनय । कथं, न कश्चित्परिजनः भवतु । बाहुयुद्धेनैव दुरात्मानं गाढमालिङ्ग्य ज्वलनमभिपातयामि । ( परिकरं बध्नाति । ) ( ग्र )

**कञ्चुकी**—देवि पाण्डुस्नुषे ! संयम्यन्तामिदानीं नयनपथावरोधिनो दुःशा

---

र्हितैः हता ये करिणस्तुरगा अश्वाश्च तैरन्तार्हिताः तिरोहितास्तैः अत एव च लीनैः लयं नाशं अदर्शनमिति यावत् प्राप्तैरिव आस्यते उपविश्यते युष्माभिरित्यर्थात् संबध्यते । अत्र नाहं रक्ष इत्यत्र रक्षो नाहमितिक्वचित्पाठः । प्राचीनाः पुनर्दर्पणादिकृता नैनमाद्रियते । आह्लादितस्थाने प्लावितेत्यपि क्वचित्पठ्यते तदपेक्षया चाह्लादितपदमेव चमत्करोतीति दृश्यतां निपुणं धीमद्भिः । अत्र रिपुरुधिराह्लादिताङ्गत्वे प्रतिज्ञाया निस्तरणं हेतुत्वेनोक्तमिति पदार्थगतहेतुकं काव्यलिङ्गमलङ्कारः । राजन्येषु वीरत्वे च समरशिखिशिखादग्धशेषत्वं हेतुरित्यपित देव । रिपुवधकार्यस्य संग्रहादादान नाम विमर्षसन्धेरङ्गम् । तदुक्तं दर्पणे 'कार्यसंग्रह आदानम्' इति । प्रतिज्ञाजलनिधिगहन इति दण्डिमते रूपकरूपकम् । यदि तु जलनिधेः सम्बान्धि गहनामिति विगृह्यत तदा रूपकमेव । समरशिखिशिखेत्यत्र परम्परितरूपकम् । एतेषां च मिथोऽनपेक्षतयावस्थानात्संसृष्टिः । स्रग्धरावृत्तम् ।

**(ग्यं)** पाण्डुस्नुषे इति संप्रति चिताप्रवेशोपेक्षणे भावी दुर्योधनजन्मा परिभवः कुलमपि पाण्डोःकलङ्कयिष्यतीति व्यज्यते ।

**(ग्यः)** चितासमीपं चितायाः समीपवर्तिनं देशं न संभावयामि गमनेन सत्करोमि । मूर्छां प्राप्ततयाऽवस्थानप्रदेशस्यानवबोधात्प्रश्नः ।

**(ग्र)** ज्वलनमभि ज्वलनोपलक्षिते प्रदेशे ज्वलन इति यावत् पातयामि । ति कर्मप्रवचनीयसंज्ञायां कर्मप्रवचनीययुक्ते इति द्वितीया । अन्यथा सज्येत । परिकरं काचा इति महाराष्ट्रभाषया ख्यातम् ।

सनावकृष्टा मूर्धजाः। अस्तमिता संप्रति प्रतीकाराशा। चितासमीपमेव द्रुततरं संभावय। ( ग्रा )

**युधिष्ठिरः**—कृष्णे! न खल्वनिहते तस्मिन्दुरात्मनि दुर्योधने संहर्तव्याः केशाः। ( ग्रि )

**भीमसेनः**—(सत्वरं परिक्रम्य) पाञ्चालि! न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिभ्याम्। तिष्ठ, स्वयमेवाहं संहरामि ( ग्री

( द्रौपदी भयादपसर्पति। )

**भीमसेनः**—तिष्ठ भीरु! क्वाधुना गम्यते?। (इति केशेषु ग्रहीतुमिच्छति।)

**युधिष्ठिरः**—( वेगाद्भीमं गाढमालिङ्ग्य। ) दुरात्मन्! भीमार्जुनशत्रो! सुयोधनहतक! ( ग्रु )

---

**( ग्रा )** पाण्डुस्नुषे इति पाण्डोरपि स्नुषाया इयमवस्थेति विषादोऽभिव्यज्यते क्वचित्पुनः संबुद्धिरियं नास्ति। तन्न युक्तम्। एतस्या ह्यभावे युधिष्ठिरं प्रत्येवासौ कञ्चुकिन उक्तिः संपद्येतेति। नयनपथावरोधिनः दृष्टिमार्गप्रतिबन्धकाः। क्वचित्तु नयनोपरोधिन इत्येव पठ्यते। तत्र दृष्टिप्रतिबन्धका इत्यर्थः। मूर्धजाः केशाः "केशाः शिरसिजमूर्धजकचचिकुरशिरोरुहा बाला" इति हलायुधः। संयम्यन्तां स्वयमेवेति भावः। प्रतीकाराशा वैरनिर्यातनाशा अस्तमिता नष्टा। प्रतीकारक्षमयोर्भीमार्जुनयोर्विनष्टत्वादिति भावः। संभावय गमनेन सत्कुरु गच्छेति यावत्।

**( ग्रि )** दुरात्मनि दुर्योधन इत्यत्र दुर्योधनहतक इति क्वचित्पाठः। संहर्तव्याः संयमनीयाः.

**( ग्री )** सत्वरं परिक्रम्येत्यान्ध्रपुस्तक एव संदृष्टम्। नेति संहर्तव्येत्यनेन संबध्यते। दुःशासनेन विलुलिता चालिता। पाणिभ्यामित्यत्र पाणिनेति क्वचित्। नैतत्प्राचीनैरादृतम्। तिष्ठेत्यादि संहरामीत्यन्तं क्वचिन्नास्ति। दर्पणे पुनरेतद्दृष्टम्। 'पाञ्चालि न खलु संयन्तव्या मयि जीवति दुःशासनाकीर्णा वेणी स्वपाणिने' त्यान्ध्रपुस्तकपाठः। आकीर्णा व्याकुलिता। तिष्ठ भीरु इत्यादिकं चावैतस्मादनन्तरितमेव पठ्यते। वेणिर्वेणीति द्विविधं रूपम्। अत्र कार्यस्योपक्षेपाद्ग्रथनं नाम निर्वहणसंधेरङ्गम्।

**(ग्रु)** वेगादिति। दुर्योधनतया संभावितेन भीमेन द्रौपदीकेशग्रहणस्येष्टत्वाद्वेगः एलच्च गाढमिति च क्वचिन्नास्ति। आवश्यकं पुनरेतद्द्वितयमपि।

आशैशवादनुदिनं जनितापराधः
मत्तो बलेन भुजयोर्हतराजपुत्रः ।
आसाद्य मेऽन्तरमिदं भुजपञ्जरस्य
जीवन्प्रयासि न पदात्पदमद्य पाप ॥ ३८ ॥

**भीमसेनः**—अये कथम् ! आर्यः सुयोधनशङ्कया क्रोधान्निर्दयं मामालिङ्गति ? आर्य ! प्रसीद प्रसीद ( ग्र )

**कञ्चुकी**—( निर्वर्ण्य सहर्षम् ।) महाराज ! दिष्ट्या वर्धसे । अयं खल्वायुष्मान्भीमसेनः सुयोधनक्षतजारुणीकृतसकलशरीरो दुर्लक्ष्यव्यक्तिः । अलमधुना संदेहेन । ( ग्रे )

---

(३८) आशैशवादिति । पाप दुष्ट दुर्योधन ! आशैशवात् शिशोर्भावः शैशवं बाल्यं तस्मात् आरभ्य । प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् इति शिशुशब्दादञ् भावे । अनुदिनं दिने दिने । वीप्सायामव्ययीभावः । जनितापराधः जनिता उत्पादिताः कृताः कारिताश्चेत्यर्थः अपराधा येन तथाभूतः । हतराजपुत्रः हतौ राजपुत्रौ भीमार्जुनौ येन तथाभूतः । अत एव च भुजयोर्बलेन सामर्थ्येन मत्तो गर्वितः । त्वमिति शेषः । अद्य मे मम इदं त्वयाऽनुभूयमानं भुजपञ्जरस्य पञ्जयते निरुध्यतेऽस्मिन् पञ्जरं निरोधनयन्त्रं भुजावेव पञ्जरं तस्य अन्तरं मध्यं आसाद्य प्राप्य पदात् संप्रति स्थापितात् पदं एकपदमात्रमपि प्रदेशं जीवन् प्राणान् धारयन् सन् न प्रयासि न प्रयास्यसीत्यर्थः । यावदेकमपि पदं न प्रयासि तावदेव त्वां भुजपञ्जरयन्त्रणयैव प्राणैर्वियोजयिष्यामीति भावः । वसन्ततिलकावृत्तम् ।

( ग्र ) अये कथमिति विस्मये । सुयोधनशङ्कया दुर्योधनभ्रमेण मां दुर्योधनं संभाव्येत्यर्थः । अयं क्रोधे हेतुः । क्रोधादिति निर्दयमालिङ्गने हेतुः । अये इति क्वचिन्नास्ति । प्रसीद शान्तो भव । अत्र ‘ देव अजातशत्रो भीमार्जुनगुरो यथैवाज्ञापयसि न तथैवैतत् । ’ इति क्वचित्पाठः । तत्र आज्ञापयसीति गौरवादुक्तं वदसीत्यर्थः । नाहं कृतापराधो दुर्योधन इति भावः ।

(ग्रे) निर्वर्ण्य अवलोक्य । निर्पूर्वोहि वर्णयतिरालोकने ‘ निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् । ’ इत्यमरः । अत्र निरूप्येति उपसृत्येति उपगम्येति च पाठः । उपगतपूर्वत्वादेव भीमस्य न युक्तमान्तिमद्वयं पठितुम् । निरूप्येति तु निर्वर्णनसमानार्थकम् । सहर्षमिति भीमसंदर्शनात् हर्षः । दिष्ट्येत्यव्ययं दैवेनेत्यर्थे । ‘दिष्ट्या हर्षे मङ्गले च भाग्येनेत्यर्थ इष्यते’ इत्यव्ययकोशः । वर्धसे भीमोपगमनरूपमभ्युदयं भजसे । ‘कालान्तरे चाभ्युदये समृद्धावपि श्रोषिति ’ इति वृद्धिशब्दार्थेषु मेदिनी । सुयोधनेति त

**चेटी**--( द्रौपदीमालिङ्ग्य ) देवि ! णिवट्टीअदु णिवट्टीअदु । एसो क्खु पूरिदपडिण्णाभारो णाहो दे वेणीसंहारं कादुं तुमं एव्व अण्णेसदि । ( देवि ! निवृत्यतां निवृत्यताम । एष खलु पूरितप्रातिज्ञाभारो नाथस्ते वेणीसंहारं कर्तुं त्वामेवान्विष्यति ।) ( ग्रै )

**द्रौपदी**--हञ्जे ! किं मं अलीअवअणेहिं आसासेसि ? । (हञ्जे ! किं मामलीकवचनैराश्वासयसि ? । ) ( ग्रै )

**युधिष्ठिरः**--जयंधर ! किं कथयसि ? नायमनुजद्वेषी दुर्योधनहतकः? ।

**भीमसेनः**--देव अजातशत्रो ! कुतोऽद्यापि दुर्योधनहतकः ? ।
मया हि तस्य दुरात्मनः ( ग्रो )

भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये निषिक्ता चतुरुदधिपयःसीमया सार्धमुर्व्या ।
भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप ! तदधुना धार्तराष्ट्रस्य शेषम् ॥ ३९ ॥

---

सुयोधनस्य क्षतजेन रक्तेन अरुणीकृतं सकलं शरीरं येन तथाभूतः । एष च व्यक्तेर्दुर्लक्षत्वे हेतुः । दुर्लक्षव्यक्तिः दुःखेन लक्षयितुं शक्या व्यक्तिराकारो यस्य तथाभूतः । दुःखेनापि लक्षयितुमशक्या व्यक्तिर्यस्येति चक्रवर्ती । तन्न । नञोऽत्र सम्बन्धाभावात् । सकलशरीर इत्यत्र शरीराम्बर इति क्वचित्पाठः ।

(ग्रे) द्रौपदीमालिङ्ग्येति क्वचिन्नास्ति निवृत्यतां अग्निप्रवेशव्यापारादिति शेषः । निवृत्यतामिति क्वचिन्नास्ति ते तव नाथो भीमः । वेणीसंहारं वेणीबन्धनम् । अन्विष्यति मार्गति । अनुपूर्वादिषेर्देवादिकाल्लट् । यत्तु कैश्चिदत्र ' देव्या वेणीसंहारं कर्तुं त्वामन्विष्यतीति ' पठ्यते तत्प्रामादिकम् । युष्मत्पदवाच्याया द्रौपद्या देवीतो भेदापत्तेः ।

( ग्रै ) हञ्जे चेटि ! अलीकवचनैः असत्यभाषणैः किं किमर्थम् आश्वासयसि सुखयसि ।

( ग्रो ) कुत इति दर्पणादिषु नोपलभ्यते । तत्र प्रश्ने काकुः । कुतोऽद्यापि स इत्यर्थः । कथं स नास्तीत्याह मयेति । मया तस्य दुरात्मन इत्युत्तरत्र पद्ये पादत्रये प्रतिवाक्यं संबध्यते ।

( ३९ ) भूमाविति । मया भीमेन कर्त्रा तस्य दुरात्मनो दुर्योधनस्य शरीरं भूमौ क्षिप्तं, इदं त्वया दृश्यमानं असृक् रक्तं निजाङ्गे स्वशरीरे चन्दनाभं चन्दनतुल्यं यथा तथा निहितम् । आर्ये ज्यायसि भ्रातरि त्वयि चतुरुदधिपयःसीमया चतुर्णामुदधीनां समुद्राणां पयांसि जलान्येव सीमा मर्यादा यस्यास्तया उर्व्या पृथ्व्या

( युधिष्ठिरः स्वैरं मुक्त्वा भीममवलोकयन्नश्रूणि प्रमार्जयति । ( औ )

**भीमसेनः**—( पादयोः पतित्वा । ) जयत्वार्यः ।

**युधिष्ठिरः**—वत्स ! बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रम् । कथय कच्चिज्जीवति भवान्समं किरीटिना ? । ( अं )

**भीमसेनः**—निहतसकलरिपुपक्षे त्वयि नराधिपे जीवति भीमोऽर्जुनश्च । ( अः )

**युधिष्ठिरः**—( पुनर्गाढमालिङ्ग्य । ) तात भीम ! ( ग )

---

समं सह । 'वसुधोर्वी वसुन्धरे' त्यमरः । लक्ष्मीः संपत् निषिक्ता संक्रमितेति यावत् । अत्र निषण्णेति क्वचित्पाठः । स न युक्तः । भग्नक्रमत्वापत्तेः । भृत्याः पोष्याः सेवकाः मित्राणि योधा योद्धारः अखिलं कुरुकुलं च इत्येतत् रणाग्नौ दग्धं भस्मीकृतम् । अत्र कुरुकुलमनुजा इति क्वचित्पाठः । स चायुक्तः कुलशब्देनैव तथाविधार्थलाभात् । वस्तुतः पुनरत्र कुलमपि निखिलमित्येव युक्तः पाठः । तस्य दुरात्मन इत्येतस्यानुवर्तमानत्वात् । हे क्षितिप भूप युधिष्ठिर अधुना यत् नाम दुर्योधनहतक इति ब्रवीषि उच्चारयसि तदेकं केवलं धार्तराष्ट्रस्य धृतराष्ट्रपुत्रस्य शेषं अवशेषभूतम् । प्रयुञ्जते किल शेषशब्दस्य वाच्यवल्लिङ्गं कवयः । समर्थितं चैतद्दुर्घटवृत्तौ शरणदेवेन घञजबन्ताः पुंसीति प्रायिकमिति न्यासोक्तिं, भावेषु घञंप्रति पुंस्त्वमुक्तं करणादि घञन्तस्य नानालिङ्गतेति वल्लभवचनं चोपन्यस्तवता । शेष इत्येव तु युक्तं पठितुम् । न पुनरेतद्दृष्टं क्वापि । वाक्यार्थगतहेतुकं काव्यालिङ्गमलङ्कारः । अत्रानुभूतस्यार्थस्य कथनान्निर्णयो नाम निर्वहणसन्धेरङ्गम् । तदुक्तं दर्पणे 'निर्णयः पुनः । अनुभूतार्थकथनम् ।' इति । स्रग्धरावृत्तम् । अस्मात्परं संदृश्यमानोऽप्युक्तिप्रत्युक्तिरूपो निःसारः पाठ एकस्मिन्नेव पुस्तके संदृष्टो न पुनरन्यत्र क्वापीत्युपेक्षितः ।

( औ ) स्वैरं यदृच्छया । मुक्त्वा भीममित्यर्थात्संबध्यते । अवलोकयन् इति हेतौ शता । अवलोकनहेतोरश्रूणि आनन्दजन्यानि प्रमार्जयति प्रोञ्छति ।

( अं ) बाष्पेति । बाष्परूपेण जलेनान्तरिते व्यवहिते सप्रतिबन्धतां प्राप्ते इत्यर्थः नयने यस्य तस्य भावस्तस्मात् । पश्यामि द्रष्टुं प्रभवामीत्यर्थः । मुखचन्द्रम् । चन्द्रमिवाह्लादकं मुखमित्यर्थः । कच्चिदितीष्टप्रश्ने । एतच्च वाक्यादावेव प्रयुज्यते । किरीटिना अर्जुनेन समं सह ।

( अः ) निहतेति । निहतः सकलो रिपूणां पक्षः पक्षपातिपुरुषसमाज इत्यर्थः त्वयि नराधिपे राजनि सति अर्जुनो भीमश्च जीवति । तावपि जीवतः पि रिपूणां क्षयान्नराधिपः संवृत्त इति भावः ।

( ग ) आनन्दवशात्पुनर्गाढमालिङ्गनम् ।

रिपोरास्तां तावन्निधनमिदमाख्याहि शतशः
प्रियो भ्राता सत्यं त्वमसि मम योऽसौ बकरिपुः ? ।

**भीमसेनः**—आर्य ! सोऽहम् ।

**युधिष्ठिरः**—

जरासंधस्योरःसरसि रुधिरासारसलिले
तटाघातक्रीडाललितमकरः संयति भवान् ? ॥ ४० ॥

**भीमसेनः**—आर्य ! स एवाहम् । मुञ्चतु मामार्यः क्षणमेकम् । ( ग्ला )

**युधिष्ठिरः**—किमपरमवशिष्टम् ?

---

( **४० अ** ) रिपोरिति । रिपोर्दुर्योधनस्य निधनं मरणं तावत् आस्तां तिष्ठतु नेदानीं तेन मे प्रयोजनमिति भावः । किं तर्ह्यपेक्ष्यत इत्यात्राह । इदमिति । इदं वक्ष्यमाणं प्रियो भ्रातेत्यादि शतशः आनन्दातिशयजनकत्वेन तृप्त्यभावादनेकशः । आख्याहि उत्तरयेति यावत् । किं तदित्याह । प्रिय इति । यः असौ प्रसिद्धः बकरिपुः बकसंज्ञकस्य राक्षसस्य शत्रुः सः मम प्रियो भ्राता बन्धुर्भीम इत्यर्थः सत्यं त्वमसि ?

( **४० आ** ) जरासन्धेति । संयति संग्रामे जरासंधस्य एतत्संज्ञकस्य शत्रोः रुधिरासारसलिले रुधिरस्य रक्तस्य आसारः प्रसरणं प्रवाह इति यावत् स एव सलिलं यस्मिंस्तथाभूते । ' आसारः स्यात्प्रसरणे ' इति मेदिनी । उरःसरसि उरो वक्षःस्थलमेव सरः सरोवरं तत्र । तटाघातक्रीडाललितमकरः तटस्याघातो हर्षादाहत्योत्खननं स एव क्रीडा तस्यां ललितो मकरो जलचरः प्राणिविशेषः । यः स एवेति पूर्ववदेव संबध्यते । भवान् । यत्त्वत्र उरःसरसीति संयतीत्यस्य विशेषणं प्रकल्पितं तर्कवाचस्पतिना तन्न मनोरमम् । संबन्धायोगात् । अत्र भीमसेने मकरत्वारोप उरसि सरस्त्वारोपे रुधिरासारे च सलिलत्वारोपे कारणमिति परम्परितं रूपकमलङ्कारः। शिखरिणी वृत्तम् ।

( **ग्ला** ) आर्य स एवाहमिति क्वचिन्नास्ति । आवश्यकं पुनरेतत् । अन्यथाऽनुत्तार्यप्रश्नमन्यत्र प्रवृत्तावौद्धत्यं भीमसेने प्रसज्येत । मुञ्चतु मामार्यः क्षणमेकमित्यत्र ' आर्य ! मुञ्चतु मां क्षणमेकं भवान् । ' इति क्वचित्पाठः स चायं नादृतो दर्पणकारादिभिः प्राचीनैरित्युपेक्षितः । मुञ्चत्वित्यत्र तन्मुञ्चत्विति क्वचित् । तदपि च तत एव त्यक्तम् । एकं क्षणं मुञ्चत्विति संबन्धः ।

**भीमसेनः**--सुमहदवशिष्टम् । संयमयामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् । ( ग्लि )

**युधिष्ठिरः**--गच्छतु भवान् । अनुभवतु तपस्विनी वेणीसंहारम् । ( ग्ली )

**भीमसेनः**--( द्रौपदीमुपसृत्य । ) देवि पाञ्चालराजतनये ! दिष्टया वर्धसे रिपुकुलक्षयेण । अलमलमेवंविधं मामालोक्य त्रासेन । ( ग्लु )

कृष्टा येनासि राज्ञां सदसि नृपशुना तेन दुःशासनेन
स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि ।
कान्ते ! राज्ञः कुरूणामतिसरसमिदं मद्गदाचूर्णितोरो-
रङ्गेऽङ्गेऽसृङ्निषिक्तं तव परिभवजस्यानलस्योपशान्त्यै ॥ ४१ ॥

---

( **ग्लि** ) सुमहत् सुतरां महत्कार्यम् । तदेवाह संयमयामीति । तावत् आदितः । सुयोधनशोणितोक्षितेन सुयोधनस्य दुर्योधनस्य शोणितेन रक्तेन उक्षितः सिक्तो लिप्त इति यावत् तेन । उक्ष सेचन इत्यतो निष्ठायामुक्षित इति । अनेन पाणिना हस्तेन दुःशासनावकृष्टं दुःशासनेनाकृष्टं पाञ्चाल्या द्रौपद्याः केशहस्तं केशकलापम् । ' पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे । ' इत्यमरः । संयमयामि बध्नामि । चौरादिकाद्यमयतेर्लट् । संयच्छामीत्येवात्र पठ्यते कैश्चित् । नैतत्प्राचीनैर्विश्वनाथादिभिरादृतम् ।

( **ग्ली** ) तपस्विनी अनुकम्पनीया । वेणीसंहारम् वेणीबन्धनम् । अत्र ' मुञ्चतु मामित्यत आरभ्यैतदन्तेन प्रबन्धेन वेणीग्रथनरूपस्य कार्यस्य मार्गणाद्विबोधो नाम निर्वहणसन्धेरङ्गम् । तदुक्तं दर्पणे ' विबोधः कार्यमार्गणम् । ' इति ।

( **ग्लु** ) पाञ्चालानां नाम पूर्वोक्तदेशविशेषस्य राज्ञस्तनये कन्ये द्रौपदि ! दिष्ट्या भाग्येन । दिष्टेत्यानन्दे वा । वर्धसे अभ्युदयं भजसे रिपुकुलक्षयेणेति हेतौ तृतीया । रिपूणां कुलस्य क्षीणत्वादभ्युदयं भजस इति दिष्टयेत्यर्थः । एवंविधं रक्तादिग्धाङ्गतया भीषणवेषम् ।

(४१) कृष्टेति । येन नृपशुना कर्तव्याकर्तव्यविचारशून्यत्वात्पशुतुल्येन मनुजेन तेन प्रसिद्धेन दुःशासनेन कर्त्रा राज्ञां सदसि सभायां कृष्टासि हठान्नीतासि । कर्षतिरत्र हठान्नयने । दृश्यते च नयनार्थकत्वं कर्षतेः । अजां ग्रामं कर्षतीत्यादौ । हठस्तु व्यङ्ग्यः । तस्य दुःशासनस्य एतानि मम करयोर्मध्ये, विद्यमानानीत्यर्थः पीतशेषाणि मया पीतेभ्योऽवशेषाणि अवशिष्टानीत्यर्थः । स्त्यानानि घनीभूतानि असृञ्जि रक्तानि स्पृश । द्रवात्मकानां पदार्थानामवयवविवक्षया बहुवचनं समुदायविवक्षया त्वेकवचनं भवति । यथा पयांसि जलानि पयो जलमित्यादि । एवमेवात्रापि

बुद्धिमतिके ! क्व सा भानुमती ? परिभवतु संप्रति पाण्डवदारान् । भवति यज्ञवेदिसंभवे ! ( ग्लृ )

**द्रौपदी**--आणवेदु णाहो । ( आज्ञापयतु नाथः । )

**भीमसेनः**--स्मरति भवती यन्मयोक्तम् । ( ' चञ्चद्भुज-' ( पृ. ३९) इत्यादि पठति । ) ( ग्ले )

---

द्रष्टव्यम् । कान्ते अभीष्टे प्रिये द्रौपदि । इदं मच्छरीरे दृश्यमानं मद्गादाचूर्णितोरोः मम-गदया चूर्णितौ चूर्णीकृतौ ऊरू यस्य तथाभूतस्य कुरूणां राज्ञो दुर्योधनस्य अतिसरसं आतिशयेन रसवत् अत्यन्तमार्द्रमित्यर्थः । एतच्च निषेके हेतुतां भजते । असृक् रक्तं, तव षष्ठ्याः परिभवेन संबन्धः परिभवजस्य अनादरतः संभूतस्य अनलस्य अग्नेः तीव्रत-रस्य तापस्येति भावः उपशान्त्यै प्रशमनार्थं अङ्गेऽङ्गे प्रत्यवयवम् । वीप्सायां द्विर्व-चनम् । निषिक्तं नितरां सिक्तम् मयेति शेषः । अत्र ' कृष्टा येनासीत्यत्र येना-कृष्टासीति क्वचित्पाठः । अतिसरसमिदमित्यत्र अपि रुधिरमिदामिति अङ्गेऽङ्गेऽसृङ्-निषिक्तमित्यत्र च अङ्गेष्वङ्गेषु सक्तमिति क्वचित्पठ्यते तदेतन्न युक्तं अङ्गेष्विति बहु-वचनस्य प्रयोजनाभावात् । परिभवजस्येत्यत्र च रिपुजनितस्येति क्वचित्पाठः । अयमपि न चमत्कारावह इत्युपेक्षितः । अत्र तवेत्यस्य अनलेनापि संबन्धमिच्छान्ति विद्वांसः । तव यः परिभवजोऽनलः तापरूपोऽग्निस्तस्योपशान्त्यै मया कुरूणां राज्ञोऽ-सृक् स्वस्य अङ्गेऽङ्गे निषिक्तमित्यर्थः । एवंच तापोपशमरूपस्य कार्यस्य असृङ्नि-षेकरूपस्य च तत्कारणस्य द्रौपदीभीमरूपभिन्नदेशवर्तित्वादसंगतिरलङ्कारः । तदा-हुः । ' कार्यकारणयोर्भिन्नदेशतायामसंगतिः । ' इति । स्रग्धरावृत्तम् ।

( ग्लृ ) सा या पूर्वं ( अं. १ पृ. ३४ चेटीवाक्ये दृश्यम् ) उपहासेन परि-भूतवती सा । भानुमती दुर्योधनभार्या । संप्रति इदानीं पाण्डवदारान् पाण्डवभार्यां-द्रौपदीम् । पाण्डवपदं प्रभावातिशयमभिव्यञ्जयति । ' दाराः पुंभूम्नि ' इत्यमरः । परिभवतु संप्रति इत्यत्र योपहसतीति क्वचित्पाठः । क्वचिच्च क्वेत्यस्मात्परं संप्रतीति पठ्यते । नैतत्प्राचीनैर्विश्वनाथादिभिरादृत्तं न चापि चमत्कारावहमित्युपेक्षितम् । अत्र पूर्वं भानुमत्या कृतस्योपहासस्योपदर्शनात्पूर्ववाक्यं नाम निर्वहणसंधेरङ्गम् । तदाह विश्वनाथकविराजः । ' पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थोपदर्शनम् । ' इति । भवति राज्ञि । यज्ञवेदिसंभवत्वं च द्रौपद्याः प्रदार्शितं प्रागस्माभिः ।

( ग्ले ) अत्र चञ्चद्भुजेत्यादेर्मुखसन्धौ क्षिप्तस्य बीजस्योपगमनात्संधिर्नाम निर्वहणसंधेरङ्गम् । तदुक्तं दर्पणे ' बीजोपगमनं सन्धिः । ' इति ।

**द्रौपदी**—णाह ! ण केवलं सुमरामि । अणुहवामि अ णाहस्स प्पसादेण । ( नाथ! न केवलं स्मरामि । अनुभवामि च नाथस्य प्रसादेन । ) ( ग्लै )

**भीमसेनः**—( वेणीमवधूय । ) भवति ! संयम्यतामिदानीं धार्तराष्ट्रकुलकालरात्रिर्दुःशासनविलुलितेयं वेणी । ( ग्लो )

**द्रौपदी**—णाह ! विसुमरिदं एदं वावारं णाहस्स प्पसादेण पुणो वि सिक्खिस्सम् ।( नाथ! विस्मृतमेमं व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्ये।) ( ग्लौ )

( भीमसेनो वेणीं बध्नाति । ) ( ग्लं )

( नेपथ्ये । )

क्रोधान्धैर्यस्य मोक्षात्क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि
प्रत्याशं मुक्तकेशान्यतुलभुजबलैः पार्थिवान्तःपुराणि ।
कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
सोऽयं बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः ॥ ४२ ॥

---

( ग्लै ) अनुभवामि तदर्थमिति भावः । नाथस्य पत्युर्भवतो भीमस्य प्रसादेनानुग्रहेण ।

( ग्लो ) वेणीं वेणीबन्धनोचितान् केशानित्यर्थः । केशहस्तामिति हि प्रागुक्तम् । अवधूय धूनयित्वा । वेणीग्रथनतो हि प्राक् केशा अवधूयन्त इत्याचारः । धार्तराष्ट्रमिति धृतराष्ट्रस्येदं धार्तराष्ट्रं यत्कुलं वंशस्तस्य कालरात्रिर्मरणप्रदा रात्रिः । धार्तराष्ट्राणां धृतराष्ट्रपुत्राणां कुलं समूह इति वा विग्रहः ।

( ग्लौ ) एतं वेणीसंयमनरूपं व्यापारं कर्म । प्रसादेन स्वयं संयम्य शिक्षणप्रदानरूपेणानुग्रहेण । शिक्षयतु मां कृपया व्यापारमिममार्यपुत्र इति भावः । अत्र 'विस्मृतास्म्येतं व्यापार' मिति वाक्यं भेद्यते कैश्चित् । विश्वनाथादयः पुनः प्राचीना एकमेव पठन्ति । अत्र वेणीसंयमनरूपस्य द्रौपद्या अभीष्टस्यार्थस्य प्राप्त्युपवर्णनादानन्दो नाम निर्वहणसन्धेरङ्गम् तदाहुः 'आनन्दो वाञ्छितागमः ।' इति '

( ग्लं ) अत्र वेणीबन्धनरूपशुश्रूषोपवर्णनात्प्रसादो नाम निर्वहणसंधेरङ्गम् । तदुक्तं दर्पणे 'शुश्रूषादिः प्रसादः स्यात् ।' इति । अत्र चेटी वेणीं बध्नातीति बहवः पठन्ति । तदेतत्प्राचीनपाठविरोधात् 'उत्तंसयिष्यति कचांस्तव देवि भीम' इति भीमप्रतिज्ञाविरुद्धत्वाद्द्रौपदीवचनभङ्गापत्तेश्चोपेक्षितम् ।

( ४२ ) क्रोधान्धैरिति । यस्य मोक्षात् मोचनात् हेतुभूतात् क्रोधान्धैः क्रोधेन नष्टविवेकदृष्टिभिः क्षतनरपतिभिः क्षता नाशिता नरपतयो यैस्तथाभूतैः एतच्च पार्थिवान्तःपुराणां मुक्तकेशत्वे हेतुतामावहति । अतुलभुजबलैः निरुपमबाहुसामर्थ्यैः

**युधिष्ठिरः**—देवि ! एष ते मूर्धजानां संहारोऽभिनन्दितो नभस्तलचारिणा सिद्धजनेन । ( ग्लः )

( ततः प्रविशतः कृष्णार्जुनौ । ) ( ग्व )

**कृष्णः**—( युधिष्ठिरमुपगम्य । ) विजयतां निहतसकलारातिमण्डलः सानुजः पाण्डवकुलचन्द्रमा महाराजो युधिष्ठिरः । ( ग्वा )

**अर्जुनः**—जयत्वार्यः ।

---

पाण्डुपुत्रैः पाण्डवैः कर्तृभिः । प्रत्याशं आशायां आशायां दिशि दिशि । ' आशाश्च हारितश्चताः । ' इति दिक्पर्यायेष्वमरः । पार्थिवान्तःपुराणि पृथिव्या ईश्वराः पार्थिवा राजानः तेषामन्तःपुराणि तात्स्थ्यादन्तःपुरवासिन्यः स्त्रियः । अन्तःपुरपदं चाल लाक्षणिकं मञ्चाः क्रोशन्तीतिवत् । मुक्तकेशानि मुक्ताः पतिमरणान्मोचिता इत्यर्थः केशा येषां तथाविधानि कृतानि । सः अयं कुपितयमसखः कुपितस्य यमस्य मृत्योः सखा तुल्यः । राजाहः सखिभ्य इति टच् । ' बन्धुर्मित्रं वयस्यश्च प्रेयान्प्रीतः सुहृत्सखा ' इतिसादृश्यबोधकशब्देषु केशवमिश्रः । कुरूणां कुरुकुलसंभवानां कौरवाणां धूमकेतुः नाशहेतुरिति भावः । अरिष्टजनकत्वाद्धूमकेतोः केशपाश आरोपः । कृष्णाया द्रौपद्याः केशपाशः केशकलापः बद्धः भीमेनेत्यर्थात् । अतः प्रजानां जनानाम् । ' प्रजा स्यात्सन्ततौ जने । ' इत्यमरः । निधनं संग्रामजन्यं मरणं विरमतु समाप्नोतु । राज्ञां कुलेभ्यः समूहेभ्यः स्वस्ति कल्याणं भवत्विति शेषः । नमःस्वस्तीत्यादिना चतुर्थी । अस्मात्पद्यतः पूर्वं ' महासमरानलदग्धशेषाय स्वस्ति भवते ( तु ) राजन्यकुलायेति क्वचित्पाठः । स च ' स्वस्ति राज्ञां कुलेभ्य' इत्यनेन पौनरुक्त्यापत्तेरुपेक्ष्यः । अतुलभुजबलैरित्यत्रानुदिनमधुनेति क्वचित्पाठः । असंबद्धत्वादुपेक्षणीयोऽयम् सो यमित्यत्र च दिष्ट्येति पाठः क्वचित् संदृष्टः । यच्छब्दस्य प्रयुक्ततयाऽऽवश्यकस्तच्छब्द इत्युपेक्षितोऽयमस्माभिः । अत्र पूर्वार्धे काव्यलिङ्गम् । कुपितयमसख इत्युपमा धूमकेतुरिति च रूपकम् । एतेषां च संसृष्टिः । स्रग्धरावृत्तम् ।

( ग्लः ) मूर्धजानां केशानाम् । संहारो बन्धनम् । अभिनन्दितः सानन्दं संमत इत्यर्थः । नभस्तलचारिणा आकाशतलगामिना । सिद्धा देवयोनिविशेषाः तेषां जनेनसमूहेन ।

( ग्व ) कृष्णार्जुनावित्यत्र वासुदेवार्जुनाविति क्वचित्पाठः । स न युक्तः । उत्तरत्र कृष्ण इत्युक्तेः । अतःपरं चौभावुपगम्येति क्वचित्पठ्यते तदपि नावश्यकमित्युपेक्ष्यम् ।

( ग्वा ) निहतेति । निहतानि सकलानि अरातीनां शत्रूणां मण्डलानि समूहा येन तथाभूतः पाण्डवेति पाण्डवं पाण्डुसम्बन्धि यत्कुलं वंशस्तस्य चन्द्रमा इवाह्लादकत्वात्

**युधिष्ठिरः**--( विलोक्य । ) अये ! भगवान्पुण्डरीकाक्षो वत्सश्च किरीटी। भगवन् ! कुतस्तस्य विजयादन्यद्यस्य भगवान्पुराणपुरुषो नारायणः स्वयं मङ्गलान्याशास्ते । ( ग्वि )

कृतगुरुमहदादिक्षोभसंभूतमूर्तिं
गुणिनमुदयनाशस्थानहेतुं प्रजानाम् ।
अजममरमचिन्त्यं चिन्तयित्वापि न त्वां
भवति जगति दुःखी किं पुनर्देव! दृष्ट्वा ॥ ४३ ॥

**( अर्जुनमालिङ्ग्य । )** वत्स ! परिष्वजस्व माम् ।

---

(ग्वि) अये इति विस्मये । पुण्डरीकं सितकमलमिव अक्षिणी यस्य सः श्रीकृष्णः। पुण्डरीकं सिताम्भोज'मित्यमरः। नयनयोर्नीलिमेव श्वेतिमाऽप्युपवर्ण्यते कैश्चित् । पुराणपुरुषः अनादिः पुरुषः परमात्मा भवानित्यर्थः ।

( ४३ ) भगवन्तमुपश्लोकयति । कृतेति । अत्रेदमवधेयं परमात्मनस्तावद्वस्तुतो नास्त्येव मूर्तिवैशिष्ट्यम्। साकारत्वेऽस्य विनाशित्वप्रसंगात् । दृश्यते हि यद्यत्साकारं तत्तन्नाशवदिति । प्रकृतिः पुनर्गुणत्रयरूपा स्वोपधानेनाकारमस्योत्पादयति। तत एव चास्य गुणित्वकर्तृत्वादि संभवति । प्रकृतिरेव च शुद्धसत्वप्रधाना मायेति रजस्तमउपसर्जनसत्त्वप्रधानाऽविद्येत्युच्यते । परमात्मा पुनरनादिरविनाशी चेति । एतदेव च पद्येऽस्मिन्नुपपाद्यते । हे देव प्रकाशनशील । ' यमेव भान्तमनुभाति सर्वं यस्य भासा सर्वमिदं विभाति । ' इति श्रुतेः । कृतेति कृतं गुरु विशालं महदादि ' महदहङ्कारपञ्चतन्मात्रैकादशेन्द्रियपञ्चमहाभूतानि येन तथाभूतः क्षोभः सर्गानुकूलो व्यापारो यस्य तेन प्रकृत्यपरपर्यायेण प्रधानेन संभूता उपाधिवशाज्जाता मूर्तिर्हरिहरब्रह्मादिरूप आकारो यस्य तथाभूतं मायाद्युपाधिवशादाकारमनुप्राप्तमिति भावः । ' इन्द्रो मायाभिः पुरुरूप ईयते। ' इति श्रुतेः। इन्द्रः परमात्मा। प्रकृतेश्च महदादिसर्ग उपदर्शित ईश्वरकृष्णेन ' प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः ( पञ्चतन्मात्राण्येकादशेन्द्रियाणि च) । तस्मादपि षोडशकात्पञ्चभ्यः ( तन्मात्रेभ्यः ) पञ्च भूतानि ( पृथ्व्यादीनि ) ॥ ' इति । गुणिनं सत्त्वरजस्तमोरूपगुणयुक्तं त्रिगुणात्मकमायोपहितत्वेन भेदाग्रहाद्गुणवन्तामिवभासमानमित्यर्थः । तदाहुः ' कुसुमवच्च मणिः । ' ( सांख्यदर्शने २।३४) इति । यथा जपाकुसुमोपहितः स्फटिको रक्त उपलक्ष्यत एवं मायोपहितः परमात्मा गुणवानालक्ष्यत इत्यर्थः । गुणित्वानुमाने हेतुमाह उदयेति । प्रजानां जनानां प्राणिनामिति यावत् उदयनाशस्थानहेतुम् उदय उत्पत्तिः रजोगुणकार्यमिदं नाशः संहारस्तमोगुणकार्यमेतत् स्थानं स्थितिः सत्तेत्यर्थः सत्वगुणकार्यमिदम् एतेषां हेतुं कारणभूतम् । , यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति'

कृष्णः——महाराज युधिष्ठिर ! एते खलु भगवन्तो व्यासवाल्मीकिजामदग्न्यजाबालिप्रभृतयो महर्षयः कल्पिताभिषेकमङ्गला नकुलसहदेवसात्यकिप्रमुखाश्च सेनापतयो यादवमत्स्यमागधकुलसंभवाश्च राजकुमाराः स्कन्धोत्तम्भिततीर्थवारिकलशास्तवाभिषेकं धारयन्तस्तिष्ठन्ति। अहमपि चार्वाकेण विप्रकृतं भवन्तमुपलभ्यार्जुनेन सह सत्वरमागतः । ( ग्वी )

---

इतिश्रुतेः । यदि मायोपहितत्वान्मे गुणित्वं तदा कीदृशं पारमार्थिकं मे रूपमिति चेत्तत्राह । अजमिति न जायत इत्यजः तं अनादिमित्यर्थः । अत एव च अमरं न म्रियत इत्यमरस्तं मरणशून्यामित्यर्थः । आदिमन्तो हि विनाशिनो भवन्ति न पुनरनादय इति । आम्नायते चाजत्वामरत्वादिकं परमात्मनः श्रुतिषु ‘ न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः । ’ इति । अचिन्त्यं चिन्तयितुमशक्यम् । सूक्ष्मत्वेन मनोविषयत्वाभावादिति भावः । ‘ यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे ’ तिश्रुतेः । एवंविधं त्वां, गुणित्वमारूढतया चिन्तनविषयीकर्तुं शक्यत्त्वात् चिन्तयित्वा ध्यात्वाऽपि जगति दुःखी दुःखवान् न भवति । ध्याता पुरुष इत्यर्थात्संबध्यते । दृष्ट्वा साक्षात्कृत्य पुनः किं? दुःखी न भवतीति किमु वक्तव्यमित्यर्थः । ध्यायन्तोऽपि त्वां नदुःखेन संयुज्यन्ते । अहं तु त्वां साक्षात्पश्यामि । तत्कुतो मे दुःखलेशोऽपि । अर्थान्न दुःखं प्रत्युत सुखमेवेति युज्यते मे विजय इति भावः । अत्र भगवद्विषयिण्या रतेर्गुणीभावात्प्रेयोलङ्कारः । काव्यलिङ्गं च । मालिनीवृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैः । ’ इति लक्षणात् ।

(ग्वी) कल्पिताभिषेकमङ्गलाः कल्पितं सज्जीकृतमभिषेको राज्याभिषेकक्रियैव मङ्गलं शुभकर्म यैस्तथाभूताः। यादवा यदुवंश्याः मत्स्या मत्स्यदेशाधिपतयः मागधा मगधदेशस्वामिनः तेषां कुले संभवो येषां ते राजकुमाराः । स्कन्धेति स्कन्धेन भुजशिरसोत्तम्भिता ऊढास्तीर्थवारिकलशाः गङ्गादितीर्थजन्यजलपूरिता घटा यैस्तथाभूताः अभिषेकं अभिषेकसाधनं वस्तुजातमित्यर्थः । अत्र धारयन्तास्तिष्ठन्तीत्यत्र धारयन्तीति क्वचित्पाठः । विश्वनाथादिभिः पुनर्नायमादृत इत्युपेक्षितः । बहुभिश्चापरैरपि नादृतमित्युपेक्षितं ‘ व्यासोऽयं भगवानमी च मुनयो वाल्मीकिरामादयो धृष्टद्युम्नमुखाश्च सैन्यपतयो माद्रीसुताधिष्ठिताः । प्राप्ता मागधमत्स्ययादवकुलैराज्ञाविधेयैः समं स्कन्धोत्तम्भिततीर्थवारिकलशा राज्याभिषेकाय ते । ’ इत्येतत्स्पष्टार्थं पद्यमपि । एतेन च प्राप्तराज्यस्याभिषेकेण स्थिरीकरणात्कृतिर्नाम निर्वहणसन्धेरङ्गम् । तदुक्तम् ‘ लब्धार्थागमनं कृतिः । ’ इति दर्पणे । अहामिति विप्रकृतं अस्वस्थान्तरं गमितं व्याकुलीकृतमिति यावत् । उपलभ्य ज्ञात्वा ।

**भीमसेनः**——( सरोषम् ) क्वासौ धार्तराष्ट्रसखः पुण्यजनापसदो येनार्यस्य महांश्चित्तविभ्रमः कृतः । ( ग्वु )

**कृष्णः**——निगृहीतः स दुरात्मा नकुलेन । तत्कथय महाराज ! किमस्मात्परं समीहितं संपादयामि । ( ग्वू )

**युधिष्ठिरः**——देव पुण्डरीकाक्ष ! न किंचिन्न ददाति भगवान्प्रसन्नः । अहं तु पुरुषसाधारण्या बुद्ध्या संतुष्यामि । न खल्वतः परमभ्यर्थयितुं क्षमः । पश्यतु देवः । ( ग्वे )

क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाक्षतास्ते वयं
पाञ्चाल्या मम दुर्नयोपजनितस्तीर्णो निकारार्णवः ।
त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृतो भाषसे
किं नामान्यदतः परं भगवतो याचे प्रसन्नादहम् ॥ ४४ ॥

---

( ग्वु ) धार्तराष्ट्रसखो दुर्योधनस्य मित्रम् । पुण्यजनापसदः पुण्यजनेषु राक्षसेषु अपसदो नीचः । ' यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ' इत्यमरः । ( पुण्यो विपरीतलक्षणया पापो जनः पुण्यजनः ) । आर्यस्य युधिष्ठिरस्य । चित्तविभ्रमश्चेतसो भ्रान्तिः ।

( ग्वू ) निगृहीतो दण्डितः । अत्र गृहीत इति क्वचित्पाठः । समीहितं अभीष्टं तवेत्यर्थात् संपादयामि करोमि तत्कथयेति संबन्धः । अत्र वरप्रदानप्राप्तेरुपवर्णनात्काव्यसंहारो नाम निर्वहणसन्धेरङ्गम् । तदुक्तं दर्पणे ' वरप्रदानसंप्राप्तिः काव्यसंहार इष्यते । ' इति ।

( ग्वे ) देवेत्यत्रैवामिति क्वचित्पाठः । स च न युक्तः अविनीतत्वापत्तेरिति । किंचित्किमपि न न ददाति सर्वमपि ददात्येवेत्यर्थः । द्वौ नञौ प्रकृतमर्थं द्रढयत इति। तत्किमिति भूयिष्ठं न याच्यत इत्यत्राह अहमिति । तु तथापीत्यर्थः । पुरुषसाधारण्या पुरुषेषु साधारणी सामान्या तया इतरपुरुषबुद्धिसदृश्येत्यर्थः । बुध्या विशिष्ट इत्यर्थः । संतुष्यामि तृप्तिं प्राप्नोमीत्यर्थः । यद्यपि भवान्सर्वमपि प्रदातुं क्षमस्तथापि मानुषसाधारणी मे बुद्धिर्यल्लब्धं तदेव बहु मन्यमाना संतृप्यतीति नाधिकोऽभिलाष इति भावः । अतः परं यल्लब्धं तस्मात्परम् । देवः भवान् कृष्णः । साधारण्येत्यत्र साधारणयेति पाठः प्रामादिकः । अत्र हि गौरादित्वान्ङीष् भवतीत्याहुः ।

( ४४ ) यल्लब्धं तदाख्यानपूर्वकं लब्धव्यान्तरे निरपेक्षतामाचष्टे क्रोधान्धैरिति । क्रोधान्धैः क्रोधेन लुप्तविवेकदृष्टिभिः यैरिति तच्छब्दबलाल्लभ्यते । सकलं रिपुकुलं शत्रुसमूहः हतं ते वयं पञ्च पाण्डवा इत्यर्थात् अक्षता नास्ति क्षतं व्रणो येषां तथाभूताः व्रणमप्यनवाप्ता इत्यर्थः । एतेन भगवतः कृपाया महिमातिशयो व्यज्यते । पा

तथापि प्रीततरश्चेद्भगवांस्तदिदमस्तु ।

अकृपणमरुक्श्रान्तं जीव्याज्जनः पुरुषायुषं
भवतु भगवन्भक्तिर्द्वैतं विना पुरुषोत्तमे ।
दयितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवि-
त्सततसुकृती भूयाद्भूपः प्रसाधितमण्डलः ॥ ४५ ॥

---

ञ्चाल्या द्रौपद्या कर्त्र्या मम दुर्नयोपजनितः दुष्टो नयो द्यूतविशेषो दुर्नयस्तेन उपजनित उत्पादितः । 'नयो नीतिद्यूतविशेषयोः ।' इति मेदिनी । दुर्नयो दुष्टा नीतिर्द्यूतेन संपदासादनलक्षणेति वात्रार्थो बोध्यः । निकारार्णवः निकारः परिभव एव अर्णवः समुद्रोऽपारत्वात् । 'निकारः स्यात्परिभव' इति मेदिनी । तीर्णः लङ्घितः । पुरुषोत्तमः पूर्षु शरीरेषु शेरते वसन्तीति पुरुषा जीवास्तेभ्य उत्तमः क्लेशकर्मविपाकाशयैरपरामृष्टत्वाच्छ्रेष्ठः पुरुषोत्तमः ईश्वर इत्यर्थः । तदुक्तं भगवता पतञ्जलिना क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर' इति ( क्लेशः क्लेशहेतवोऽविद्यादयः, कर्माणि विहितप्रतिषिद्धव्यामिश्ररूपाणि, विपाकाः कर्मफलानि, आशयो वासनाख्यः संस्कारः तैरपरामृष्टः कालत्रयेऽप्यसंसृष्टः पुरुषविशेषः अन्येभ्यः पुरुषेभ्यो विशिष्यप्राणः ) देवः त्वं सुकृतिनं सुकृतं पुण्यमस्त्यस्य तथाभूतम् । न हि भवता समं भाषणयोगो विना सुकृतं सुघट इति सुकृत्येवाहमिति प्रतीयत इति भावः । मां आदृतः आदरयुक्तः सन् भाषसे ब्रूषे । अतः अहं प्रसन्नात् परितुष्टात् भगवतस्त्वत्त इत्यर्थः । अतः परं किं नाम याचे । सर्वथा पूर्णा मे मनोरथा इति न किंचिदपि याचनीयमिदानीमवशिष्टमिति भावः ।

( ४५ ) अकृपणमिति । जनो लोकः अकृपणं, कृपणमिति भावप्रधानो निर्देशः कार्पण्यमित्यर्थः । नास्ति कृपणं कार्पण्यं दैन्यं यस्मिन्कर्मणि तद्यथा तथा । 'महात्मा व्यसनं प्राप्तो दीनः कृपण उच्यते ।' इति रामायणम् । अरुक्श्रान्तं रुग्भिः रोगैः श्रान्तं प्राप्तश्रमं न स्याद्यथा तथा पुरुषायुषं पुरुषायुःपरिमितं कालं यावदित्यर्थः । अत्रायुः शब्दस्तत्परिमिते काले लाक्षणिकः । शतं वर्षाणीत्यर्थः । 'शतायुर्वै पुरुष' इति श्रुतेः । जीव्यात् जीवतु । आशिषि लिङ् । पुरुषायुषमिति अचतुरविचतुरेत्यादिना निपातनात्साधु । हे भगवन् श्रीकृष्ण पुरुषोत्तमे ईश्वरे द्वैतं विना भेदं विना भेदरहितेत्यर्थः । भक्तिः परमोऽनुरागः भवतु । आशिषि लोट् । 'अथातो भक्तिजिज्ञासा । सा पराऽनुरक्तिरीश्वरे ॥' इति शाण्डिल्यसूत्रम् । द्वैतमिति द्विधा द्वौप्रकारौ इतं प्राप्तं द्वीतं तस्य भावो द्वैतं द्वयं भेद इत्यर्थः । परमात्मना साकमात्मनो भेदाभावसाधनायैव तत्र नराणां भक्तिर्भवत्विति भावः । भूपः राजा दयितभुवनः दयितं प्रियं भुवनं भुवनवर्तिनो लोका यस्य तथाभूतः विद्वद्बन्धुः विदुषां मित्रं साहाय्यकृदित्यर्थः । 'बन्धुः स्यात्पुंसि बन्धूके मित्रे भ्रातरि बान्धवे ।' इति मेदिनी । गुणेषु विशेषवित् विशेषज्ञः उत्तमाधमत्वादिविशेषज्ञानवानित्यर्थः । सततसुकृती सततं

कृष्णः—एवमस्तु ।

( इति निष्क्रान्ताः सर्वे । )

## इति षष्ठोऽङ्कः ।

## इति श्रीभट्टनारायणकृतं वेणीसंहारम् ।

---

पुण्यसपन्नः प्रसाधितमण्डलः प्रसाधितं भूषितं मण्डलं देशो ( राष्ट्रं ) येन तथाभूतः । पूर्वोक्तगुणविशिष्टतया राष्ट्रस्य भूषणभूत इत्यर्थः । 'मण्डलं परिधौ कोठे देश' इति मेदिनी । भूयात् भवतु । आशिषि लिङ् । अत्र नृपस्य देशादीनां च शान्तेराशंसनात्प्रशस्तिर्नाम निर्वहणसन्धेरङ्गम् । तदुक्तं विश्वनाथेन 'नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते' इति । आशीर्नामालङ्कारः । ' आशीर्नामाभिलषिते वस्तुन्याशंसनम्' इति दण्डी । हरिणीवृतम् । 'नसमरसला गः षड्वेदैर्हयैर्हरिणी मता ।' इति लक्षणात् । अतःपरं च 'काव्यालापसुभाषितव्यसनिनस्ते राजहंसा गतास्ता गोष्ठयः क्षयमागता गुणलवश्लाघ्या न वाचः सताम् । सालङ्काररसप्रसन्नमधुराकाराः कवीनां गिरः प्राप्ता नाशमयं तु भूमिवलये जीयात्प्रबन्धो महान् ॥' इति पद्यं तदादौ च 'इदं च विदग्धस्निग्धवियोगदुर्मनसा विप्रलापितं तेन कविने'ति क्वचिदेवोपलभ्यते । नैतदादृतं बहुभिर्नापि विशेषतः संबद्धमप्रस्तुतत्वाकवेरित्युपेक्षितमस्माभिरिति शिवम् ।

नानातन्त्रविचक्षणः क्व सुकविः श्रीभट्टनारायणः<br>
क्वापि प्रज्ञजनानुशीलितपथाक्षुण्णा मदीया मतिः ।<br>
वाचां तस्य तथापि यद्यतनवं व्याख्यामिमां सन्मतां ।<br>
सोऽयं केवलमिन्दुचूडचरणाम्भोजद्वयानुग्रहः ॥ १

संत्यक्तसर्वविषयैः सुतरां मुनीन्द्रैः<br>
सप्रेम सन्ततमजं परिचिन्त्यमानम् ।<br>
सर्वस्वमागमगिरां गिरिजार्धकायं<br>
सच्चिद्घनं मनसि वस्तु तदस्तु नस्तु ॥ २

**इति श्रीमत्पण्डितराजवंशावतंसश्रीमत्कान्ताचार्यसूरिणां छात्रेण वासिष्ठेन श्रीमत्सदाशिवबुधेन्द्रतनुजन्मना गीर्वाणवाणीपरिचरणबद्धादरेण नैकविधगद्यपद्यप्रबन्धसंग्रथनसमासादितपृथुयशसा मालविकाग्निमित्रव्याख्यानमारचितवता वङ्गीयविबुधमण्डलीसमर्पितविद्यावाचस्पतिबिरुदेन वाराणसेयश्रीमद्भारतधर्ममहामण्डलोपहृत' वलङ्कारमहोहदेशकोपाधिना राशिवडेकरोपाह्वेन श्रीमदप्पाशर्मणा विरचितायां बालबोधिन्याख्यायां श्रीमद्वेणीसंहारव्याख्यायां षष्ठोङ्कः ।**

# NOTES.

## Act I.

According to a well-known convention of the Sanskrit drama, the author opens the play with a *Nándî*, which, in this case, consists of three stanzas. नान्दी is derived as ' नन्दन्ति देवता अस्याः ' meaning ' ( it is so called ) because deities rejoice at it,' and it is defined as ' आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति कीर्तिता ॥ meaning ' a *Nandi* is properly so called when it contains a glorification of gods, Bramins, kings or the like, together with benedictory words. ' पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ' gives the convention about the length of the *Nandi*. So a *Nandi* may consist of eight or twelve *padas* and when we remember that a *pada* means either a word or a quarter of a stanza, we shall see what a difference there may be in length between the shortest possible *Nandi* and the longest. In the present case, as noticed above, it consists of twelve quarters of stanzas or three stanzas and is, therefore, of maximum length. For a *Nandi* consisting of twelve *padas* in the sense of ' twelve words ' compare इदं कविभ्यः पूर्वेभ्यो नमो वाकं प्रशास्महे । विन्देम देवतां वाचममृतामात्मनः कलाम् ॥ of the Uttararamacharita.

But it is worth noting that there are many plays whose *Nandis* do not conform to this convention as to length. Kálidása, for instance, does not observe this rule; the *Nandis* of his plays are of any length but that prescribed. This fact shows that the convention about the length of the *Nandi* as embodied in the line quoted above is probably of a later origin and did not exist perhaps in the time of Kálidása and other classical writers who seem to have taken no cognizance of it in the construction of their *Nandi*.

St. 1. संभिन्नमुकुलः ( अत एव ) निर्विद्धैरपि एभिः मधुकरैः डलितमकरंदः, इन्दोः करैः अन्तः छुरित इव, अयं हरिचरणयोः प्रकीर्णः पुष्पाणां अञ्जलिः अस्य सदसः नयनसुभगां नः सिद्धिं विधत्ताम् ।

अञ्जलिः—The two hands held side by side and slightly hollowed. Comp. Marathi ओंजळ.

पुष्पाणां अञ्जलिः—Quantity of flowers contained in an अञ्जलि.

*Translation* :—Here these flowers, lying in the hollow formed by the two palms, which are all full-blown and which, consequently, have their juice stirred about by these bees, notwithstanding their being warded off, and which thus look as if they were lined, on the inside, with the rays of the moon—May these flowers, as they are being scattered about here at the feet of the divine Vishnu, bring such success to our performance as might gratify the eyes of this assembly !

संभिन्नमुकुलः—संभिन्नाः मुकुलाः यस्मिन्. In which the buds are all opened.

ललितमकरन्दः—ललितः मकरन्दः यस्मिन्—of which the juice is stirred about.

P. 2. St. 2. कालिन्द्याः पुलिनेषु केलिकुपितां, रासे रसं उत्सृज्य गच्छन्तीं, अश्रुकलुषां राधिकां अनुगच्छतः तत्पादप्रतिमानिवेशितपदस्य उद्भूतरोमोद्गतेः प्रसन्नदयिताद्दृष्टस्य कंसद्विषः अक्षुण्णः अनुनयः वः पुष्णातु ।

केलिकुपिताः—केल्या कुपिता—Angry for very sport, angry with sham anger, offended in the course of amorous sports.

रासः—A kind of dance in a circle, danced by Krishna and the *Gopis*.

रासे रसं उत्सृज्यः—Having renounced all interest in that dance

तत्पाद &c.—तस्याः ( राधिकायाः ) पादप्रतिमासु निवेशिते पदे येन सः. Who proceeded, setting down his feet on the foot-prints of Rádhiká.

उद्भूतरोमोद्गतेः—उद्भूता रोम्णां उद्गतिः यस्य सः —In whom the bristling of hair—the phenomenon of the hair standing on end—has appeared ; of course, on account of a sudden transport of joy experienced ou setting down his feet on Rádhiká's foot-prints.

अनुनयः —Act of conciliating, attempt to conciliate.

अक्षुण्णः —Not trampled upon, hence not frustrated, not baffled. क्षुण्ण is past part. of क्षुद्, to trample upon.

*Translation* :—The unbaffled effort to conciliate ( राधिका ) on the part of the enemy of Kansa ( that is, Krishna, ) who was at

last looked at by his beloved with a pleased look on the occasion when Rádhiká having got offended in the course of amorous sports on the sands of the Kálindi, walked away all tearful, renouncing all interest in the dance called *Rasa* and Krishna forthwith set off in pursuit of her and, as he trod upon the foot-prints of Rádhiká, his hair stood on end ( through transport of love ).—May that successful effort to conciliate ( राधिका ) on the part of Krishna lead you on to prosperity !

(Or to render the verse a little more freely,)

May the success of Krishna's effort to conciliate ( Rádhiká ) in that he was at last looked at by his beloved with a pleased look on the occasion when Rádhiká, having got offended in the course of amorous sports, walked away all tearful, renouncing all interest in the *Rasa* dance and Krishna forthwith set off in pursuit of her and, as he set down foot after foot on the foot-prints of Rádhiká, had his hair standing on end for very transport of amorous delight, lead you on to prosperity !

P. 4. St. 3. शान्तान्तस्तत्वसारैः (ऋषिभिः)—शान्तं अन्तस्तत्वं शान्तान्तस्तत्वं-तत् सारः येषां ते. With whom a quiet soul is the most valued possession.

उपशमितवधूसंभ्रमैः— उपशमितः वधूनां संभ्रमः यैः तैः—Who quieted the fears of their wives.

*Translation* :—May that god Shiva protect you !—the god who, at the time of the burning of the cities constructed by the demon architect, मय, was gazed upon by the goddess, Párvati, with a loving look, by demonesses with terror and confusion, wondering what the phenomenon meant, gazed upon with feelings of pity by sages with whom quiet and peace-loving hearts are of the very essence of existence, gazed upon by Vishnu with a smile, by demon warriors with arms taken up in proud defiance while at the same time allaying the panic of their wives, and by gods with satisfaction.

Three mighty demons rendered powerful by a boon won with austere penance, got three strongholds constructed by the demon architect, Maya, and, by means of these, set about molesting the whole universe. None but the god Shiva could destroy these cities.

He set them on fire and, at the terrific scene, he was regarded by different parties with different feelings. He was beheld by Vishnu with a smile, which signified that Vishnu wondered why Shankara made so much fuss about burning the three cities which were but a straw to him.

The author employs the artifice, as dramatists often do, of conveying through the subject-matter of the *Nandi* an indication of the nature of the action in the play itself. Thus in the second stanza Rádhá's sulking and Krishna's pacifying her suggest Draupadi's long smarting under insults without redress and Bhîma's eventual soothing of her wrath by effecting the long-sought revenge. Similarly in the third stanza, Shankara's performance of a terrific feat of revenge and his being gazed upon by different parties with different feelings, allegorically suggest Bhima's accomplishment of terrible revenge on the demon-like Duhshasana and others and his being then regarded by different parties with different feelings. For a detailed explanation of this allegorical application of the stanza, vide commentary.

P. 5. अलमतिप्रसङ्गेन—Enough of this prolixity. अलं used idiomatically with the instrumental with a prohibitive force.

St. 4 यः श्रवणाञ्जलिपुटपेयं भारताख्यं अमृतं विरचितवान् तं अरागं अकृष्णं कृष्ण-द्वैपायनं अहं वन्दे ।

**श्रवणाञ्जलिपुटपेयं**—श्रवणं एव अञ्जलिपुटं, तेन पेयम्. To be drunk with the hollow of the palms held side by side, (the ओंजळ), namely, the ear.

**अरागं**—अविद्यमानः रागः ( रजोगुणः ) यस्य सः, तम्—Free from passion, passionless.

**अकृष्णं**—अविद्यमानः कृष्णः ( तमोगुणः ) यस्य सः, तम्—Free from darkness or ignorance.

**कृष्णद्वैपायन**—The name of Vyása. He acquired the compound name from the circumstance of his being कृष्ण, that is, of a dark complexion, and also द्वैपायन, that is, born in the island of the Yamuná, the word द्वैपायन being derived as द्वीपः (यमुनाद्वीपः) अयनं ( जन्मभूमिः, ) यस्य सः द्वीपायनः, स एव द्वैपायनः.

I bow to that Vyasa, so free from all passion and all ignorance, who manufactured the nectar called the **Mahábhárata**, to be drunk with the cavity of the hands, namely, the ears.

P. 6. St. 5. अपरः कुसुमाञ्जलिः इव एष काव्यबन्धः अत्र प्रकीर्यते । मधुलिहः मधुबिन्दूनिव विरलानपि गुणलेशान् भजत ।

Here a new composition will be strewed before you like another quantity of flowers out of the hands; please, pick up the slender beauties, however few and far between, as bees pick up particles of honey (from the flowers).

P. 7. **कवेर्मृगराजलक्ष्मणः भट्टनारायणस्य.**

This description probably refers to the fact that भट्टनारायण bore in all likelihood, some such distinctive family name as सिंह. मृगराज इति लक्ष्म यस्य सः मृगराजलक्ष्मा, तस्य—Who bore the distinctive designation, that is, the family name or surname, सिंह. There are still families in Bengal bearing the surname, सिंह, and some of these may be descended, perhaps, from Bhattanáráyana's family.

The commentator's explanation of this epithet is rather ingenious. भट्ट is a prefix denoting high learning.

**वेणीसंहारं** as the name of the play is explained either as वेण्या (निमित्तेन) संहारः (कौरवाणां) प्रतिपाद्यविषयः अस्य नाटकस्य, or as वेण्याः दुःशासनेन लुलितायाः संहारः संयमनं कृतं भीमेन, तदत्र वर्णितम्. According to the former interpretation, the name refers to Draupadi's braid of hair having proved the cause of the destruction of the Kauravas. According to the latter interpretation, the name refers to the fact that Draupadi's braid of hair, having been rudely handled and dishevelled by Duhshasana, was eventually re-arranged by Bhima with the blood of Duhshasana whom he had recently slain.

**तदत्र कविपरिश्रमानुरोधाद्वा** &c.—So I request you to pay attention to this performance, whether out of regard for the labours of the poet or out of reverence for the lofty story of the play or out of curiosity to see a new play acted.

कवेः परिश्रमस्य अनुरोधः तस्मात्.
उदात्तं कथावस्तु, तस्मिन् गौरवम्, तस्मात्.
नवस्य नाटकस्य दर्शने कुतूहलम्, तस्मात्.

P. 8. **शैलूषजनं:—Actors in general.**

प्रवर्त्यन्तां &c. :—Let all things be put into readiness so that nothing be left wanting; let, for instance, the different kinds of musical instruments be properly arranged or disposed. Let all such operations as the disposition of musical instruments be commenced at once and nothing left wanting.

अपरिहीयमानं is used adverbially.

आतोद्यं:—Four kinds of musical instruments ; (1) ततं, a stringed instrument such as the harp or the lute; (2) आनद्धं, a drum; (3) सुषिरं, a wind instrument such as a flute made from a bamboo and (4) घनं, an instrument like a cymbal.

मुनिवृन्दारकैः—May mean (1) By sages and gods, for वृन्दारक means a god; or (2) by conspicuous sages, for वृन्दारक at the end of a compound means ‘ Chief of. ’

P. 9. अहो नु खलु भोः &c. Oh joy ! The divine Vishnu, that wields the power of creating, sustaining and re-absorbing the whole universe, has this day done a great favour to the whole Bharata family–nay, to the whole body of princes–in that he has personally been acting as messenger negotiating for peace and has thus been instrumental in extinguishing the great fire of world—destruction, namely, the deadly fight between the Kaurava and the Pándava princes.

P. 11. St.6 सत्पक्षाः मधुरगिरः प्रसाधिताशाः मदोद्धतारम्भाः धार्तराष्ट्राः कालवशात् मेदिनीपृष्ठे निपतन्ति । As a peculiarity of this season, there descend on earth flights of geese with beautiful feathers, uttering sweet notes, beautifying the quarters ( in the conrse of their migration from the Mánasa lake ) and indulging in all manner of wild activities through joy.

This is the ostensible meaning of the stanza but the words suggest another meaning which is inauspicious to contemplate and which is the one that presents itself to the listener in this case. That meaning is :

The sons of Dhritaráshtra who have strong supporters or [illegible]tisans, who are honey–tongued, who have won over all the [illegible]rs [or who have realised all their ambitions, for प्रसाधिताशाः may [illegible] प्रकर्षेण साधिताः आशाः ( दिशः ) यैः or साधिताः ( प्राप्ताः ) आशाः

नोरथाः ) यैः ] and who are indulging in all manner of lawless
ivities through arrogance, must soon lie prostrate on earth in the
eness of time. निपतन्ति, the present tense, must, in this case, be
:en as denoting near future.

P. 12. शान्तं पापम् । प्रतिहतममङ्गलम् । Sin be allayed ! Evil be
verted ! शरत्समयवर्णनाशंसया etc.—In my desire to describe the
:umnal season, I happened to use the word धार्तराष्ट्रः to denote
eese; so what signifies your pious wish as expressed in "शान्तं
। प्रतिहतममङ्गलम् "?

P. 13. यत्सत्यम् To tell the truth, indeed.

St. 7 अरीणां प्रशमात् निर्वाणवैरदहनाः पाण्डुतनयाः माधवेन सह नन्दन्तु ।
प्रसाधितभुवः क्षतविग्रहाश्च कुरुराजसुताः सभृत्याः स्वस्थाः भवन्तु ।

May the sons of Pándu rejoice in company with Krishna,
› fire of their feeling of hostility being all quenched through the
:onciliation of their enemies ! May the sons of Dhirtaráshtra
;ether with their servants settle down to peace, dividing the ter-
ories among those attached to them and having their war for
er ended !

Here again there is equivocation and the ominous meaning
ggested is :—

May the sons of Pándu rejoice in company with Krishna, the
› of their enmity being quenched through the annihilation of
› enemies ! May the sons of Dhritaráshtra together with their
vants go to dwell in Heaven (*i.e.* die), decorating the earth
:h their blood and leaving their bodies stabbed through and
'ough !

प्रशमः (1) Reconciliation ; (2) annihilation or death.

रक्तप्रसाधितभुव : (1) रक्तेभ्यः अनुरक्तेभ्यः प्रसाधिता दत्ता भूः यैः ते.

Or, according to Nágoji Bhatta, रक्ता ( अनुरक्ता ) प्रसाधिता ( प्रकर्षेण
धेता ) भूः यैः ते. By whom the earth ( that is, the different pro-
.ces ), already well-affected, is further won over completely. This
)ears to be Nágoji Bhatta's interpretation. He seems to take
· as attributively qualifying भूः and प्रसाधिता as predicatively
ılifying ; but in this case, the collocation of the members of the
npound ought rather to be प्रसाधितरक्तभुवः. Nor can both the

adjectives, रक्ता and प्रसाधिता, be taken as qualifying भ्रूः predicatively; for रक्ता ( अनुरक्ता ) भ्रूः यैः is absurd.

(2) रक्तेन प्रसाधिता अलंकृता भ्रूः यैः ते.

क्षतविग्रहाः (1) क्षतः अन्तं गमितः विग्रहः संग्रामः येषां ते.

(2) क्षताः विग्रहाः देहाः येषां ते.

स्वस्थाः (1) सुस्थाः, सुखेन स्थिताः.

(2) स्वः स्वर्गे स्थिताः.

In the latter case the Visarga of स्वः is legitimately dropped before स्थ.

शैलूषापसद—शैलूषश्चासौ अपसदश्च ! Oh wretch of an actor !

St. 8. Dare you express the wish that the sons of Dhritaráshtra may live in peace and happiness, while I am alive, notwithstanding that they have attempted against our lives and against our wealth by putting us into a house of lac and setting fire to it, by poisoning my food and by tempting us into the gambling hall and notwithstanding that they have pulled the hair and the clothes of the wife of the Pândavas ?

P. 15. पृथुललाटतट......नः सर्वान्—Drinking us up all, as it were, with a glance characterised by a fierce frown worn on the broad forehead.

पृथुनि ललाटतटे घटिता विकटा भ्रुकुटिः यत्र एतादृशः दृष्टिपातः।

P. 16. Here ends the प्रस्तावना. Bhima takes up the last words of the सूत्रधार in substance and enters the stage, ruminating upon them in anger. A प्रस्तावना that employs this mode of introducing the play by a character overhearing and repeating the last words of the prelude, is technically called कथोद्घात. It is also adopted in the Mudrárákshasa though with a slight difference which, however, makes that प्रस्तावना not exactly a कथोद्घात but an उद्घात्यक, another kind of प्रस्तावना. There are other kinds of प्रस्तावना such as प्रयोगातिशय, प्रवर्तक and अवलगित. The प्रस्तावना of the Shákuntala is, for instance, प्रयोगातिशय, where the first character enters immediately after the सूत्रधार has directly announced his appearance.

सानुनयम्। In a persuasive tone. सहदेव repeats the Sutradhara's utterance with a tone and gestures calculated to bring out the ominous meaning of the stanza.

सोपालम्भम्:—Tauntingly, in a tone of irony.

सन्धेया:—Fit to be treated with.

P. 17. St. 9. राजा निषेद्धा न स्याच्चेत् पदे पदे कृतवैरान् धृतराष्ट्रस्य तनयान् तवानुजः कः क्षमेत ।

If the King (युधिष्ठिर) were not to restrain or prohibit, which of your younger brothers would forgive the sons of Dhritaráshtra that have given us provocation at every step ?

कृतवैरा:—कृतं वैरं यैः ते, who have given offence or provocation, who have actively fostered hostility.

St. 10. शिशोरेव मम कुरुभिः यद्वैरं प्रवृद्धं खलु तत्र न आर्यो हेतुर्भवति न किरीटी (भवति) न च युवां (भवतः) । पुनरपि विरूढं जरासंधस्योरःस्थलमिव भीमः क्रुधा सांधिं विघटयति यूयं घटयत ।

With regard to my enmity with the Kauravas which, indeed, grew up while yet I was a child, neither our worthy brother ( युधिष्ठिर ), nor Arjuna nor you two have been the cause. Bhima shall angrily break up the peace as he did the chest of Jarásandha, which healed up again ( as often as it was split ); do you restore it ( as best you may ).

The argument is that Bhima's enmity with the Kauravas is all his own and none of his brothers is really concerned in it. That is reason enough why he should not agree with his brothers in their policy to make peace—why he would have his own way and pursue the policy of keeping alive the enmity till he should have his revenge upon the enemy.

जरासंध—Jarásandha was a Kshatriya king born with a body, not whole and sound, but lying in two parts asunder. The two parts were joined into one by a Rákshasi, named Jará. The result was that Jarásandha thenceforward carried a sort of charmed body and when Bhima split his chest into two, the two parts flew together and formed into one; till at last Bhima came to know the secret and he cast the two parts of the body crosswise, instead of allowing them to lie side by side and then the slaughter was final.

P. 18. किंनाम &c.—Do you talk of our worthy brother feeling,

perhaps, aggrieved or pained? Does he know what it is to be pained or when to be pained?

St. 11. नृपसदसि पाञ्चालतनयां तथाभूतां दृष्ट्वा वने वल्कलधरैः ( अस्माभिः ) व्याधैः सार्धं सुचिरं उषितम् । विराटस्यावासे अनुचितारम्भनिभृतं स्थितम् । अद्यापि गुरुः कुरुषु खेदं न भजति । मयि खिन्ने खेदं भजति ।

After having helplessly looked on Pánchâli in that miserable plight at the royal court, we sojourned long in the woods, wearing bark garments, in the company of hunters. Then we dwelt at the court of Viráta, *incognito*, engaged in the most unworthy occupations. And yet our worthy brother cannot feel aggrieved against the Kauravas; while he is pained when I am filled with resentment.

**अनुचितारम्भनिभृतम्**—अनुचिताः आरम्भाः, तैः निभृतं यथा स्यात् तथा.

**अनुचिता** &c.—**स्थितम्**—We remained unknown or effectually disguised by undertaking or resorting to most unworthy occupations.

**अतिचिरप्रवृद्धामर्षोद्दीपितस्य** (भीमस्य)–अतिचिरं प्रवृद्धः अमर्षः, तेन उद्दीपितस्य. Inflamed with a rage of long growth.

P. 20, St. 12. मया नाम युष्मच्छासनलङ्घनांहसि मग्नेन स्थितम् । स्थितिमतामनुजानां मध्येऽपि विगर्हणा नाम प्राप्ता । क्रोधोल्लासितशोणितारुणगदस्य कौरवानुच्छिन्दतः मम अद्यैकं दिवसं गुरुर्नासि । नाहं तत्र विधेयः ।

**क्रोधोल्लासित......गदस्य**—शोणितेन अरुणा गदा शोणितारुणगदा.
क्रोधेन उल्लासिता शोणितारुणगदा येन सः.

*Translation*:—I confess I shall remain plunged in the sin of disobeying your bidding. I confess I shall stand exposed to censure even among my younger brothers who have remained so loyal to their duty. But all the same, you shall not be my elder brother nor I your obedient servant for this one day while I freely brandish my gory mace and go about slaughtering the Kauravas.

युष्मच्छासनलङ्घनाम्भसि is another reading and makes fairly good sense but the metaphor is far-fetched. The meaning would be 'plunged in the water, namely, the violation or transgression of your bidding.'

**स्थितिमताम्**—who maintain their moral rectitude. नाम occurs twice and means, in each case, 'granted that', 'admitting that.'

स्थितम्, प्राप्ता &c. are past participles not to be understood in

their literal force but as denoting immediate future about which there is no uncertainty.

**विधेयः** आज्ञाकरः, obedient, subordinate, tractable.

P. 21. **चतुःशालकम्**—चतसृणां शालानां समाहारः. द्विगु समास. A quadrangle enclosed by four buildings.

**आमन्त्रयितव्या**—To be taken leave of.

प्रच्छ् with आ is also used in this sense.

**आमन्त्रयितव्यैव मया पाञ्चाली**—'To take leave of Pánchálí too does form part of my business.' This consideration determines Bhîma amid his wavering as to whether he should pause at the quadrangle or turn to the arsenal where his more immediate business lay. Dramatically this prepares the ground for the coming dialogue between Bhîma and Draupadi, which is the principal scene of the First Act.

**यदार्यः कुरुभि.......पश्यतु**—You can yourself bear witness how our worthy brother is afflicting us with his solicitude to make peace with the Kauravas.

P. 22. **पालयतु कृष्णागमनम्.** पालयतु=प्रतिपालयतु=Please wait for the arrival of Pánchálí.

Bhima says the name कृष्णा in कृष्णागमनम् puts him in mind of कृष्ण and his mediation for peace, and takes occasion to inqnire on what terms the peace is proposed.

P. 23. **तेजोऽपकर्षः**—Loss of spirit, degradation of power or prestige.

**यत्सत्यं कम्पितमिव मे हृदयम्**—my heart trembles, indeed, at the very thought etc.

St. 13. यद् अस्य भूपतेः तत् ऊर्जितं अत्युग्रं क्षात्रं तेजः तदपि अनेन तदा अक्षैः दीव्यता नूनं हारितम् ।

*Translation* :—That high, awe-inspiring warlike spirit which once characterised the King has been parted with, too, by him ( among other possessions ) in gambling with dice on that notorious occasion.

**हारितम्**—Past participle from the causal of हृ.

P. 24. **मुहुरुपचीयमानबाष्पपटलस्थगितनयना**—मुहुः उपचीयमानः बाष्पः,

